संस्कृतविद्यापीठग्रन्थमालायाः षडशीतितमं पुष्पम्

# बृहत्त्रयीपरिशीलनम्

## ( काव्यशास्त्रीयखण्डः )

सम्पादकः

डॉ. भागीरथिनन्दः




श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्
( मानितविश्वविद्यालयः )
नवदेहली-110016

संस्कृतविद्यापीठग्रन्थमालायाः षडशीतितमं पुष्पम्

# बृहत्त्रयीपरिशीलनम्

## काव्यशास्त्रीयखण्डः


प्रधानसम्पादकः

**प्रो. राधावल्लभत्रिपाठी**

कुलपतिः

सम्पादकः

**डॉ. भागीरथिनन्दः**




**श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्**

(मानितविश्वविद्यालयः)

**नवदेहली**

प्रकाशकः
श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्
(मानित-विश्वविद्यालयः)
कुतुब सांस्थानिकक्षेत्रम्
नवदेहली-११००१६

(UGC से अनुदान प्राप्त SAP (DRS-I) संस्कृत साहित्य श्री लाल बहादुर शास्त्री राष्ट्रिय संस्कृत विद्यापीठ, नई दिल्ली द्वारा प्रस्तुत)

आई.एस.बी.एन : 81-87987-59-6

प्रकाशनवर्षः - 2013



मूल्यम् : 230/- ₹

मुद्रकः
**अमरप्रिंटिंगप्रैसः**
देहली-११०००९
दूरभाषः : 9871699565, 8802451208

प्रो. राधावल्लभत्रिपाठी
कुलपति: (प्रभारी)
श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्
बी-४, कुतुब-इन्स्टीट्यूशनलएरिया, नवदेहली-110016



**Prof. Radhavallabh Tripathi**
Vice-Chancellor (I/c)
Shri Lal Bahadur Shastri Rashtriya Sanskrit Vidyapeetha
(Deemed University)
B-4, Qutub Institutional Area, New Delhi-110016

# पुरोवाक्

विश्वविद्यालयानुदानायोगस्यार्थानुदानेन श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठस्थसाहित्यविभागेन परिचालितया बृहत्त्रयी-बृहत्कोश-परियोजनया खण्डत्रयेण बृहत्त्रयीपरिशीलनमित्याख्यं नानानवविचारनिर्भरं पुस्तकं प्रकाश्यत इति हर्षप्रकर्षमनुभवति मे मनः। शास्त्रपरिनिष्ठित-प्रतिष्ठितविदुषां विचारा अत्र शोधलेखरूपेण सङ्कलय्य प्रकाशिताः साहित्यविचारवाङ्मये नवां दिशमाविष्करिष्यन्तीति नात्र संशयः।

जानन्त्येव विपश्चितो यत् समग्रसाहित्यवाङ्मये बृहत्त्रय्याः स्थानं विशिष्टम्। तद्गतञ्चाध्ययनमप्यध्येतॄणां विशेषत्वं प्रमाणीकृत्य विद्वन्निकषोपलत्वमात्मनः सन्दर्शयति। बृहत्त्रय्यां विद्यमानमनितरसाधारणं गौरवं यावद्वर्णितमप्यवशिष्यते, तथापि सुधियः स्वीयनवनवदृशा तदुन्मीलने प्रयतमाना वर्तन्त इतीयं काऽपि गतानुगतिकी भारतीयचिन्तनप्रज्ञापरम्परेति प्रत्येतुं शक्नुमः। श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठस्य साहित्यविभागो विश्वविद्यालयानुदानायोगेन विशेष-सहायता-योजनायाम् (Special Assistance Programme इत्याख्यायाम्) अनुदानाय स्वीकृतः, बृहत्त्रयी चास्यां योजनायां विशिष्टानुशीलनक्षेत्रं स्यादिति च निर्धारितम्। अतश्च बृहत्त्रयीविषये बृहच्छोधयोजना एतस्मिन् विभागे प्रवर्तत इति युज्यत एव। अस्मिन् क्रमे ग्रन्थस्यास्य प्रकाशनं जायत इति महदिदं नः परितोषस्थानम्। नूनमिदं परिशीलनं विदुषामुपकाराय प्रभवेदिति विश्वसिमि।

६.१.१३

**प्रो. राधावल्लभः त्रिपाठी**

कुलपतिः

# सम्पादकीयम्

गुणब्रह्मगगनपक्षाख्ये (2013) नवसंवत्सरे वसुमतीं स्पृशति सति विश्वविद्यालयानुदानायोगविशिष्टानुदानपरिचालितपरियोजनापक्षतः श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठसाहित्यविभागेन खण्डत्रयेण बृहत्त्रयीपरिशीलनमात्मप्रकाशं लभत इति सुतरां सुखावहोऽयं क्षणो नः। वर्षत्रयात् पूर्वमारब्धाया अस्याः बृहत्त्रयीपरियोजनायाः खण्डत्रयेण 2013 इति त्रिसङ्ख्यायुक्तसंवत्सरे आचार्यराधावल्लभत्रिपाठिनां कौलपत्यमधिष्ठिते सति परिश्रमयज्ञफलरूपेणेदं प्रकाश्य विदुषां नयनातिथिं कारयन्तो वयं त्रीति सङ्ख्यायाः परियोजनाहितकरत्वं विशेषतोऽनुभवामः। परियोजनाप्रस्तावपत्रे बृहत्त्रयी-बृहत्कोशखण्डान् त्रीनतिरिच्य प्रस्तावकैरस्माभिः पञ्च बृहत्त्रयीप्रस्तावखण्डाः परिकल्पिता आसन्, येषु त्रयः खण्डाः सम्प्रति विदुषां पुरत उपस्थाप्यन्ते। एषु परिचयाख्यः प्रथमः खण्डः, सांस्कृतिकाभिधो द्वितीयः, काव्यशास्त्रीयनामा च तृतीयः। एषु खाण्डेषु बृहत्त्रयीपरिशीलनक्षेत्रेऽनेकेषां कृतश्रमाणां लब्धयशसां विदुषां तत्सम्बद्धान्यभिमतानि तत्तत्प्रामाणिकलेखेषु प्रकाशितानि वर्तन्ते।

बृहत्त्रयीपदेन महाकविभारवि-माघ-श्रीहर्षैर्यथाक्रमं विरचितानि किरातार्जुनीय-शिशुपालवध-नैषधीयचरिताभिधानानि त्रीणि महाकाव्यानीति विदितचरमेव विपश्चिताम्। इयं हि बृहत्त्रयी-

**............................ भारवेरर्थगौरवम्।**
**नैषधे पदलालित्यं माघे सन्ति त्रयो गुणाः॥**

इति प्रसिद्धयोक्त्या महार्घ काव्यशास्त्रीयं सौन्दर्य समासादयन्ती प्रत्यक्षीक्रियते तज्ज्ञैः। किञ्च, **नारिकेलफलसम्मितं वचो भारवेः, माघे मेघे गतं वयः, नैषधं विद्वदौषधमि**त्यादिभणितयः प्रथयन्ति सुतरां प्रसिद्धिं बृहत्त्रय्याः। अपिच, सर्वशास्त्रपाण्डित्यप्रकर्षोऽप्येषु महाकाव्येषु पुरस्क्रियते।

संस्कृतपदप्रयोगपरम्परायाः सार्थकसमुन्मेषोऽप्यत्र विलोक्यते। अथ च, सामाजिक-सांस्कृतिकतत्त्वनिचयनिष्कर्षोऽपीह प्रकर्षं भजते। अर्थादेकेनैव वाक्येनेदं स्पष्टमभिधातुं न कुण्ठामहे यत् सर्वविधज्ञानराशिसन्धानपरिपूर्णतां बृहत्त्रयी प्रापयितुं गर्जति। अतः **''पाण्डित्यं यदि काङ्क्ष्यते बहुविधं काव्यत्रयी सेव्यताम्''** इति पण्डितानां केषाञ्चिद् वचो याथार्थिकम्।

इमामेवं बृहत्त्रयीमुररीकृत्य बृहत्कोशप्रस्तुत्यै विद्यापीठसाहित्यविभागेन 2009 वर्षे विश्वविद्यालयानुदानायोगात् सैप परियोजनाऽधिगता। विशेषपरिचयकथनं विना कोशप्रस्तुतिर्नीरसाऽपूर्णा च मा प्रतीयतामिति धिया खण्डानामेतादृशां प्रकाशने नः संरम्भः। शिष्टखण्डद्वयमपि प्रकाशयिष्यत आगामिकाले। कार्यस्यास्य सम्पूर्त्यै साहाय्यमाचरितवत्सु सदैव साधुप्रकाशनतत्परेषु आचार्यराधावल्लभत्रिपाठिवर्येषु विद्यापीठकुलपतिषु वयं कृतज्ञाः। शोधप्रकाशनविभागमुख्येभ्य आचार्यरमेशकुमारपाण्डेयवर्येभ्योऽपि तेषां साहाय्ययोगात् कार्तज्ञमाविष्कुर्मः। विद्यापीठकुलसचिवाः डॉ. विजयकुमारमहापात्रमहोदया अपि प्राशासनिकार्थिकानुकूल्यकारणान्नः कृतवेदिताग्राहकाः। अवसरेऽस्मिन् दिवङ्गतपूर्वकुलपतीन् आचार्यवाचस्पत्यु-पाध्यायानपि सविनयं स्मरामः। कृतज्ञतामपि विनिवेदयामः परियोजनापरामर्शदा-तृमण्डलीं प्रति। धन्यवादार्हाः सर्वेऽपि साहित्यविभागाध्यापकाः। साधुवादार्हौ च परियोजनासहायकौ जीवनकुमार-गोपालकुमारौ।

इदं हि बृहत्त्रयीपरिशीलन बुद्धिमतां बोधनविवर्धने रेणुकणतामु-पयात्वित्याशास्ते-

**प्रथमदिवसः** **डॉ. भागीरथिनन्दः**

2013

## अनुक्रमः

# श्रीहर्षाभिमता काव्यभारती

**प्रो. रहसविहारी द्विवेदी**

कान्यकुब्जेश्वराज्जयन्तचन्द्रात्ताम्बूलद्वयेन सभासनेन च सत्कृतस्य श्रीहीरमामल्लदेवीसुतस्य द्वादशख्रीष्टशतकोत्तरार्द्धे नैषधीयचरित-स्थैर्यविचार-प्रकरण-विजयप्रशस्ति-खण्डनखण्डखाद्य-गौडोर्वीशकुलप्रशस्ति-अर्णववर्णन-च्छिन्दप्रशस्ति-शिवशक्तिसिद्धि-नवसाहसाङ्कचरितचम्पूप्रभृतिग्रन्थप्रणेतुः श्रीहर्षस्य संस्कृत-साहित्यजगति महाकविदार्शनिकरूपेण महती प्रसिद्धिरस्ति। अनेन न च कश्चित्काव्यशास्त्रग्रन्थो व्यलेखि, तथाप्यनेन प्रणीते नैषधीयचरितमहाकाव्येऽस्य काव्यादर्शा यथास्थलमभिव्यञ्जिता निभाल्यन्ते। पत्रेऽस्मिन् श्रीहर्षस्य नैषधीयचरितमाश्रित्य तत्काव्यशास्त्रविषयकविचाराः प्रस्तूयन्ते। कविभेद-दिशाऽयं शास्त्रकविर्यथाह राजशेखरः–

**'भवति प्रथन्नर्थं लीनं समभिलुप्तं स्फुटीकुर्वन्।**
**अल्पमनल्पं रचयन्ननल्पमल्पं च शास्त्रकविः'।।**[1]

श्रीहर्षस्य स्वमहाकाव्यमुद्दिश्याभ्युक्तयोऽपि तथ्यमिदं पुष्णन्ति, यथा–

**'यथा यूनस्तद्वत्परमरमणीयापि रमणी**
**कुमाराणामन्तःकरणहरणं नैव कुरुते।**
**मदुक्तिश्चेदन्तर्मदयति सुधीभूय सुधियः**
**किमस्या नाम स्यादरसपुरुषानादरभरैः'।।**[2]

यथा परमरमणीयापि रमणी यूनस्तरुणस्य कामिनोऽन्तःकरणहरणं कुरुते, तद्वत्तथा कुमाराणां बालिशानां क्षीरलाभमात्रेण परमपुरुषार्थप्राप्ति-मभिमन्यमानानामननुभूतकामसुखानां चित्तं स्ववशं कैव कुरुते? अपि तु न

---

1. काव्यमी. द्वि. अ.
2. नैष. 22/150

कापि। तथेयं काव्यरचनारूपा परमरमणीया मदुक्तिरपि श्रवणमननादिवशात्सुधीभूयामृतत्वं प्राप्य सुधियः सकलदर्शनरहस्यवेदिनोऽतिसरसस्य पण्डितस्य चेतश्चेद्यदि मदयति आनन्दयति तर्ह्यस्याः सुधियाऽत्यादृताया मदुक्तेरसरसानां नीरसानां सर्वथैवासंस्पृष्टरसशब्दार्थानामपि चलदुपलप्रायाणामतृणादापुच्छपशूनामनादरभरैस्तत्कृतावज्ञासमूहैः किं नाम स्यात्, अपि तु न किञ्चिदप्यस्यास्तैरपकर्तुं शक्यते। सुधीभिरादृते सति नीरसैरकृते वाप्यादरे न किञ्चिदित्यर्थः। तथा च–

**'दिशि दिशि गिरिग्रावाणः स्वां वमन्तु सरस्वतीं**
**तुलयतु मिथस्तामापातस्फुरद्ध्वनिडम्बराम्।**
**स परमपरः क्षीरोदन्वान् यदीयमुदीयते**
**मथितुरमृतं खेदच्छेदि प्रमोदनमोदनम्'।।**[1]

अत्रैव पुनः– प्रसादरूपमुख्यगुणाभावादतिदुर्बोधत्वादकाव्यमिति ये वदन्ति तच्छङ्कामपनुदन् बलदर्पनार्थं गुरुसम्प्रदायेन विना दुर्बोधमित्यतिगाम्भीर्यप्रतिपादनार्थं च बुद्धिपूर्वमेव मयेदं काव्यं तत्र तत्र दुर्बोधं व्यरचीत्याह–

**'ग्रन्थग्रन्थिरिह क्वचित्क्वचिदपि न्यासि प्रयत्नान्मया**
**प्राज्ञं मन्यमना हठेन पठिती मास्मिन् खलः खेलतु।**
**श्रद्धाराद्धगुरुश्लथीकृतदृढग्रन्थिः समासादय-**
**त्वेतत्काव्यरसोर्मिमज्जनसुखव्यासज्जनं सज्जनः'।।**[2]

अन्यच्च–

**'यत्काव्यं मधुवर्षिधर्षितपरास्तर्केषु यस्योक्तयः'।**[3]

उक्तैरुदाहरणैः स्फुटमेतद् यन्नैषधकारो व्युत्पत्तिपूर्वककाव्यरचनायाः पक्षपाती। यत्र तत्र स्पष्टतया काव्यस्वरूपं सर्वाङ्गपूर्णं प्रतिपादयन्निव दृश्यते। यथा–

---

1. नैष. 22/151
2. नैष. 22/152
3. तत्रैव–22/153

**'श्रुतिमधुपद[1]स्रग्वैदग्धीविभावितभाविक-**
**स्फुटरसभृशाभ्यक्ता वैतालिकैर्जगिरे गिरः'।[2]**

श्रोतॄणां श्रुत्योः श्रवणयोर्मध्वमृतरूपातिमधुरा पदस्रक् सुप्तिङन्त-पदमाला तस्या वैदग्ध्या वक्रोक्त्यादिरचनाचातुर्येण विभाविता ध्वनिवृत्त्या व्यञ्जनाव्यापारेण प्रकाशिता भाविका रत्यादिस्थायिव्यभिचारिसहचारिरूपैर्युक्ता। तादृशाः स्फुटाः प्रसन्नतरत्वेन बालिशैरपि प्रतीता ये रसाः शृङ्गारादयस्तैर्भृशं नितरामभ्यक्ताः सर्वतः सिक्ताः। एकमपि पदं नीरसं यासु नास्त्यतिरसिकाः। यद्यपि वैशिष्ट्यमेतन्मागधैः प्रस्तुतस्य प्रातर्गीतस्य, तथापि वर्णनेनानेन श्रीहर्षस्य समीहितं काव्यस्योदात्तं स्वरूपं समभिव्यञ्जितम्। इदं पादद्वयमाश्रित्य श्रीहर्षाभिमतं काव्यलक्षणं तच्छब्दैरेवं व्यक्तीभवति–

**'श्रुतिमधुपदस्रग्वैदग्धीविभावितभाविकस्फुटरसभृशाभ्यक्ता[3]**

(वाक्काव्यम्)

अस्य व्याख्यायामुक्तासु पङ्क्तिषु वक्रोक्तिध्वनिप्रभृतिकाव्यतत्त्वानि निर्दिष्टानि सन्ति। अस्याधारभूतानि सन्ति नैषधकारस्यैव वचनानि। यथा वक्रोक्तिविषये स वक्ति–

**'अलं सृजन् धर्मविधौ विधाता रुणद्धि मौनस्य मिषेण वाणीम्।**
**तत्कण्ठमालिङ्ग्य रसस्य तृप्तां न वेद तां वेदजडः स वक्राम्'।।[4]**

अत्र वेदपाठव्याकुलीभूतहृदयाद् ब्रह्मणः कवेर्भारत्याः श्रेष्ठत्वं स प्रतिपादयति। अर्थात्– स ब्रह्मा तत्कण्ठं नलकण्ठमालिङ्ग्याशिलष्य रसस्य शृङ्गारादिनवरसैस्तृप्तां सम्पूर्णां वक्रां वक्रोक्तिरूपां तां वाणीं न वेद न जानाति।

वक्रोक्तेर्ध्वनेश्च महत्त्वं कण्ठतः प्रतिपादयन् स वक्ति–

**'निषेधवेषो विधिरेष तेऽथवा तवैव युक्ता खलु वाचि वक्रता।**

---

1. 'मधुमद् वचोऽशंसीत काव्यः कविः।' (ऋग्वेदे-8.8.11)
2. (नैष. 19/1)
3. (वाक् काव्यम्)'
4. (नैषध. 3/30)
5. (नैषध. 9/50)

**विजृम्भितं यस्य किल ध्वनेरिदं विदग्धनारीवदनं तदाकरः'।।**[5]

निषेधे विधिप्रतीतिः कथमित्यत आह– खलु तस्मात् तवैव वाचि वक्रता युक्ता। वक्रोक्तिस्त्वद्वचनविषयैव युक्तेत्यर्थः। एतदपि कुत इत्याशङ्क्य वक्ति–

खलु यस्माद् यस्य ध्वनेः ध्वनिसंज्ञकस्योत्तमकाव्यस्येदं निषेधविधिरूपं किल प्रसिद्धं विजृम्भितं विलसितम्। अत्र श्रीहर्षेण ध्वनिवक्रोक्त्योः समन्वयः प्रत्यपादि। सरस्वत्या रसो माधुर्यं च तत्सम्बन्धिषु वक्रोक्त्यादिरूपप्रवाहचक्रेषु विलक्षणं भवति। अत आह–

**'भ्रमामि ते भैमि! सरस्वतीरसप्रवाहचक्रेषु निपत्य कत्यदः'।**[1]

श्रीहर्षो गुणरीतिरसादीनां सङ्केतं मुहुर्मुहुर्विदधाति। यथा–

**'गुणानामास्थानीं नृपतिलकनारीति विदितां**
**रसस्फीतामन्तस्तव च तव वृत्ते च कवितुः।**
**भवित्री वैदर्भीमधिकमधिकण्ठं रचयितुं**
**परीरम्भक्रीडाचरणशरणामन्वहमहम्'।।**[2]

काव्यशास्त्रदृशाऽस्य पद्यस्यार्थः– वैदर्भीसंज्ञां रीतिमल्पपदसमासम-समासं वा रचनाविशेषं तव च नलस्य तव च वृत्ते तत्सम्बन्धिनि चरित्रे विषये कवितुः काव्यकरणोद्युक्तस्य श्रीहर्षादेश्चाधिकण्ठं कण्ठे परीरम्भस्य श्लेषालङ्कारस्य क्रीडया वक्रोक्तिविलासस्यासामस्त्येन यच्चरणं ज्ञानं तदेव शरणं यस्यामेवंविधाम्, किं भूताम्? गुणानां श्लेषप्रसादादीनाम्, रीतिषु पाञ्चाल्यादिषु विदिता, तथा नेत्यरीतिविदिता तथाविधापि नेति नारीति विदिता तादृशीम्, पाञ्चाल्यादिरीतिषु मध्येऽतिप्रसिद्धामिति यावत्, अन्तःश्लोकमध्ये रसैः शृङ्गारादिभिः परिपुष्टाम्, त्वच्चरितवर्णयितुश्च कण्ठे एवंभूतां वैदर्भीरीतिमधिकं रचयिष्यामि। 'श्लेषः प्रसादः समता माधुर्यं सुकुमारता। अर्थव्यक्तिरुदारत्वमोजःकान्तिसमाधयः।। इति वैदर्भमार्गस्य प्राणा दशगुणाः स्मृताः'।। इत्यालङ्कारिकाः। नैषधीयचरिताकर्षणे वैदर्भीरीति–

1. नैष. 9/51
2. नैष. 14/91

महत्त्वमन्यत्रापि स वक्ति–

**'धन्यासि वैदर्भि! गुणैरुदारैर्यया समाकृष्यत नैषधोऽपि'**[1]

प्रयत्नान्यस्ताभिर्ग्रन्थग्रन्थिभिर्धर्षितपराभिस्तर्कोक्तिभिश्च रचितं महाकाव्यमेतत्तथापि वैदर्भीरीतिं श्रीहर्षः प्रीणाति नाऽत्र सन्देहलेशः। श्लिष्ट-काव्यसर्जनं स कवित्वशक्तेर्विलासं मनुते–

**'सा भङ्गिरस्याः खलु वाचि कापि यद्भारती मूर्तिमतीयमेव।**
**श्लिष्टं निगद्यादृतवासवादीन्विशिष्य मे नैषधमप्यवादीत्।।**

**जग्रन्थ सेयं मदनुग्रहेण वचःस्त्रजः स्पष्टयितुं चतस्त्रः।**
**द्वे ते नलं लक्षयितुं क्षमेते ममैव मोहोऽयमहो महीयान्।।**

**श्लिष्यन्ति वाचो यदमूरमुष्याः कवित्वशक्तेः खलु ते विलासाः।**
**भूपाललीलाः किल लोकपालाः समाविशन्ति व्यतिमेदिनोऽपि'।।**[2]

अन्यच्च–

**'आश्लेषि न श्लेषकवेर्भवत्याः**
**श्लोकद्वयार्थः सुधिया मया किम्'।**[3]

काव्ये सुवर्णैः (शोभनैर्वर्णैः) सह वाण्या महत्त्वं स्वीकुर्वन् स वदति–

**'न सुवर्णमयी तनुः परं ननु किं वागपि तावकी तथा'।**[4]

तथा च–

**'प्राप्तप्रकर्षः सुकुमारसर्गे समापयद्वाचि मृदुत्वमुद्राम्।**
**कण्ठे वसन्ती चतुरा यदस्याः सरस्वती वादयते विपञ्चीम्।।**
**तदेव वाग्भूय मुखे मृगाक्ष्याः श्रोतुः श्रुतौ याति सुधारसत्वम्'।।**[5]

---

1. (नैष. 3/116)
2. (नैष. 14/14-16)
3. (नैष. 3/69)
4. (नैष. 2/52)
5. (नैष. 7/47, 50)

चेत्प्रसादगुणरमणीया वाणी तर्हि कर्णावमृतमपि नाद्रियेताम्–

**'प्राप्तैव तावत्तव रूपसृष्टिं निपीय दृष्टिर्जनुषः फलं मे।**
**अपि श्रुती नामृतमाद्रियेतां तयोः प्रसादीकुरुषे गिरं चेत्'॥**[1]

मितं च शब्दतः, सारं चार्थतो यद्वचः सैव वाग्मिता (पाण्डित्यम्)–

**'अये! ममोदासितमेव जिह्वया द्वयेऽपि तस्मिन्ननतिप्रयोजने।**
**गुरौ गिरः पल्लवनार्थलाघवे मितं च सारं च वचो हि वाग्मिता'॥**[2]

वाण्या माधुर्यादिगुणोदयेन वीणाया निक्वाणस्तृणीकृतो भवति–

**'वाणीगुणोदयतृणीकृतपाणिवीणा-**
**निक्वाणया पुनरभाणि मृगेक्षणा सा'।**[3]

अपि च–

**'तदितं विशदं वचोऽमृतं परिपीयाभ्युदितं द्विजाधिपात्।**
**अतितृप्ततया विनिर्ममे स तदुद्गारमिव स्मितं सितम्॥**
**.... मृदु तस्य मुदे किरद्गिरः प्रियवादामृतकूपकण्ठजाः'॥**[4]

नैषधकारो रसस्य विशेषतः शृङ्गारस्य महत्त्वं बहुधा निरूपयति–

**'शृङ्गारभृङ्गारसुधाकरेण वर्णस्त्रजानूपय कर्णकूपौ।**
**त्वच्चारुवाणीरसवेणितीरतृणानुकारः खलु कोषकारः'॥**[5]

रसानन्दस्य विभावादिजीवितावधित्वमपि व्यङ्ग्यभङ्ग्या निर्दिशति–

**'दूरेऽपि तत्तावकगानपानाल्लब्धावधिः स्वादुरसोपभोगे।**
**अवज्ञयैव क्षिपति क्षपायाः पतिः खलु स्वान्यमृतानि भासः'॥**[6]

व्यतिरेकेणात्र पाण्डित्यस्य शृङ्गारस्य च महत्त्वं स्वीकरोति–

---

1. नैष. 3/69
2. नैष. 9/8
3. नैष. 11/82
4. नैष. 2/49, 50
5. नैष. 22/57
6. नैष. 22/109

**'शूरेऽपि सूरिपरिषत्प्रथमार्चितेऽपि**
**शृङ्गारभङ्गिमधुरेऽपि कलाकरेऽपि।**
**तस्मिन्नवद्यमियमाप तदेव नाम**
**यत्कोमलं न किल तस्य नलेति नाम'।।[1]**

विभावनव्यापारक्षमा काव्यवाग्भवेदिति तन्मतम्–

**'सुज्ञं प्रतीङ्गितविभावनमेव वाचः'।[2]**

लावण्यवैदग्ध्यनिधिः शृङ्गाररससमुद्रादुत्पद्यते–

**'रसस्य शृङ्गार इति श्रुतस्य क्व नाम जागर्ति महानुदन्वान्।**
**कस्मादुदस्थादियमन्यथाश्रीर्लावण्यवैदग्ध्यनिधिः पयोधेः'।।[3]**

शृङ्गाररसधाराया वैलक्षण्यम्–

**'इमां न मृद्वीमसृजत्कराभ्यां**
**वेधाः कुशाध्यासनकर्कशाभ्याम्।**
**शृङ्गारधारां मनसा न शान्ति-**
**विश्रान्तिधन्वाध्वमहीरुहेण'।।[4]**

नैषधीयचरितस्य नायिका भैमी शृङ्गाररसस्य नदी विद्यते–

**'तरङ्गिणी भूमिभृतः प्रभूता जानामि शृङ्गाररसस्य सेयम्।**
**लावण्यपूरोऽजनि यौवनेन यस्यां तथोच्चैस्तनता घनेन'।।[5]**

एवं ध्वनिवक्रोक्तिरसरीतिगुणादीनां विषये श्रीहर्षस्यावधारणाः काव्यशास्त्रिणां कृते महत्त्ववहाः सन्ति। काव्यसर्जन-प्रतिभा-भूषणभूषाभावादि-विषयेऽपि व्यङ्ग्यभङ्ग्या श्रीहर्षस्यावधारणात्र स्फुटीभवति। यथा आदिकवे-र्वाल्मीकेः काव्यसर्जने शोकस्य हेतुत्वमेवं वर्णयति–

---

1. नैष. 11/32
2. नैष. 19/101
3. नैष. 10.115
4. नैष. 10/127
5. नैष. 7/11
6. नैष. 21/76

**'क्रौञ्चदु:खमपि वीक्ष्य शुचा यः श्लोकमेकमसृजत्कविराद्यः।
स त्वदुत्थकरुणः खलु काव्यं श्लोकसिन्धुमुचितं प्रबबन्ध'।।[6]**

वाल्मीकिः संस्कृतस्य प्रथमः प्रवर्तको मतमिदं स पुष्णाति–

**'वाल्मीकिरश्लाघत तामनेकशाखत्रयीभूरुहराजिभाजा।
क्लेशं विना कण्ठपथेन यस्य दैवी दिवः प्राग्भुवमागमद्वाक्'।।[1]**

सरसकाव्यसर्जनमेव विजयते–

**'कः शच्या रचयाञ्चकार चरिते काव्यं स नः कथ्यताम्।
एतयास्तु करिष्यते रसधुनीपात्रे चरित्रे न कैः'।।[2] )**

अन्यच्च–

**'पीयूषधारानधराभिरन्तस्तासां रसोदन्वतिमज्जयामः।
रम्भादिसौभाग्यरहःकथाभिः काव्येन काव्यं सृजतादृताभिः'।।[3]**

कलुषहारिसहृदयहर्षकारि च काव्यसर्जनं प्रशस्तम्–

**'भवद्वृत्तस्तोतुर्मदुपहितकण्ठस्य कवितु–
र्मुखात्पुण्यैः श्लोकैस्त्वयि घनमुदेयं जनमुदे।
ततः पुण्यश्लोकः क्षितिभुवनलोकस्य भविता
भवानाख्यातः सन् कलिकलुषहारी हरिरिव'।।[4]**

काव्यसर्जने प्रतिभाया अभ्यासस्य च महत्त्वम्–

**'अजस्रमभ्यासमुपेयुषा समं मुदैव देवः कविना बुधेन च।
दधौ पटीयान् समयं नयन्नयं दिनेश्वरश्रीरुदयं दिने दिने'।।[5]**

**'अलं विलम्ब्य त्वरितुं हि वेला कार्ये किल स्थैर्यसहे विचारः।**

---

1. नैष. 10/57
2. नैष. 15/86
3. नैष. 3/42
4. नैष. 14/92
5. नैष. 1/17
6. नैष. 3/91

**गुरूपदेशं प्रतिभेव तीक्ष्णा प्रतीक्षते जातु न कालमूर्तिः'॥**[6]

काव्यानुभूतिसन्दर्भे श्रीहर्षस्य सङ्केतः–

**'अनया तव रूपसीमया कृतसंस्कारविबोधनस्य मे।**
**चिरमप्यवलोकिताद्य सा स्मृतीमारूढवती शुचिस्मिता'॥**[1]

तथा च–

**'तदिदं विशदं वचोऽमृतं परिपीयाभ्युदितं द्विजाधिपात्।**
**अतितृप्ततया विनिर्ममे स तदुद्गारमिव स्मितं सितम्॥'**[2]

अनुव्याहरणे सहृदयानुभूतौ च तन्मतम्–

**'यन्मतौ विमलदर्पणिकायां सम्मुखस्थमखिलं खलु तत्त्वम्।**
**तेऽपि किं वितरथेदृशमाज्ञां या न यस्य सदृशी वितरीतुम्'॥**[3]
**'प्राप्तैव तावत्तव रूपसृष्टिं निपीय दृष्टिर्जनुषः फलं मे।**
**अपि श्रुतिः नामृतमाद्रियेतां तयोः प्रसादीकुरुषे गिरं चेत्'॥**

**'अमज्जदाकण्ठमसौ सुधासु प्रियं प्रियाया वचनं निपीय।**
**द्विषन्मुखेऽपि स्वदते स्तुतिर्या तन्मिष्टतानेष्टमुखे त्वमेया'॥**[4]

सहृदयः स्वाभिप्रायानुसारेणाकूतशतैरर्थं गृह्णाति, आशयोऽयं व्यङ्ग्यभङ्ग्या प्रत्यपादि–

**'विदग्धबालेङ्गितगुप्तिचातुरीप्रवह्लिकोत्पाटनपाटवे हृदः।**
**निजस्य टीकां प्रबबन्ध कामुकः स्पृशद्भिराकूतशतैस्तदौचितीम्'॥**[5]

अनुप्रासालङ्कारविन्यासस्वरूपं कण्ठतः प्रतिपादयति–

**'इतरनलतुलाभागेष शेषः सुधाभिः**
**स्नपयति मम चेतो नैषधः कस्य हेतोः।**

---

1. नैष. 2/43
2. नैष. 2/49
3. नैष. 2/106
4. नैष. 8/49, 51
5. नैष. 16/102
6. नैष. 13/54

**प्रथमचरमयोर्वा शब्दयोर्वर्णसंख्ये**
**विलसति चरमेऽनुप्रासभासां विलासः'।।[6]**

छन्दोविभागविषयेऽपि वक्ति—

**'जात्या च वृत्तेन च भिद्यमानं छन्दो भुजद्वन्द्वमभूद्यदीयम्।**
**श्लोकार्थविश्रान्तिमयीभविष्णुपर्वद्वयीसन्धिसुचिह्नमध्यम्'।।[1]**

काव्यरचना श्रुतिसङ्गता स्यादत आह—

**'मध्ये श्रुतीनां प्रतिवेशिनीनां सरस्वती वासवती मुखे नः।**
**ह्रियेव ताभ्यश्चलतीयमद्धा पथान्न सत्सङ्गगुणेन नद्धा'।।[2]**

श्लेषस्य महत्त्वं स्थापयन् वक्ति—

**'नृपेण पाणिग्रहणे स्पृहेति**
**नलं मनः कामयते ममेति।**
**आश्लेषि न श्लेषकवेर्भवत्याः**
**श्लोकद्वयार्थः सुधिया मया किम्'।।[3]**

यथार्थतोऽपि नैषधीयचरितस्य पद्यानि बह्वर्थसमन्वितानि सन्ति। अत एव कथावस्तुसम्पृक्तेऽपि वर्णने श्रीहर्षस्य काव्यतत्त्वविषयिण्यवधारणा पदे पदे निभाल्यते। प्रसन्नचेतसः सहृदया एव काव्याह्लादं गृह्णन्ति क्रुधद्रुहेर्ष्यादिभिः कदुष्णे हृदि तदाह्लादानुभूतिर्न भवति। 'नैषधस्ये'ति शब्दस्य द्वावर्थौ वर्तेते नलस्य, नैषधीयचरितमहाकाव्यस्येति च। श्लेषकवेः श्रीहर्षस्य स्वकाव्यं प्रति कथनं दृश्यताम्—

**'त्वया विधेया न गिरो मदर्थाः क्रुधा कदुष्णे हृदि नैषधस्य।**
**पित्तेन दूने रसने सिताऽपि तिक्तायते हंसकुलावतंसः'।।[4]**

'नैषधं विद्वदौषधम्' इति प्रसिद्धाऽभ्युक्तिस्तथ्यमिदं समुद्घाटयति

1. नैष. 10/77
2. नैष. 3/65
3. नैष. 3/69
4. नैष. 3/94

यद् ये विद्वांसः शास्त्रपाण्डित्याहङ्कारज्वरेण ग्रस्ताः सन्ति, ते ग्रन्थग्रन्थिसमन्वित मेतत्काव्यं पठित्वा स्वपाण्डित्याहङ्कारज्वरमपनयन्तु। इदमपि तथ्यं व्यङ्ग्यभङ्ग्या प्रकाशितम्, यथा–

**'भृशतापभृता मया भवान्मरुदासादि तुषारसारवान्।**
**धनिनामितरः सतां पुनर्गुणवत्सन्निधिरेव सन्निधिः।।**
**शतशः श्रुतिमागतैव सा त्रिजगन्मोहमहौषधिर्मम।**
**अमुना तव शंसितेन तु स्वदृशैवाधिगतामवैमि ताम्'।।[1]**

उक्तेन सोद्धरणविवेचनेन सुस्पष्टं श्रीहर्षस्य काव्यभारतीस्वरूपम्। अन्ततः श्रीहर्षवचनैरेव पत्रमिदं पूर्यते–

**'अदृश्यमाना क्वचिदीक्षिता क्वचिन्ममानुयोगे भवतः सरस्वती।**
**क्वचित्प्रकाशां क्वचिदस्फुटार्णवं सरस्वती जेतुमनाः सरस्वतीम्।।**
**गिरः श्रुता एव तव श्रवः सुधाः श्लथा भवन्नाम्नि तु न श्रुतिस्पृहा।**
**पिपासुता शान्तिमुपैति वारिजा न जातु दुग्धान्मधुनोऽधिकादपि'।।[2]**

इति।

---

1. नैष. 2/53, 54
2. नैष. 9/4, 5

# भारवेः काव्यभारतीस्वरूपम्

**प्रो. रहस विहारी द्विवेदी**

किरातार्जुनीयमहाकाव्यकर्तुः षष्ठख्रीस्तशताब्दकवेर्भारवेः काव्यभारतीस्वरूपं निश्चेतुं प्रमाणान्तरं नापेक्षते, यतो हि स स्वमहाकाव्यपात्रसम्भाषणप्रसङ्गेषु तत्तद्भाषावैशिष्ट्यनिरूपणव्याजेन स्फुटरूपेण स्वकाव्यभारतीस्वरूपमपि प्रतिपादयन्निव दृश्यते।

तत्कण्ठतः प्रतिपादितं वैशिष्ट्यमेवादाय तस्यार्थगौरवं श्लाघ्यते–

**'उपमा कालिदासस्य भारवेरर्थगौरवम्।**
**दण्डिनः पदलालित्यं माघे सन्ति त्रयो गुणाः'॥**

यथोक्तं भारविणा–

**'स्फुटता न पदैरपाकृता**
**न च न स्वीकृतमर्थगौरवम्।**
**रचिता न पृथगर्थता गिरां**
**न च सामर्थ्यमपोहितं क्वचित्'॥[1]**

कालिदासेनापि स्वोपमासमुच्चयस्तद्यथापदेशविनिवेशश्च प्रत्यपादि–

**'सर्वोपमाद्रव्यसमुच्चयेन**
**यथाप्रदेशं विनिवेशितेन।**
**सा निर्मिता विश्वसृजाप्रयत्ना-**
**देकत्र सौन्दर्यदिदृक्षयेव'॥[2]**

यद्यपि महाकाव्ययोरेतयोरर्थान्तरन्यासादिवैशिष्ट्यमपि रचनासु निभाल्यते, तथापि मन्ये तयोः कण्ठत उपात्तीकृतयोरर्थगौरवोप-

---

1. किरा॰ 2.26
2. कुमा॰ 1.49

मयोराकलनमुक्तायामभ्युक्तौ कृतम्। अत्र ध्यातव्यं यदभ्युक्तिरियं माघस्य वैशिष्ट्यद्योतिका, अर्थान्माघे कालिदाससदृशोपमाविन्यासो भारविसदृशश्चार्थ-गौरवविन्यासः प्राप्यते। एतेन स्फुटमिदं यन्न केवलं कालिदासस्य वैशिष्ट्यमुपमामात्रे नापि भारवेर्वैशिष्ट्यमर्थगौरवमात्रे।

भारवेरभिमता भारती तच्छब्दैरेवं वरीवर्ति–सौष्ठवौदार्यविशेषशालिनी, विनिश्चतार्था, रुचिरार्था, विविक्तवर्णाभरणा, सुखश्रुतिः प्रसन्नगम्भीरपदा, सर्वमनोरमा, गरीयसीति च। प्रयोगस्थलानि दृश्यन्ताम्–

**'स सौष्ठवौदार्यविशेषशालिनीं**
**विनिश्चतार्थामिति वाचमाददे'।**[1]

**'इयमिष्टगुणाय रोचतां**
**रुचिरार्था भवतेऽपि भारती'।**[2]

**'विविक्तवर्णाभरणा सुखश्रुतिः प्रसादयन्ती हृदयान्यपि द्विषाम्।**
**प्रवर्तते नाकृतपुण्यकर्मणां प्रसन्नगम्भीरपदा सरस्वती'।।**[3]
**'सुदुर्लभा सर्वमनोरमा गिरः।'**[3]

भारवेर्भारत्या विशेषेणाभिप्रायः–

**सौष्ठवौदार्यविशेषशालिनी**–वामनेन बन्धस्य विकटता उदारगुणः कथितः– **'विकटत्वमुदारता'**[5] विकटत्वञ्च विच्छेदात्पदानां नृत्यप्रायत्वम्। अर्थगुणदृष्ट्योदारता अग्राम्यत्वं कथ्यते– 'अग्राम्यत्वमुदारता'[6]

साधुशब्दप्रयोगे सुष्ठुप्रयोगे वा भारवेराग्रहोऽन्यत्रापि विद्यते। यथा–

**'संस्कारवत्त्वाद्रमयत्सु चेतः प्रयोगशिक्षागुणभूषणेषु।**
**अयं यथार्थेषु शरेषु पार्थः शब्देषु भावार्थमिवाशशंसे'।।**[7]

1. (1/3)
2. (2/5)
3. (94/3)
4. (14/5)
5. (वा.का.ल.सू. 3/1/23)
6. (तत्रैव–3/2/23)
7. (1/6)

संस्कारवत्त्वादसाधूनां प्रयोगनिषेधात् संस्कारो व्युत्पत्तिस्तद्वत्त्वात् चेतो रमयत्सु, प्रयोगोऽभियुक्तव्यवहारः, शिक्षाभ्यासो गुणः स्वस्वस्थानकरणादयः श्लेषप्रसादयोर्वा ते भूषणं येषु, यथार्थेषु, नियतार्थेषु, शब्देषु पदेषु भावः प्रवृत्तिनिमित्तं सामान्यादिः स एव–अर्थः तम्–आशशंसे–आचकाङ्क्षे। सुष्ठुभावः सौष्ठवं शब्दसामर्थ्यम्, उदारस्य भाव औदार्यमर्थसम्पत्तिस्तयोर्द्वन्द्वः सौष्ठवौदार्ये तयोर्विशेषस्तेन शालते–सौष्ठवौदार्यविशेषशालिनी (शब्दगुणार्थगुणसमन्विता) विनिश्चितार्था–विशेषतः प्रमाणतो निश्चितोऽर्थो यस्याः सा। रुचिरार्था–सुन्दरभावसमन्विता रुचिरोऽर्थो यस्याः सा। सुन्दरं रुचिरं चारु सुषमं साधुशोभनमित्यमरः। इयं च भारतीष्टगुणाय रोचताम्–इष्टा गुणा यस्य स यस्मै, यतो हि 'ननु वक्तृविशेषनिःस्पृहा गुणगृह्या वचने विपश्चितः'। भाषादिशा तु माधुर्यौदार्यादिगुणाः सन्त्येव लोकव्यवहारगुणा अपि वर्णनीये वस्तुनि विद्यन्ते। यथोक्तम्–**'परिणामसुखे गरीयसि व्यथकेऽस्मिन्वचसि क्षतौजसाम्। अतिवीर्यवतीव भेषजे बहुरल्पीयसि दृश्यते गुणः'**।।[1]

प्रसङ्गेऽस्मिन् 'व्यवहारविदे' 'कान्तासम्मिततयोपदेशयुजे' प्रभृतिकाव्य-प्रयोजनोक्तवचनानि स्वभावतोऽन्वर्थतां व्रजन्ति। प्रकटतोऽपि कान्ता द्रौपदी युधिष्ठिरमुपदिशति। विविक्तवर्णाभरणा–विविक्ताः संयोगादिना अश्लिष्टाः 'स्फुटता न पदैरपाकृता'[2] इति पूर्वोक्तं पुनः पुष्णाति। सुखश्रुतिः–सुखा श्रुतिः श्रवणं यस्याः सा सुखश्रुतिः श्राव्येत्यर्थः। श्रुतिकट्वादिदोषरहितेति यावत्। एतादृशी सुखश्रुतिर्या द्विषां हृदयान्यपि प्रसादयन्ती राजते। किं पुनः सुहृदामिति।

**प्रसन्नगम्भीरपदा**–प्रसन्नानि वाचकानि गम्भीराणि–अर्थगुरूणि च पदानि सुप्तिङ्रूपाणि यस्याः सा। सर्वमनोरमा–सर्वेषां शब्दार्थदृशा सहृदयविभाजनपूर्वकं कविभारत्याः सर्वमनोहारित्वं भारविः प्रतिपादयति। तद्यथा–

**'भवन्ति ते सभ्यतमा विपश्चितां मनोगतं वाचि निवेशयन्ति ये।**
**नयन्ति तेष्वप्युपपन्ननैपुणा गभीरमर्थं कतिचित्प्रकाशताम्'**।।[3]

---

1. (2/4)
2. (2/6)
3. (14/4)

वस्तुत: कवेर्यत्प्रत्यक्षं तत्सहृदयकृतेऽप्रत्यक्षं भवति, अत: कवि: स्वमनोगतं वाचि एतादृशं निवेशयति येन तन्निगूढगभीरमर्थं सहृदयोऽनुभवति। अत एव 'प्रसन्नगम्भीरपदा सरस्वती'ति पूर्वमुक्तम्।

केचन सहृदया अर्थालङ्कारं प्रशंसन्ति, केचन च शब्दालङ्कारम्। तथ्यमिदं भामहेनापि समुपस्थापितम्–

**'रूपकादिरलङ्कारस्तथान्यैर्बहुधोदित:।**
**न कान्तमपि निर्भूषं विभाति वनिताननम्।।**
**रूपकादिमलङ्कारं बाह्यमाचक्षते परे।**
**सुपां तिङां च व्युत्पत्तिं वाचां वाञ्छन्त्यलङ्कृतिम्।।**
**तदेतदाहु: सौशब्दं नार्थव्युत्पत्तिरीदृशी।**
**शब्दाभिधेयालङ्कारभेदादिष्टं द्वयं तु न:।।**
**शब्दार्थौ सहितौ काव्यम्.......'।।**[1]

उभावपि सन्तुष्टौ स्यातामेतदर्थं सर्वमनोरमा गिर: सुदुर्लभा भवन्ति। यस्य रचनया द्वावपि सन्तुष्टौ भवत: स एव श्रेष्ठ: कविरिति भारविर्वक्ति–

**'स्तुवन्ति गुर्वीमभिधेयसम्पद:**
**विशुद्धिमुक्तेरपरे विपश्चित:।**
**इति स्थितायां प्रतिपूरुषं रुचौ**
**सुदुर्लभा सर्वमनोरमा गिर:'।।**[2]

गिरां विस्तरे वक्तु: (कवे:) विमला मतिर्हेतुर्भवति। एतदर्थं भारविर्वक्ति–

**'अपवर्जितविप्लवे शुचौ हृदयग्राहिणि माङ्गल्यास्पदे।**
**विमला तव विस्तरे गिरां मतिरादर्श इवाभिदृश्यते'।।**[3]

विप्लव: प्रमाणबाध: सोऽपवर्जितो यस्य तस्मिन्, शुचौ शब्दसौष्ठवे हृदयग्राहिणि सहृदयहृदयसंवेद्ये मङ्गलास्पदे हितार्थप्रतिपादके (तव) गिरां

---

1. (काव्यालङ्कारे–1/13–16)
2. (14/5)
3. (2/26)

भारतीनां विस्तरे असङ्क्षिप्ते विमला मतिः निर्मला बुद्धिः आदर्शे दर्पणे इव अभिदृश्यते वाग्वैशद्यादेव मतिवैशद्यमनुमीयते।

प्रायः पारस्परिकवाग्व्यवहारप्रसङ्गेषु भारविः काव्योचिताया वाचः स्वरूपं प्रतिपादयन्निव दृश्यते। प्रशस्तकवेर्व्यासस्य सभाजने युधिष्ठिरस्य वचनं ध्यातव्यम्–

**'प्रसादलक्ष्मीं दधतं समग्रां वपुःप्रकर्षेण जनातिगेन।**
**प्रसह्य चेतःसु समासजन्तमसंस्तुतानामपि भावमार्द्रम्॥**
**अनुद्धताकारतया विविक्तां तन्वन्तमन्तः करणस्य वृत्तिम्।**
**माधुर्यविस्त्रम्भविशेषभाजा कृतोपसम्भावमिवेक्षितेन'॥**[1]

अत्र 'प्रसादलक्ष्मीं', 'चेतःसु समासजन्तम्', 'भावमार्द्रम्', 'विविक्तमन्तःकरणस्य वृत्तिम्', 'माधुर्यविस्त्रम्भविशेषभाजा' प्रभृतिप्रयोगाः स्वभावतः काव्योन्मेषानुभूतिपराः प्रतीयन्ते। पुराणमहाभारतादिकर्तुर्व्यासस्य वैशिष्ट्य-प्रतिपादने तस्य रचनाप्रयोजनं काव्यप्रयोजनं वा स्फुटीभवति। तद्यथा--

**'श्रियः विकर्षत्यपहन्त्यघानि श्रेयः परिस्नौति तनोति कीर्तिम्।**
**सन्दर्शनं लोकगुरोरमोघं तवात्मयोनेरिव किं न धत्ते'॥**[2]

**'वक्राभिधेयशब्दोक्तिरिष्टा वाचामलङ्कृतिः', 'उक्तिविशेषः काव्यम्'**–इत्यादिरूपेण भामहराजशेखरादिभिः काव्यस्वरूपं निर्धारितम्। अत्रोक्तिविशेषरम्यमिति कथने संवादो दृश्यते–

**'इत्युक्तवानुक्तिविशेषरम्यं मनः समाधाय जयोपपत्तौ।**
**उदारचेता गिरमित्युदारां द्वैपायनेनाभिदधे नरेन्द्रः'॥**[3]

एकादशसर्गीयेऽर्जुनस्य प्रश्रयगम्भीरे वचसि काव्यभाषादर्शः साधु निर्दिष्टः–

---

1. (3/2-3)
2. (3/6)
3. (3/10)

'प्रसादरम्यमोजस्वि गरीयो लाघवान्वितम्।
साकाङ्क्षमनुपस्कारं विष्वग्गतिनिराकुलम्।।
न्यायनिर्णीतसारत्वान्निरपेक्षमिवागमे।
अप्रकम्प्यतयाऽन्येषामाम्नायवचनोपमम्।।
अलङ्घ्यत्वाज्जनैरन्यैः क्षुभितोदन्वदूर्जितम्।
औदार्यादर्थसम्पत्तेः शान्तं चित्तमृषेरिव।।
इदमीदृग्गुणोपेतं लब्धावसरसाधनम्।
व्याकुर्यात्कः प्रियं वाक्यं यो वक्ता नेदृगाशयः'।।[1]

'वाच्यवाचकसौभाग्यलावण्यपरिपोषकः।
व्यापारशाली वाक्यस्य विन्यासो बन्ध उच्यते'।।

इति वक्रोक्तिजीवितकृता कुन्तकेन बन्धस्वरूपं प्रत्यपादि। भारविमतेऽविज्ञातप्रबन्धस्य कवे रचनाऽफलतां व्रजति–

अविज्ञातप्रबन्धस्य वचो वाचस्पतेरपि।
व्रजत्यफलतामेव नयद्रुह इवेहितम्।।[2]

उक्तेषूदाहरणेषु स्फुटमेतद्यद् भारविणा स्वकृते किरातार्जुनीये महाकाव्ये कथावस्तुविन्यासं कुर्वता काव्यभारत्याः शोभन आदर्शः समुपस्थापितः।

---

1. (11/38–41)
2. (11/43)

# बृहत्त्रय्यां वृत्तानां वस्त्वनुगुणत्वम्

डॉ. भागीरथिनन्दः

महाकविभारविकृतं किरातार्जुनीयम्, महाकविमाघप्रणीतं शिशुपालवधम्, महाकविश्रीहर्षविरचितं नैषधीयचरितं चेति महाकाव्यत्रितयं बृहत्त्रयीति प्रसिद्धं लोके। अत्रैव महाकाव्यत्रयेऽणीयोऽपि वस्तु नानाविन्यासवैपुल्याद् बृहत्तरतां धत्त इति तत्रापि वृत्तानामन्यतमं योगदानं वर्तते। महाकाव्यस्य विपुलत्वमानवर्धने वृत्तानां योगदानं कारणद्वयेन प्रत्येतुं शक्यते। तत्रैकं कारणं यत्- नानावृत्तविधानैर्वस्तु विस्तार्यते, अपरं तु- वस्त्वनुगुणवृत्तविधानेन काव्यसौन्दर्यं विस्तारं भजत इति। छन्दोग्रन्थेषु यद्यपि बहूनि छन्दांसि लक्षितान्युदाहृतानि च वर्तन्ते पिङ्गलच्छन्दःशास्त्र-छन्दोमञ्जरी-वृत्तरत्नाकर- वाग्वल्लभादिषु तथापि तेषु कतिपयान्येव नानासंस्कृतकाव्येषु वस्तुव्याहरणाय प्रयुक्तानि तत्तत्कविभिर्वर्तन्ते। किन्तु महाकाव्येषु पद्यानां बहुत्वात् वृत्तानां बाहुल्यं सम्भवति। अतो महाकाव्यं नानावृत्तमयं प्रतिभाति। बृहत्त्रय्यामपि इतरकविप्रयुक्तानि प्रसिद्धानि वृत्तानि तु विद्यन्त एव, तैः सहाप्यनितरप्रयुक्तानि रमणीयानि कतिपयवृत्तानि दृश्यन्ते। बृहत्त्रय्यामनेकस्थलेषु प्रयुक्तवृत्तानां वस्त्वानुगुण्यं भासते, यत्किल क्षेमेन्द्रः स्वीये सुवृत्ततिलकाख्ये ग्रन्थे उपदिशति दिङ्मात्रेण।

**सम्प्रति बृहत्त्रय्यां सर्गाणां प्रतिश्लोकं छन्दांसि प्रदर्श्यन्ते-**

## किरातार्जुनीयमहाकाव्यम्

| सर्गः | छन्दांसि श्लोकसंख्या च | वर्णितं वस्तु |
|---|---|---|
| प्रथमः | वंशस्थम् (1-44)<br>पुष्पिताग्रा (45)<br>मालिनी (46) | I. युधिष्ठिरं प्रति विदितदुर्योधनशासनस्य वनेचरस्योक्तिः।<br>II. युधिष्ठिरं प्रति द्रौपद्या उक्तिः। |

| द्वितीय: | वैतालीयम् (1-56)<br>वंशस्थम् (57)<br>पुष्पिताग्रा (58)<br>वसन्ततिलकम् (59) | भीम-युधिष्ठिरसंवाद:। |
|---|---|---|
| तृतीय: | उपजाति: (1-56)<br>वैतालीयम् (57-58)<br>पुष्पिताग्रा (59)<br>मालिनी (60) | I. युधिष्ठिरार्जुनौ प्रति व्यासस्योक्ति:।<br>II. अर्जुनं प्रति द्रौपद्या उक्ति:। |
| चतुर्थ: | वंशस्थम् (1-36)<br>पुष्पिताग्रा (37)<br>मालिनी (38) | I. कविकृतं शरद्वर्णनम्।<br>II. यक्षकृतं शरद्वर्णनम्। |
| पञ्चम: | द्रुतविलम्बितम्<br>(1-16),19,45,47,48)<br>औपच्छन्दसिकम् (17)<br>क्षमा (18)<br>प्रमिताक्षरा (20,24,25)<br>प्रभा (21)<br>रथोद्धता (22)<br>कान्तोत्पीडा (23)<br>प्रहर्षिणी (26,34,39,51)<br>जलोद्धतगति: (27)<br>वसन्ततिलकम् 28,29,30,33,<br>37,41,42,46,49,50<br>पुष्पिताग्रा 32,38,40,44<br>वंशस्थम् 35<br>शालिनी 36<br>वंशपत्रपतितम् 43<br>मालिनी 52 | I. कविकृतं हिमालयवर्णनम्।<br>II.यक्षकृतं हिमालयवर्णनम्। |

| | | |
|---|---|---|
| षष्ठः | प्रमिताक्षरा 1-45<br>वसन्ततिलकम् 46<br>मालिनी 47 | इन्द्रकीलपर्वतेऽर्जुनस्य तपस्या अर्जुनपरीक्षार्थमिन्द्रेण अप्सरसां सम्प्रेषणम्। |
| सप्तमः | प्रहर्षिणी 1-39<br>वसन्ततिलकम् 40 | गन्धर्वैः सहाप्सरसामिन्द्रकीलं प्रति स्वर्गात् प्रस्थानम्। |
| अष्टमः | वंशस्थम् 1-54<br>वसन्ततिलकम् 55-57 | देवाङ्गनानां वनविहार-जलक्रीडादिवर्णनम्। |
| नवमः | स्वागता 1-73<br>वसन्ततिलकम् 74-77<br>मालिनी 78 | सन्ध्याऽ-न्धकार-चन्द्रोदय-विलासवर्णनम्। |
| दशमः | पुष्पिताग्रा 1-62<br>शिखरिणी 63 | अर्जुनं मोहयितुमप्सरसां तन्निकटे गमनम्। |
| एकादशः | अनुष्टुप् 1-79<br>उपजातिः 80<br>वसन्ततिलकम् 81 | वृद्धमुनिवेषेणेन्द्रस्यार्जुनान्तिक आगमनम्। |
| द्वादशः | उद्गता 1-54<br>प्रहर्षिणी 55 | इन्द्रादेशेन भगवन्तं शङ्करं तोषयितुमर्जुनस्य तपस्या। |
| त्रयोदशः | औपच्छन्दसिकम् 1-34<br>रथोद्धता 35-70<br>वसन्ततिलकम् 71 | अर्जुनस्य वराहदर्शनम्, वितर्कः, वराहभेदनं च। |
| चतुर्दशः | वंशस्थम् 1-63<br>द्रुतविलम्बितम् 64<br>मालिनी 65 | अर्जुनस्य वनेचरं प्रति उत्तरम्। |
| पञ्चदशः | अनुष्टुप् 1-46<br>उद्गता 47,48<br>उपजातिः 49 | शङ्करार्जुनयुद्धम्। |

| | | |
|---|---|---|
| | उपेन्द्रवज्रा 50,51,52<br>वसन्ततिलकम् 53 | |
| षोडशः | उपजातिः 1-53<br>वंशस्थम् 54-61<br>मालिनी 62,63<br>वसन्ततिलकम् 64 | किरातवेषधारिणः शङ्करस्य विचित्रं युद्धं विलोक्य अर्जुनस्य वितर्कः। |
| सप्तदशः | उपजातिः 1-59<br>वंशस्थम् 60<br>प्रहर्षिणी 61,62,63<br>मालिनी 64 | शङ्करसेनया सहार्जुनस्य युद्धम्। |
| अष्यदशः | द्रुतविलम्बितम् 1-12<br>रथोद्धता 13,30,34<br>प्रमिताक्षरा 14,22,23,37,38<br>अपरवक्त्रम् 15<br>प्रमुदितवदना 16,17,20,21,26<br>इन्द्रवज्रा 18,19<br>शालिनी 24,40<br>औपच्छन्दसिकम् 25<br>मत्तमयूरम् 27<br>उपजातिः 29,35<br>वंशस्थम् 31,32,33,41,42<br>प्रहर्षिणी 36,39<br>वसन्ततिलकम् 43<br>शिखरिणी 45,47<br>मालिनी 44,46,48 | शङ्करार्जुनयोर्बाहुयुद्धम्, अर्जुनस्य शङ्करवरप्राप्तिश्च। |

## शिशुपालवधमहाकाव्यम्

| सर्ग: | छन्दांसि श्लोकसंख्या च | वर्णितं वस्तु |
|---|---|---|
| प्रथम: | वंशस्थम् 1-73<br>पुष्पिताग्रा 74<br>शार्दूलविक्रीडितम् 75 | नारदस्य द्वारकापुर्यामागत्य श्रीकृष्णाय शिशुपालवधार्थ-मिन्द्रसन्देशप्रापणम्। |
| द्वितीय: | अनुष्टुप् 1-115<br>औपच्छन्दसिकम् 116<br>द्रुतविलम्बितम् 117<br>मालिनी 118 | श्रीकृष्णस्य बलरामोद्धवाभ्यां सह मन्त्रणा। |
| तृतीय: | उपजाति: 1-81<br>पञ्चकावली/धृतश्री: 82 | द्वारकपुरीत: भगवत: श्रीकृष्णस्य प्रस्थानवर्णनम्, द्वारकापुर्या: समुद्रस्य च वर्णनम्। |
| चतुर्थ: | उपजाति: 1-18, 35, 63<br>वसन्ततिलकम् 19,22,25, 28,31,34, 37,40,43,46, 49,52, 55,58,61,64<br>पुष्पिताग्रा 20,29,50,56<br>द्रुतविलम्बितम् 21,32,60<br>शालिनी 23पथ्या 24<br>प्रहर्षिणी 26,38,53,59<br>उपेन्द्रवज्रा 27,39<br>जलधरमाला 30<br>वंशस्थम् 33<br>प्रमिताक्षरा 36<br>कुररीरुता 41<br>स्रग्विणी 42 | रैवतकपर्वतवर्णनम्। |

| | | |
|---|---|---|
| | मत्तमयूरम् 44<br>दोधकम् 45<br>मञ्जूभाषिणी 47<br>आर्यागितिः 48,51<br>जलोद्धतगतिः 54<br>रथोद्धता 57<br>भ्ररमरविलसितम् 62<br>मालिनी 65,68<br>पृथ्वी 66<br>वंशपत्रपतितम् 67 | |
| पञ्चमः | वसन्ततिलकम् 1-68<br>शिखरिणी 69 | रैवतकपर्वते विहारार्थ सेनायाः प्रस्थानस्य निवासस्य च वर्णनम्। |
| षष्ठः | द्रुतविलम्बितम् 1-66, 78<br>प्रभा 67<br>स्वागता 68<br>उपजातिः 69,74<br>औपच्छन्दसिकम् 70,72,75<br>तोटकम् 71<br>कुटजा 73<br>मत्तमयूरम् 76<br>वसन्ततिलकम् 77,79 | षण्णां ऋतूनां वर्णनम्। |
| सप्तमः | पुष्पिताग्रा 1-73<br>मन्दाक्रान्ता 74<br>मालिनी 75 | वनविहारवर्णनम्। |
| अष्टमः | प्रहर्षिणी 1-70<br>अतिशायिनी 71 | जलविहारवर्णनम्। |
| नवमः | प्रमिताक्षरा 1-82,<br>औपच्छन्दसिकम् 83,85 | सूर्यास्तमयवर्णनम्। |

| | | |
|---|---|---|
| | प्रहर्षिणी 84<br>वंशस्थम् 86<br>मन्दाक्रान्ता 87 | |
| दशमः | स्वागता 1-90<br>मालिनी 91 | मद्यपानवर्णनम्। |
| एकादशः | मालिनी 1-66<br>महामालिका 67 | प्रभातवर्णनम्। |
| द्वादशः | इन्द्रवंशा 1-76<br>हरिणी 77 | श्रीकृष्णसेनाप्रयाणवर्णनम्। |
| त्रयोदशः | मञ्जूभाषिणी 1-68<br>रमणीयकम् 69 | श्रीकृष्णस्य<br>हस्तिनासभास्थलप्राप्तिः। |
| चतुर्दशः | रथोद्धता 1-85<br>इन्द्रवज्रा 86<br>वसन्ततिलकम् 87<br>प्रहर्षिणी 88 | युधिष्ठिरसम्पादितराज-<br>स्वययज्ञवर्णनम्। |
| पञ्चदशः | उद्गता 1-94<br>इन्द्रवंशा 95<br>स्रग्धरा 96 | शिशुपालकृता श्रीकृष्णनिन्दा। |
| षोडशः | वैतालीयम् 1-80<br>इन्द्रवज्रा 81<br>प्रहर्षिणी 82<br>शालिनी 83<br>शार्दूलविक्रीडितम् 84<br>औपच्छन्दसिकम् 85 | शिशुपालदूत-सात्यक्योरुक्ति-<br>प्रत्युक्ती। |
| सप्तदशः | रुचिरा 1-68<br>शार्दूलविक्रीडितम् 69 | श्रीकृष्णपक्षीयाणां राज्ञां<br>युद्धप्रस्तुतिः। |

| | | |
|---|---|---|
| अष्टादशः | शालिनी 1–79<br>मन्दाक्रान्ता 80 | तुमुलयुद्धवर्णनम्। |
| एकोनविंशः | अनुष्टुप् 1–117<br>उपेन्द्रवज्रा 118<br>वैश्वदेवी 119<br>शार्दूलविक्रीडितम् 120 | योद्धृणां परस्परं युद्धवर्णनम्। |
| विंशः | औपच्छन्दसिकम् 1–75<br>मालिनी 76<br>वसन्ततिलकम् 77<br>शार्दूलविक्रीडितम् 78<br>शिखरिणी 79 | श्रीकृष्णशिशुपालयुद्धवर्णनम्, श्रीकृष्णद्वारा शिशुपालवधः। |

## नैषधीयचरितमहाकाव्यम्

| सर्गः | छन्दांसि श्लोकसंख्या च | वर्णितं वस्तु |
|---|---|---|
| प्रथमः | वंशस्थम् 1–142<br>दोधकम् 143<br>वसन्ततिलकम् 144<br>शार्दूलविक्रीडितम् 145 | नलकीर्तिवर्णनम्, दमयन्त्यनुरक्तस्य नलस्य स्वान्तोविनोदनाय लीलोपवनविहारः, नलेन तत्र हैमहंसं निगृह्य तद्विसर्जनम्। |
| द्वितीयः | वैतालीयम् 1–101<br>शार्दूलविक्रीडितम् 102,104,110<br>प्रमुदितवदना 103<br>मलिनी 106–109 | नलोपकारं प्रतिज्ञाय कृतज्ञस्य हंसस्य कुण्डिनपुरे भैमीदर्शनम्। |
| तृतीयः | उपजातिः 1–124<br>वसन्ततिलकम् 125,129,131<br>शार्दूलविक्रीडितम् 126,127.<br>128,130,136<br>मालिनी 133–135 | दमयन्तीपुरतो हंसस्य नलवरणप्रस्तावः, दमयन्तीसम्मतिमादाय तस्य नलं प्रति प्रत्यावर्तनम्। |

| | | |
|---|---|---|
| चतुर्थः | द्रुतविलम्बितम् 1-115<br>शार्दूलविक्रीडितम् 116,122,123<br>वसन्ततिलकम् 117<br>पुष्पिताग्रा 118-121 | दमयन्तीविरहवर्णनम्। |
| पञ्चमः | स्वागता 1-133<br>द्रुतविलम्बितम् 134<br>शार्दूलविक्रीडितम् 135,136,138<br>स्रग्धरा 137 | दमयन्तीमनुकूलयितुमिन्द्रकृता नलस्य नियुक्तिः। |
| षष्ठः | उपजातिः 1-111<br>मालिनी 112<br>शार्दूलविक्रीडितम् 113 | नलस्य दमयन्तीप्रासादमाप्य तस्या देववरणप्रत्याख्यानं निशम्य भृशं दूनता। |
| सप्तमः | उपजातिः 1-108<br>हरिणी 109<br>शार्दूलविक्रीडितम् 110 | दमयन्ती-नलयोः परस्परं वीक्ष्य परस्परं रूपप्रशंसनम्। |
| अष्टमः | उपजातिः 1-104<br>स्रग्धरा 105,106<br>प्रमुदितवदना 107<br>वसन्ततिलकम् 108<br>शार्दूलविक्रीडितम् 109 | दूतभूतस्य नलस्य देववरणार्थं दमयन्तीं प्रति प्रलोभनप्रस्तावः। |
| नवमः | वंशस्थम् 1-155<br>मन्दाक्रान्ता 156<br>तोटकम् 157<br>शार्दूलविक्रीडितम् 158,160<br>मालिनी 159 | दमयन्तीपुरतः नलात्मप्रकाशनम्। |
| दशमः | उपजातिः 1-136<br>मालिनी 137<br>शार्दूलविक्रीडितम् 138 | दमयन्तीस्वयंवरे राजकुमाराणामागमनम्, तेषां वाग्देवीकृतः परिचयः । |

| | | |
|---|---|---|
| एकादशः | वसन्ततिलकम् 1-128<br>स्रग्धरा 129<br>शार्दूलविक्रीडितम् 130 | सरस्वत्युपस्थापितः समेषां यूनां परिचयः। |
| द्वादशः | वंशस्थम्<br>1-9,13-17,21-27,31-35,<br>41-45,50-55,59-64,<br>68-72,76-80,86-90,<br>105,107,108,109<br>शार्दूलविक्रीडितम्<br>10-12,19,20,29,30,36,<br>37,38,40,48,58,65,66,<br>67,74,81,83,84,85,91,<br>92,93,96,97,98,99,<br>102,104,106,111,113<br>स्रग्धरा<br>18,28,39,47,56,73,94,<br>95,100,101,103,112<br>शिखरिणी 46,49,82<br>मन्दाक्रान्ता 57<br>मालिनी 75<br>वसन्ततिलकम् 110 | सरस्वत्युपस्थापनावसरे पञ्च नलान् वीक्ष्य दमयन्त्या विस्मयः। |
| त्रयोदशः | वसन्ततिलकम् 1-53<br>मालिनी 54,55<br>शार्दूलविक्रीडितम् 56 | पञ्चनलान् विलोक्य दमयन्तीमनसि संशयोत्पत्तिः। |
| चतुर्दशः | उपजातिः 1-87<br>शिखरिणी 88,91,92,96<br>वसन्ततिलकम् 93,95,99<br>स्वागता 94 | दमयन्त्या नलवरणम्। |

| | | |
|---|---|---|
| | स्रग्धरा 90,97<br>शार्दूलविक्रीडितम् 89,100,101 | |
| पञ्चदश: | वंशस्थम् 1-81<br>स्रग्धरा 82<br>शिखरिणी 83<br>शार्दूलविक्रीडितम् 84-93 | दमयन्तीपाणिग्रहणाय भीमनिमन्त्रितस्य नलस्य कुण्डिनपुरागमनम्। |
| षोडश: | वंशस्थम् 1-123<br>पुष्पिताग्रा 124,125<br>मालिनी 126-130<br>शार्दूलविक्रीडितम् 131 | नलस्य दमयन्तीपाणिग्रहणम्, परस्परं मिलनं च। |
| सप्तदश: | अनुष्टुप् 1-219<br>शिखरिणी 220<br>शार्दूलविक्रीडितम् 221,222 | देवै: संसूचितपरिणयस्य कले: नलाद् दमयन्तीवियोजन प्रतिज्ञा। |
| अष्यदश: | रथोद्धता 1-152<br>स्रग्धरा 153<br>शार्दूलविक्रीडितम् 154 | नलस्य दमयन्तीरमणम्। |
| एकोनविंश: | हरिणी 1-55<br>मन्दाक्रान्ता 56,62,64<br>शार्दूलविक्रीडितम् 57,58,63, 65,66,67<br>पृथ्वी 59<br>मालिनी 60<br>स्रग्धरा 61 | नानाप्रमोदपरिवेशे स्वभवने राज्ञो नलस्य सुखेन निवास:। |
| विंश: | अनुष्टुप् 1-157<br>पुष्पिताग्रा 158-160<br>शार्दूलविक्रीडितम् 161,162 | दमयन्तीनलयो: परस्परं प्रणय:। |

| | | |
|---|---|---|
| एकविंशः | स्वागता 1-119<br>वसन्ततिलकम् 120-140<br>पुष्पिताग्रा 141,142,144,<br>145,146,147,149<br>स्रग्धरा 143,159,161<br>शार्दूलविक्रीडितम् 148,<br>150-155,157,158,160,163<br>मालिनी 156<br>शिखरिणी 162 | नलजीवनचर्यावर्णनम्। |
| द्वाविंशः | उपजातिः 1-132<br>स्वागता 133<br>वसन्ततिलकम् 134-136<br>शार्दूलविक्रीडितम् 137,138,<br>140-143,145,<br>148,149,152,153<br>स्रग्धरा 139<br>शिखरिणी 144,150<br>मालिनी 146<br>पुष्पिताग्रा 147<br>हरिणी 151 | पारिवारिकजीवने नलस्य विनोदः। |

एवमेषां त्रयाणां महाकाव्यानां विषया अत्र गुम्फिता वृत्तविशेषाश्च दर्शिताः। कस्मिन् परिवेशे, कस्मिंश्च वर्ण्ये वस्तुनि कीदृशं वृत्तं विनियोज्यमिति जिज्ञासायां सुवृत्ततिलके क्षेमेन्द्रः सामान्यनियमानुपदिशत्येवम्-

**काव्ये रसानुसारेण वर्णनानुगुणेन च।**
**कुर्वीत सर्ववृत्तानां विनियोगं विभागवित्॥**[1]

अर्थात् काव्य-शास्त्र-काव्यशास्त्र-शास्त्रकाव्यादिविभागचतुष्टयज्ञाता सालङ्कारे विशिष्टशब्दार्थसाहित्ये शृङ्गारादिरसानुरूपेण मृदुकर्कशवर्ण्य-विषयानुसारेण सर्ववृत्तानां सकलच्छन्दसां विनियोगं कुर्यादिति। सामान्यतः

वृत्तानां प्रयोगे प्रयोक्ता रसभावादिवित् कविरेव प्रमाणमिति प्रतिफलति। प्रयोक्ता कविश्चेद् रसभावादिमान् तर्हि तत्तद्वृत्तेन निबद्धं काव्यं रसभावादिमत्सहृदयग्राहि स्वतः सम्भवतीति। प्रसिद्धकवेर्नियमानुकूलप्रयोगात् नानावृत्तविशेषाः स्पृहणीयतां प्राप्नुवन्ति। अर्थात् सुकवेः परिवेशानुगुणो वृत्तविनियोगो रुचिरतां धत्ते। तदुक्तं क्षेमेन्द्राचार्येण-

**नानावृत्तविशेषास्तु कवेः शस्तस्य शासनात्।**
**यान्ति प्रभोरिवात्यन्तमयोग्या अपि योग्यताम्।।**[2]

अनुरूपपदावलीयुक्तेनावस्थानुगुणच्छन्दोविधानेन कविप्रबन्धाः सज्जना इव शोभन्ते इतीदमप्यपरो विशेषो वृत्तानाम्। तदुक्तं क्षेमेन्द्रेण-

**तथाप्यवस्थासदृशैः साधुशब्दपदस्थिताः।**
**सुवृत्तैरेव शोभन्ते प्रबन्धाः सज्जना इव।।**[3]

इदं वृत्तविधानमस्थाने विनिवेशितं गले कटिसूत्रमिवानौचित्यमापादयति। अतो यत्नतः कविः काव्ये वृत्तौचित्यं विधातुमवधानवान् स्यात्। तदुक्तञ्च क्षेमेन्द्रेण-

**वृत्तरत्नावली कामादस्थाने विनिवेशिता।**
**कथयत्यज्ञतामेव मेखलेव गले कृता।।**[4]

त्रयाणां किरातार्जुनीयादिमहाकाव्यानां प्रथमसर्गा वंशस्थवृत्तनिबद्धाः। त्रिष्वपि सर्गान्तरेषु वृत्तानि उपजाति-वसन्ततिलक-स्वागता-रथोद्धता-प्रहर्षिणी-पुष्पिताग्रादीनि विनिवेशितानि विशेषतः। अन्त्ये तु त्रिषु सर्गाणां शार्दूलविक्रीडित-मालिनी-हरिणी-स्रग्धरादिवृत्तानि प्रयुज्य सर्गान्तानि दर्शितानि महाकाव्यलक्षणदर्शितनियमानुसारेण[5]। इदमत्र वैशिष्ट्यं त्रयाणां महाकाव्यानामेषां यत् प्रायेण सर्वेषां सर्गाणामन्तिमपर्याये मालिनीच्छन्दसा पद्यानि संरचितानि दृश्यन्ते। तथाहि- किरातार्जुनीयस्याष्टादशसर्गेभ्यो दशसर्गेषु अन्त्ये मालिन्याः प्रयोगो वर्तते। नैषधीयेऽपि द्वाविंशतिसर्गेभ्य एकादशसर्गेषु मालिन्यान्तो वर्तते। माघेऽपि विंशतिसर्गेभ्यः षट्सु सर्गेषु मालिन्याऽन्त्यं दृश्यते। मालिनीच्छन्दसा सर्गाणामवसानं सुवृत्ततिलककाराभिमतम्। एवमपि माघे

पञ्चमसर्गे श्रीकृष्णसेनाया रैवतकपर्वते प्रस्थानस्य निवासस्य च वर्णने विशेषतो वीरस्य क्वचिदपि रौद्रस्योपस्थापनं वसन्ततिलकेनोपवर्णितमस्ति, एवञ्च नैषधीये सरस्वतीप्रस्तुतस्वयंवरागतराजकुमारकुलवर्णने एकादशसर्गे, अथ च पञ्चनलीप्रस्तावे त्रयोदशसर्गे वसन्ततिलकवृत्तस्य प्रयोगो वीररौद्रोपस्थापने सर्गारम्भादेव वर्तते यः किलाभिमतः सुवृत्ततिलकारस्य। तदुक्तं तेन-

**वसन्ततिलकं भाति सङ्करे वीररौद्रयोः।**
**कुर्यात्सर्गस्य पर्यन्ते मालिनीं द्रुततालवत्॥**[6]

वंशस्थवृत्तस्य भूयान् प्रयोगस्त्रिषु महाकाव्येषु दृश्यते। एतेषां त्रयाणामारम्भो वंशस्थवृत्तेनैव। किञ्च किरातार्जुनीये चत्वारः सर्गा वंशस्थग्रथिताः, नैषधीये चत्वारोऽपि सर्गा वंशस्थशोभिताः माघे तु एकः सर्गो वंशस्थयुक्तः। एतानतिरिच्य त्रयाणां महाकाव्यानां बहुषु सर्गेषु वंशस्थस्य स्वल्पोऽपि प्रयोगो दृश्यते।

नैषधीयेऽष्टादशसर्गो, माघे च चतुर्दशसर्गो रथोद्धतानिबद्धौ। रथोद्धतावंशस्थयोः प्रयोर्गाहतां दर्शयन् ब्रूते क्षेमेन्द्रः-

**रथोद्धता विभावेषु भव्या चन्द्रोदयादिषु।**
**षाड्गुण्यप्रगुणानीतिर्वंशस्थेन विराजते॥**[7]

अर्थात् नैषधीयाष्टादशसर्गे दमयन्ती-नलयोः परस्परसम्भोगस्य वर्णनात् भूयसी चन्द्रोदयाद्युद्दीपनविभावानां प्रतिपद्यमुपस्थितिर्गोचरीभवति। अपि च माघकाव्यस्य चतुर्दशसर्गे राजस्वययज्ञस्य प्रमुखवर्णनीयतया तद्गतोद्दीपनविभावानां प्रचुरा प्रतीतिर्विद्यते। एतेषां विभावानामुपस्थिती रथोद्धतावृत्तेन मनोहरतरा सम्पद्यते। किन्तु 'षाड्गुण्यप्रवणा नीतिः वंशस्थेन शोभत' इति वदन् क्षेमेन्द्रो नीतेरुदाहरणं- नीतिर्यथा भारवेः-

**श्रियः कुरुणामधिपस्य पालनीं**
**प्रजासु वृत्तिं यमयुङ्क्त वेदितुम्।**
**स वर्णिलिङ्गी विदितः समाययौ**
**युधिष्ठिरं द्वैतवने वनेचरः॥**[8]

# कथावस्तु की दृष्टि से बृहत्रयी : एक चिन्तन

डा. सच्चिदानन्द तिवारी

भारवि और माघ, दोनों एक ही महाकाव्य क्षेत्र के युग-प्रवर्तक महाकवि हैं। भारवि से परवर्ती कवियों में माघ और श्रीहर्ष को प्रमुख माना जा सकता है। इन काव्यों के अनुशीलन से ज्ञात होता है कि महाकवि माघ मानो भारवि के काव्य का सम्बल लेकर ही साहित्यिक क्षेत्र में प्रविष्ट हुए और इसी का परिणाम है कि राजनीतिक कवि भारवि के अनुकरणकर्ता माघ का शिशुपालवध भी राजनीतिक काव्य बन गया। श्रीहर्ष के नैषधचरित में भारवि और माघ के काव्यों का अनुकरण परिलक्षित होता है। माघ ने अपने काव्य में प्रत्येक पद पर भारवि के काव्य का अनुकरण किया है, जिससे किरातार्जुनीयम् और शिशुपालवध में अनेक स्थलों पर साम्य दृष्टिगत होता है, यथा-

1. किरातार्जुनीयम् और शिशुपालवध दोनों ही महाकाव्य के लक्षणों से युक्त हैं।

2. दोनों ही काव्य देवताओं की महिमा का वर्णन करते हैं। किरातार्जुनीयम् में शिव की और शिशुपालवध में विष्णु की महिमा वर्णित है।

3. दोनों की कथावस्तु महाभारत से गृहीत है।

4. भारवि शिवभक्त हैं, इसलिए उन्होंने अपने काव्य के लिए शिव सम्बन्धी एक घटना को लिया है। माघ विष्णु भक्त हैं, इसलिए

---

1. "श्रियः कुरुणामधिपस्य पालनी ................।" – किरातार्जुनीयम्
"श्रियः पतिः श्रीमति शासितुं जगत् ................।" – शिशुपालवधम्

इति दर्शयति। किञ्च, भारविप्रयुक्तं वंशस्थं महीयते इति क्षेमेन्द्रो यथा-

**वृत्तच्छत्रस्य सा काऽपि वंशस्थस्य विचित्रता।**
**प्रतिभा भारवेर्येन सच्छायेनाधिकीकृता।।**[9]

इत्यनेन वंशस्थकारणेनैव भारविरातपत्रभारविरिति विरुदमवाप। तत्र षाड्गुण्यप्रवणा नीतिरित्यत्र सन्धिविग्रहयानस्थानासनसंश्रयद्वैधीभावेति षड्गुणाः। एवमन्यत्रापि किरातार्जुनीयस्य चतुर्थाऽष्टम-चतुर्दशसर्गेषु वंशस्थच्छन्दसा विशेषतो नीतेः षड्गुणान्यतमभेदा एव शोभन्ते। नैषधीयस्य प्रथमसर्गे यानस्थानसंश्रया गुणा वंशस्थच्छन्दसा वर्णिताः सन्ति। तथाहि कामपीडितस्य नलस्योपवनं प्रति यानम्, तत्र स्थानम्, तत्संश्रयश्च संदृश्यन्ते। एवं नवमसर्गे दमयन्तोपुरतो नलात्मप्रकाशने नीतिगुणा विद्योतन्ते। एवमपि षोडशसर्गे नलदमयन्तीपाणिग्रहणे, तयोर्मिथो मिलने च। शिशुपालवधे प्रथमसर्गे विशेषतो वंशस्थं विद्यते। तत्र नारदस्य श्रीकृष्णाय शिशुपालवध ार्थमिन्द्रसन्देशप्रापणे नीतिवर्णनं दृश्यते। तथाहि-

**तदेनमुल्लङ्घितशासनं विधेर्विधेहि कीनाशनिकेतनातिथिम्।**
**शुभेतराचारविपक्त्रिमापदो निपातनीया हि सतामसाधवः।।**[10]

उपजातिवृत्तं शृङ्गारसालम्बनभूतोदारनायिकारूपवर्णने, वसन्तादिकालवर्णने, तदङ्गानाञ्च वर्णने विशेषतः औचित्यदृष्ट्या प्रयोज्यम्। तदुक्तम्-

**शृङ्गारालम्बनोदारनायिकारूपवर्णनम्।**
**वसन्तादि तदङ्गञ्च सच्छायमुपजातिभिः।।**[11]

किरातार्जुनीये तृतीय-षोडश-सप्तदशसर्गेषु उपजातिवृत्तं प्रयुक्तमस्ति। अत्र वृत्तप्रयोगे भारविः स्वातन्त्र्यमवलम्बते, यतोहि वृत्तौचित्यानुसारि वर्णनं सर्गेष्वेषु नोपलभ्यते। किन्तु नैषधीये तृतीय-षष्ठ-सप्तमाऽ-ष्टम-दशम-चतुर्दश-द्वाविंशसर्गेषु सप्तसु उपजातिः प्रयुक्ता या क्षेमेन्द्रदर्शितौचित्यमाश्रित्येव दृश्यते। तथाहि, तृतीयसर्गे दमयन्तीपुरतो हंसस्य नलवरणप्रस्तावे आलम्बनभूताया नायिकाया दमयन्त्या अपि वर्णनम्, दशमे राजकुमाराणां

सरस्वतीकृते वर्णने तदालम्बनभूताया दमयन्त्या अलभ्यसौन्दर्यस्य व्यञ्जनया वर्णनम्, चतुर्दशे दमयन्त्या नलवरणव्याजेन वर्णनम्, द्वाविंशेऽपि नलविनोदव्याजेन दमयन्तीवर्णनमिति नैषधकार उपजात्यौचित्यमेवाद्रियते इति प्रतीयते। एवमपि शिशुपालवधस्य तृतीयसर्गे उपजात्या श्रीकृष्णप्रस्थानोद्दीपकानि वर्णितानीतीदं वृत्तौचित्यमेव।

किरातार्जुनीये सप्तविंशतिच्छन्दसां प्रयोगं भारविः करोति। श्रीहर्षो नैषधीयेऽष्टादशवृत्तानां विनिवेशनं विदधाति। माघेन तु शिशुपालवधे त्रिचत्वारिंशद्वृत्तानि प्रयुक्तानि। किरातार्जुनीये क्षमा-कान्तोत्पीडाऽ-लोलाऽ-परवक्त्रेति चत्वारि प्रयुक्तानि वृत्तानि माघनैषधीययोर्न सन्ति। शिशुपालवधे सन्निवेशितानि पञ्चकावलि(धृतश्री)-पथ्या-जलधरमाला-कुररीरुता-स्रग्विणी-मञ्जुभाषिणी-आर्या-भ्रमरविलसित-कुटजा-अतिशायिनी-रमणीयक-महामालिका-इन्द्रवंशा-इन्द्रवज्रा-रुचिरा-वैश्वदेवीति षोडशवृत्तानि किरातनैषधीययोर्न वर्तन्ते।

एवं बृहत्त्रय्यां वृत्तौचित्यं पुरातनैर्दर्शितदिशा यथाशक्ति दर्शितम्। इतोऽस्माभिः प्रत्येतुं शक्यं यत् भारवि-श्रीहर्षौ वंशस्थपटू दृश्येतेऽर्थात् वंशस्थेन स्वाभिव्यक्तिं प्रकटयितुं स्वाभाव्येन सौकर्यमनुभवतः। किन्तु, माघस्य नैकवृत्तप्रयोक्तृत्वपाटवं स्पष्टीभवति।

इदमपि स्पष्टं यत् कल्पनाप्रवणवर्णनादिषु कवय एते बहुवृत्त-प्रयोगमाश्रयन्ते। तथाहि किरातार्जुनीये हिमालयवर्णने भारविः षोडशवृत्तानि सन्निवेशयति पञ्चमसर्गे द्विपञ्चाशन्मात्रपद्यसंवलिते। अपि च माघो रैवतकपर्वतवर्णने चतुर्थसर्गे चतुर्विंशतिवृत्तानि योजयति अष्टषष्टिमात्रपद्यात्मके। किञ्च श्रीहर्षोऽपि तृतीयसर्गे हंसस्य नलदमयन्तीसंयोजन- प्रयासप्रस्तावे अष्टौ वृत्तानि प्रयुङ्क्ते। एतेनेदं प्रतीयते यत् कवयो वृत्तविधाने स्वरुच्यानुगुण्येन स्वतन्त्रा दृश्यन्ते। एषामियं स्वच्छन्दता औचित्यविधात्र्येव। एतदेवाप्युक्तम्-

**वृत्ते यस्य भवेद् यस्मिन्नभ्यासेन प्रगल्भता।**
**स तेनैव विशेषेण स्वसन्दर्भं प्रदर्शयेत्।।**

**एकवृत्तादरः प्रायः पूर्वेषामपि दृश्यते।**
**तत्रैवातिचमत्कारादन्यत्रारब्धपूरणात्।**[12]

तथापि वश्यवाच: कवयो वर्णनानुगुणरसानुसारिवृत्तविनियोगे स्वतन्त्रा इति तेषां तथाभूतो वृत्तविनिवेशोऽप्यौचित्यावह इति। तदुक्तम्-

**काव्ये रसानुसारेण वर्णनानुगुणेन च।**
**कुर्वीत सर्ववृत्तानां विनियोगं विभागवित्।।**[13]

।।इति दिक्।।

---

1 सुवृत्ततिलकम्- 3/7
2 सुवृत्ततिलकम्- 3/10
3 सुवृत्ततिलकम्- 3/12
4 सुवृत्ततिलकम्- 3/13
5 एकवृत्तमयै: पद्यैरवसानेऽन्यवृत्तकै:। (सा. द. 06/320)
6 सुवृत्ततिलकम्- 3/19
सुवृत्ततिलकम्- 3/18
किरातार्जुनीयम्- 1/1
सुवृत्ततिलकम्- 3/31
शिशुपालवधम्- 1/73
1 सुवृत्ततिलकम्- 1/17
12 सुवृत्ततिलकम्- 3/27-25
13 सुवृत्ततिलकम्- 3/7

# कथावस्तु की दृष्टि से बृहत्रयी : एक चिन्तन

डा. सच्चिदानन्द तिवारी

भारवि और माघ, दोनों एक ही महाकाव्य क्षेत्र के युग-प्रवर्तक महाकवि हैं। भारवि से परवर्ती कवियों में माघ और श्रीहर्ष को प्रमुख माना जा सकता है। इन काव्यों के अनुशीलन से ज्ञात होता है कि महाकवि माघ मानो भारवि के काव्य का सम्बल लेकर ही साहित्यिक क्षेत्र में प्रविष्ट हुए और इसी का परिणाम है कि राजनीतिक कवि भारवि के अनुकरणकर्ता माघ का शिशुपालवध भी राजनीतिक काव्य बन गया। श्रीहर्ष के नैषधचरित में भारवि और माघ के काव्यों का अनुकरण परिलक्षित होता है। माघ ने अपने काव्य में प्रत्येक पद पर भारवि के काव्य का अनुकरण किया है, जिससे किरातार्जुनीयम् और शिशुपालवध में अनेक स्थलों पर साम्य दृष्टिगत होता है, यथा–

1. किरातार्जुनीयम् और शिशुपालवध दोनों ही महाकाव्य के लक्षणों से युक्त हैं।

2. दोनों ही काव्य देवताओं की महिमा का वर्णन करते हैं। किरातार्जुनीयम् में शिव की और शिशुपालवध में विष्णु की महिमा वर्णित है।

3. दोनों की कथावस्तु महाभारत से गृहीत है।

4. भारवि शिवभक्त हैं, इसलिए उन्होंने अपने काव्य के लिए शिव सम्बन्धी एक घटना को लिया है। माघ विष्णु भक्त हैं, इसलिए

---

1. "श्रियः कुरुणामधिपस्य पालनी ................।" – किरातार्जुनीयम्
"श्रियः पतिः श्रीमति शासितुं जगत् ................।" – शिशुपालवधम्

उन्होंने महाभारत से कृष्ण सम्बन्धी एक घटना को लेकर अपने काव्य की रचना की।

5. दोनों काव्यों का आरम्भ मङ्गलार्थक 'श्री' शब्द से हुआ है।

6. दोनों काव्य के प्रथम सर्ग में सन्देश--कथन है, यथा–

'किरातार्जुनीयम् में वनेचर द्वारा युधिष्ठिर के प्रति और शिशुपालवध में नारद के द्वारा श्रीकृष्ण के प्रति।'

7. किरातार्जुनीयम् में युधिष्ठिर महर्षि व्यास का विधिवत् स्वागत करते हैं तो शिशुपालवध में श्रीकृष्ण देवर्षि नारद का।

8. दोनों काव्यों के चतुर्थ सर्ग में विविध छन्दों का प्रयोग हुआ है।

9. भारवि के भावों के साथ-साथ उनकी भाषा, शैली और उनके अलङ्कारों तक का अनुकरण माघ के शिशुपालवध में मिलता है।

उपर्युक्त से सम्बन्धित और भी ढ़ेर सारे उदाहरण देख सकते हैं। अतः यह निश्चित है कि माघ ने अपने काव्य का कथानक चुनते समय सम्भवतः इस बात का पूरा ध्यान रखा है कि ऐसे कथानक का चयन किया जाए जिसमें भारवि-काव्य का पूर्ण अनुकरण किया जा सके।

भारवि के प्रकृति-चित्रण में ग्राम्य-जीवन का अतिसौम्य रूप दृष्टिगत होता है। गाँवों, ग्राम्य-कृषकों तथा लता-गुल्मों के साथ आश्रमों, मुनियों और आश्रम लताओं का यह तारतम्य कितना सुन्दर है, जो भारवि ने चतुर्थ सर्ग में दर्शाया है, यथा–

**जनैरुपग्राममनिन्द्यकर्मभिर्विविक्तभावेंगितभूषणैर्वृताः।**
**भृशं ददर्शाश्रममण्डपोपमाः सपुष्पहासाः स निवेशवीरुधः।।**[1]

भारवि का व्यावहारिक तथा शास्त्रीय अनुभव इतना प्रौढ़ और परिपक्व है कि उनके वाक्य उपदेशमय होने से पण्डित-जनों की जिह्वा

---

1. किरातार्जुनीयम् 4/19

पर सदैव नर्तन करते हुए दिखते हैं। वह अच्छी तरह जानते हैं कि हितकारक वचन का मनोहर होना दुर्लभ है–

**"हितं मनोहारि च दुर्लभं वचः।"**

भारवि कुशल राजनीतिज्ञ थे। उनको राजनीति, राजपरिषद्, विद्वत्परिषद् आदि की जानकारी के साथ-साथ वनेचर किरातों के रहन-सहन की छोटी-छोटी बातों का भी ज्ञान था। अतः हम कह सकते हैं कि वह मूल रूप से कवि तो थे ही किन्तु शस्त्रों और शास्त्रों के भी वे निपुण पण्डित थे।

माघ भी मूलतः कवि थे, किन्तु शास्त्रों के ज्ञाता भी थे। भिन्न-भिन्न शास्त्रों के सिद्धान्तों का सुन्दर रीति से जैसा प्रतिपादन माघ ने किया, वैसा संस्कृत साहित्य के किसी अन्य महाकाव्य में कदाचित् ही देखने को मिलता है। भारवि की राजनीतिक-पटुता तथा श्रीहर्ष की दार्शनिक उद्भटता प्रशंसनीय है, किन्तु माघ में अनेक शास्त्रों का जो परिनिष्ठित ज्ञान परिलक्षित होता है, उसका भारवि और श्रीहर्ष में अभाव सा है।

माघ राजनीति के धुरन्धर विद्वान थे। उनके काव्य के राजनीतिक पक्ष को देखकर ऐसा प्रतीत होता है कि उन्होंने कौटिल्य के अर्थशास्त्र का आमूल अध्ययन किया होगा, साथ ही वर्षों तक उनका किसी राज-परिवार से सम्बन्ध रहा होगा। युधिष्ठिर, भीष्म, उद्धव और बलराम के मुख से माघ ने ऐसी बाते कहलाई हैं जो यह विश्वास दिलाती हैं कि नीति और अर्थ का सुविज्ञ ज्ञाता कोई राजमंत्री ही राजनीति की इतनी बारीकियों को जान सकता है। उनकी राजनीतिक बुद्धि का परिचय शिशुपालवध के द्वितीय, चतुर्थ, एकोनविंश तथा विंश सर्गों में सम्यक् रूप से देखा जा सकता है।

शिशुपालवध के अनेक स्थलों पर सङ्गीत-विषयक महत्त्वूपर्ण चचाओं को देखकर उनकी तद्विषयक अभिज्ञता का पता चलता है (11/1-2)।

देवर्षि नारद की महती वीणा का जो वर्णन प्रथम सर्ग में प्राप्त होता है, वह माघ के सङ्गीत-शास्त्र के गूढ़ ज्ञान का परिचायक है–

**रणद्भिराघट्टनया नभस्वतः पृथग्विभिन्नश्रुतिमण्डलैः स्वरैः।**
**स्फुटीभवद्ग्राममविशेषमूर्च्छनामवेक्षमाणं महतीं मुहुर्मुहुः॥**

–किरातार्जुनीयम् 1/10

भारवि की भाषा और शैली का भी माघ द्वारा यदा-कदा अनुकरण किया गया है, यथा– भारवि के युधिष्ठर, भीम को समझाते हुए कहते हैं – 'अभ्युदय के इच्छुक पुरुष के क्रोध से उत्पन्न अन्धकार को अपनी सद्बुद्धि द्वारा दूर करना चाहिए क्योंकि सूर्य भी रात्रिजनित अन्धकार को नष्ट किए बिना उदित नहीं होता', यथा–

**अपनेयमुदेतुमिच्छता तिमिरं शेषमयं धिया पुरः।**
**अविभिद्य निशाकृतं तमः प्रभया नांशुमताऽप्युदीयते॥**

–किरातार्जुनीयम् 2/26

इसी शैली का अनुकरण करते हुए माघ के बलराम श्रीकृष्ण से कहते हैं– "उन्नत शत्रुओं के सिर पर अनायास पैर रखे बिना आधारहीन कीर्ति द्युलोक में कैसे आरोहण कर सकती है;" यथा–

**अकृत्वा हेलया पादमुच्चैर्मूर्धसु विद्विषाम्।**
**कथङ्कारमनालम्बा कीर्तिर्द्यामधिरोहति॥** –शिशुपालवध 2/52

इस प्रकार भारवि और माघ के काव्यों में अनेक स्थानों पर साम्य देखा जा सकता है।

नैषधचरित के कथाविधान को उपर्युक्त दोनों महाकाव्यों के परिप्रेक्ष्य में भी संक्षिप्त रूप से परखा जा सकता है–

कालक्रम की दृष्टि से बृहत्रयी में नैषधचरित महाकाव्य का चरम स्थान है। अपने काव्य के प्रणयन में श्रीहर्ष का अपने पूर्ववर्ती भारवि और माघ के काव्यों से प्रभावित होना स्वाभाविक है। नैषधचरित का कथानक किरातार्जुनीयम् और शिशुपालवध से बहुत भिन्न है। फिर भी उसमें कहीं किरातार्जुनीयम् के साथ, कहीं शिशुपालवध के साथ और कहीं दोनों के साथ साम्य परिलक्षित होता है। अनेक स्थलों पर वैषम्य

भी दृष्टिगत होता है। किरातार्जुनीयम् और शिशुपालवध के कथा-विधान के साथ नैषधचरित के कथा-विधान का साम्य और वैषम्य संक्षिप्त रूप में इस प्रकार देखा जा सकता है–

1. किरातार्जुनीयम् और शिशुपालवध की भाँति नैषधचरित भी महाकाव्य के लक्षणों से युक्त है।

2. नैषधचरित की कथावस्तु भी महाभारत से गृहीत है।

3. माघ की भाँति किसी देवता से सम्बद्ध कथा को न लेकर श्रीहर्ष ने मानव सम्बन्धी कथा का अपने काव्य के लिए चयन किया है।

4. उक्त तीनों महाकाव्यों का आरम्भ वस्तु-निर्देश से हुआ है।

5. किरातार्जुनीयम् में युधिष्ठर व्यास का, शिशुपालवध में श्रीकृष्ण नारद का तथा नैषधचरित में दमयन्ती दूतरूप नल का स्वागत करती है (द्रष्टव्य 8/20-32)। शिशुपालवध में श्रीकृष्ण नारद से कहते हैं– "आपका देश त्रिकाल में शरीरधारियों की योग्यता को प्रकट करता है, क्योंकि (वर्तमानकाल में) पाप को नष्ट करता है, (भविष्यकाल में) आने वाले शुभ का कारण है तथा (भूतकाल में) पहले किए गए पुण्यों का परिणाम है", यथा–

**हरत्यधं सम्प्रति हेतुरेष्यतः**
**शुभस्य पूर्वाचरितैः कृतं शुभैः।**
**शरीरभाजां भवदीयदर्शनं**
**व्यनक्ति कालत्रितयेऽपि योग्यताम्॥** –शिशुपालवध 1/26

नैषधचरित में दमयन्ती इसी से मिलते-जुलते भाव को व्यक्त करती हुई दूत रूप नल से कहते हैं– "यहाँ आपके प्रवेश करने में मेरे नेत्रों का पुण्य भी कारण है, क्योंकि शरीरशोभा से कामदेव को जीतनेवाले आपको पहरेदारों ने नहीं देखा, जबकि मेरे नेत्रों ने देख लिया, यथा–

**तव प्रवेशे सुकृतानि हेतुं**

**मन्ये मदक्ष्णोरपि तावदत्र।**
**न लक्षितो रक्षिभटैर्यदाभ्यां**
**पीतोऽसि तन्वा जितपुष्पधन्वा।।** –नैषधचरित 8/27

किरातार्जुनीयम् और शिशुपालवध में अनेक पात्रों के बीच राजनीतिविषयक चर्चाएँ दिखाई गई हैं। नैषधचरित में राजनीति को कोई स्थान नहीं दिया गया है। शिशुपालवध नायक प्रधान काव्य है। किरातार्जुनीयम् में भी नायिका का महत्त्व नहीं के बराबर है। परन्तु नैषधचरित में नायक-नायिका का समान महत्त्व है। इसके नायक और नायिका के सौन्दर्य का, गुणों का तथा उनके विप्रलम्भ और सम्भोग का विस्तार से वर्णन किया गया है।

भारवि और माघ के काव्यों में किसी करुण-प्रसङ्ग का समावेश नहीं है। नैषधचरित में श्रीहर्ष में हंस-विलाप को रखकर एक सुन्दर करुण-प्रसङ्ग का सन्निवेश किया है।

श्रीहर्ष कविता के क्षेत्र में भारवि और माघ की परम्परा में शृङ्गार के कलापक्षीय कवि हैं। श्रीहर्ष केवल एक महान कवि ही नहीं, अपितु अनेक शास्त्रों के महान् पण्डित भी थे। वे अपनी अलौकिक प्रतिभा और अपने काव्य की चारुता से परिचित थे और इनका उन्हें गर्व भी था। अपनी कविता के लिए श्रीहर्ष ने **"निसर्गोज्ज्वल, चारु, नव्य, अतिनव्य"** आदि पदों का प्रयोग किया है और अपने नैषधचरित को उन्होंने "अतिशय स्वादिष्ट अर्थों को उत्पन्न करने वाला" 'शरत्कालीन चन्द्रमा की चन्द्रिका के समान उज्ज्वल उक्तियों से परिपूर्ण', 'एक भी नवीन अर्थ या घटना को न छोड़ने वाला' और 'अभूतपूर्व रसमयी उक्तियों से समन्वित' कहा है।

श्रीहर्ष का कथन है कि विद्वान लोग ही उनके काव्य का आनन्द ले सकते हैं; सामान्य लोग उनकी कविता-कामिनी का आनन्द लेने में समर्थ नहीं हो सकते, इसके लिए उन्हें गुरु के चरणों में बैठकर विधिवत् अध्ययन करना होगा, यथा–

**यथा यूनस्तद्वत्परमरमणीयापि रमणी**

**कुमाराणामन्तःकरणहरणं नैव च कुरु।**
**मदुक्तिश्चेदन्तर्मदयति सुधीभूय सुधियः**
**किमस्या नाम स्यादरसपुरुषानादरभरैः।।**
**ग्रन्थग्रन्थिरिह क्वचित् क्वचिदपि न्यासि प्रयत्नान्मया**
**प्राज्ञम्मन्यमना हठेन पठिती मास्मिन् खलः खेलतु।**
**श्रद्धाराद्धगुरुश्लथीकृतदृढ़ग्रन्थिः समासादय-**
**त्वेतत्काव्यरसोर्मिमज्जनसुखव्यासज्जनं सज्जनः।**

—कविप्रशस्तिः 1, 3

श्रीहर्ष कवि होने के साथ-साथ प्रकाण्ड दार्शनिक भी थे। उनके नैषधचरित में अनेक स्थलों पर विशेषकर सप्तदश सर्ग में चार्वाक, बौद्ध, न्याय, वैशेषिक, सांख्य, योग, मीमांसा और अद्वैत-वेदान्त के गम्भीर सिद्धान्तों पर चर्चा हुई है। श्रीहर्ष की यह गर्वोक्ति—'सुकुमार साहित्य हो या न्याय की दुरूह ग्रन्थियों से आबद्ध कठिन तर्क, मेरी भारती का सभी क्षेत्रों में समान प्रवेश है', यथा—

**साहित्ये सुकुमारवस्तुनि दृढ़न्शायग्रहग्रन्थिले।**
**तर्के वा मयि सविधातरि समं लीलायते भारती।।**

इस प्रकार भारवि, माघ और श्रीहर्ष तीनों एक ही परम्परा के कवि हैं। तीनों का ही विविध शास्त्रों में प्रवेश था। उनका विविध शास्त्रज्ञान उनके काव्यों से जाना जा सकता है। भारवि ने जिस अलङ्कृत शैली को जन्म दिया, उसी को अपनाकर माघ ने उसका विकास किया और श्रीहर्ष के हाथों उसी शैली ने विकास की चरम सीमा को प्राप्त किया।

# बृहत्त्रय्यां कविशिक्षा

डॉ. श्रीकान्तकुमारपण्डा

'**कविर्मनीषी परिभूः स्वयंभूः ................**' इति पुरातनी प्रसिद्धिः। वातावरणात् सूक्ष्मतमं किमपि तत्वमादाय विशालतमं वस्तु स्रष्टुं समर्थः विध्यपरपर्यायः स एषः कविः। प्रतिभावान् कविः औचित्यैधमानान्तकरणः यथेच्छं काव्यरूपं विरचयन् तत्र-तत्र असम्भाव्यमानमपि सम्भाव्यमानं प्रतिपादयति। किञ्च अवस्तावस्याऽपि वास्तवत्वमुररीकृत्य आनन्दातिरेक-मातनोति। तदुक्तं ध्वनिकारेण -

**अपारे काव्यसंसारे कविरेव प्रजापतिः।**
**यथेदं रोचते विश्वं तथेदं परिवर्तते।।**

परन्तु तथापि काव्यसर्जनमसमये सः सारस्वतकविरपि काव्य-शास्त्रीय-निमयविधानस्य अतिक्रमः कर्तुं शक्यते, परन्तु सः काव्यशास्त्रीय ज्ञाता भवति। अतः तत् सीमायाम् आबद्धोऽपि भवति। तेन तस्य काव्यमपि रमणीयतरं विभाति। अतः शास्त्रपुराणकाव्यशास्त्रद्यालोडनेन काव्यनिर्माणाय काव्यशास्त्रकारप्रयुक्तप्रसिद्ध्यङ्गीकरणेन तत्तत्काव्यकारणाम-भिनवप्रयोग एव कविशिक्षेति प्रतिफलन्ति।

संक्षेपतः कविशिक्षायामेतेषां विषयाणां विवेचनं प्रामुख्येन भवति। (1) कवेः ज्ञातव्यानां विषयाणां निर्देशः (2) काव्यरचनाशिक्षा, विशेषेण श्लोकरचनाविधिः (3) कवौ विविधरूचीनां प्रवृत्तीनां च संवर्धनोपदेशः (4) आशुकवित्वम्। एवं निर्गलितार्थोऽयं यत् कविशिक्षायाः प्रमुखं प्रायोजनं काव्यनिर्माणसिद्धिरेव।

बृहत्त्रयी विश्वसाहित्यसमवाये अति प्रामुख्यं धत्ते। बृहत्त्रयीति शब्दयोजना न यादृच्छिकी अपितु विविधज्ञानगरिम्णा बृहत्वात् वास्तविकी।

अतः अत्र सत्सु अपि इतरशास्त्रज्ञानसन्निवेशेषु निरतिशयसुखास्वादाय विद्यमाना कविशिक्षा सुतरां प्रणिधानयोग्या वर्तते। सम्प्रति सैषा कविशिक्षा दिङ्मात्रमिहोपन्यस्यते।

किरातर्जुनीयमहाकाव्यकर्तुः षष्ठखीस्तशताब्दकवेर्भारवेः काव्य-भारतीयस्वरूपं निश्चेतुं प्रमाणान्तरं नापेक्षते, यतो हि स स्वमहाकाव्य-पात्रसम्भाषणप्रसङ्गेषु तत्तद्भाषावैशिष्ट्यनिरूपणव्याजने स्फुटरूपेण कविशिक्षाविषयोऽपि प्रतिपादयन्निव दृश्यते।

काव्यं खलु वाक्यस्वरूपं भवति। यथा हि विश्वनाथेनोक्तम्-'वाक्यं रसात्मकं काव्यम्' इति। तथापि लक्षणया वाक्याङ्गं पदमपि काव्यरूपेणाभिधीयते, अस्माद्धेतोः पण्डितराजेन प्रोक्तं 'रमणीयार्थं प्रतिपादकः शब्दः काव्यम्' इति। अस्मात् काव्यरचनायां काव्योपादानभूतस्य पदस्य ज्ञानं सर्वतः प्रथममपेक्षितं भवति। समुचितपदस्य समुचितस्थाने प्रयोगादेव काव्ये विवक्षितार्थप्रतीतिर्जायते, अतएव कविशिक्षायां पदप्रयोगो शिक्षाया महत्त्वपूर्णं स्थानं वर्तते। महाकविभारविरपि स्वकाव्ये स्वमहाकाव्यपात्रसम्भाषणप्रसङ्गेषु कविना कथं सुमचितपदानां प्रयुक्तव्यमिति विषये कथयति। यथा-

विजित्य यः प्राज्यमयच्छेदुत्तरान्कुरुनकुप्यं वसु वासवोपमः।

**स वल्कवासांसि तवाधुनाहरन्**
**करोति मन्युं न कथं धनञ्जयः॥**[1]

अत्र अर्जुनाय 'धनञ्जय' पदस्य प्रयोगः अस्ति। पदस्यास्य प्रयोगेण पद्ये औचित्यस्य सृष्टिः भवति। अपि च-

**अवन्ध्यकोपस्य विहन्तुरापदां**
**भवन्ति वश्याः स्वयमेव देहिनः।**
**अमर्षशून्येन जनस्य जन्तुना**
**न जातहार्देन न विद्विषादरः॥**[2]

---

1. कि. 1/35

2. कि. 1/33

अत्र कविना अमर्षशून्यव्यक्तिकृते 'जन्तुना' पदस्य प्रयोगं कृतम्। अतः अत्र जन्तुपदप्रयोगेण संपूर्णस्य पद्यस्य सौन्दर्यं प्रकटीभवति।

इत्थं काव्ये चारुत्वोत्पत्तये समुचितपदानां प्रयोगं कर्तव्यमिति भारवेर्वक्ति।

केचन सहृदया अर्थालङ्कारं प्रशंसन्ति, केचन च शब्दालङ्कारम्। यस्य रचनया द्वावपि सन्तुष्टौ भवतः स एव श्रेष्ठः कविरिति भारविर्वक्ति-

**स्तुवन्ति गुर्वीमभिधेयसम्पदः विशुद्धिमुक्तेरपरेविपश्चितः।**
**इति स्थितायां प्रतिपुरुषं रुचौ सुदुर्लभा सर्वमनोरमा गिरः॥[3]**

पुनश्च गिरां विस्तरे कवेः विमला मतिर्हतुर्भवति एतदर्थं भारविर्वक्ति-

**अपवर्जितविप्लवे शुचौ हृदयग्राहिणि माङ्गल्यास्पदे।**
**विमला तव विस्तरे गिरां मतिरादर्श इवाभिदृश्यते॥[4]**

भारविमतेऽविज्ञातप्रबन्धस्य कवे रचनाऽफलतां व्रजति-

**अविज्ञातप्रबन्धस्य वचो वाचस्पतेरपि।**
**व्रजत्यफलतामेव नयद्रुह इवेदितम्॥[5]**

वर्ण्यानां विषयाणां शिक्षाक्रमे देश-कालयोः शिक्षापि महत्त्वपूर्णा वर्तते। प्रायः सर्वैरपि शास्त्रिभिः स्वीकृतं यत् देशकालयोर्ज्ञानं कवये सुतरामावश्यकं भवतीति। देश-कालयोः सम्यक् ज्ञानेन कवेर्महान् लाभो भवति। क्षेमेन्द्राचार्यमतेन देशकालयोः सम्यक्ज्ञानेन काव्येऽनौचित्यदोषो नायाति। किरातार्जुनीये देशौचित्यस्योदाहरणं यथा-

---

3. कि. 14/5
4. कि. 2/26
5. कि. 11/43

**श्रीमल्लताभवनमौषधयः प्रदीपाः**
**शय्या नवानि हरिचन्दनपल्लवानि।**
**अस्मिन् रतिश्रमनुदश्च सरोजवाताः**
**स्मर्तुं दिशन्ति न दिवः सुरसुन्दरीभ्यः॥**

अपि च -

**ईशार्थमम्भसि चिराय तपश्चरन्त्या**
**यादोविलङ्घनविलोलविलोचनायाः।**
**आलम्बताग्रकरमत्र भवो भवान्याः**
**श्च्योतन्निदाधसलिलाङ्गुलिना करेण॥**

प्रस्तुते पद्ये हिमालयस्य वर्णनमस्ति। उक्तेषूदाहरणेषु स्फुटमेतद्यद् भारविणा स्वकृते किरातार्जुनीये महाकाव्ये कथावस्तुविन्यासं कुर्वता कविशिक्षायाः विषयं समुपस्थापितम्।

महाकविमाघः शिशुपालवधमहाकाव्ये कवीनां कृते समुचितमुपदेशं प्रदर्शितवान्। स्वमहाकाव्यपात्रसम्भाषणप्रसङ्गेषु तत्तदभाषावैशिष्ट्यनिरूपणव्याजेन स्फुटरूपेण कविशिक्षाविषयस्वरूपम् अपि प्रतिपादयन्निव दृश्यते। यथा कालिदासो 'वागर्थाविव सम्पृक्ताविति' यथा च भारविः 'प्रसन्नगम्भीरपदा सरस्वतीति निगदन्' शब्दार्थौ निर्दिशति, तथैव माघोऽपि -

**नालम्बते द्वैष्टिकतां न निषीदति पौरुषे।**
**शब्दार्थौ सत्कविरिव द्वयं विद्वानपेक्षते॥**[6]

अत्र 'शब्दार्थौ सत्कविरिव' इति पदे उल्लेखितं यत् श्रेष्ठः कविः सः भवितुमर्हति यः शब्दार्थयोः उभयोः अपेक्षां करोति। अपि च स्वयं सुन्दरतमं दृश्यं वर्णनाय तस्य चिन्तनं कदापि अशुद्धं दोषकरं वा नैव भवतीति कविवरस्याभिप्रायः। यथा-

**मुदेमुरारेरमरैः सुमेरोरानीय यस्योपचितस्य शृङ्गैः।**
**भवन्ति नोद्दामगिरां कवीनामुच्छ्रायसौन्दर्य गुणा मृषोद्याः॥**[7]

---

6. शिशु. 2/86



7. शिशु. 4/10

तात्पर्यमेतत् देवैः सुमेरुशिखरस्य समृद्धिमानीय रैवतकशिखरस्य प्रवर्द्धनं कृतम्। अत्र कविना या काऽपि प्रगल्भवाणी प्रकट्यते सा न मिथ्येति। अतः स्वकाव्ये कविः एवमेव वर्णनं कर्तुं शक्यते इति माघस्योपदेशः।

काव्यरचनायाः चिन्तनमननस्योपयुक्तः समयो ब्राह्ममुहूर्त्त इति। अस्यापरं नाम देववेलेति। देववेलायां बुद्धिः विशदः भवति। अधोलिखित-श्लोकः तथ्यस्य कृते प्रमाणम्-

**क्षणशयितविवुद्धाः कल्पयन्तः प्रयोगा-**
**नुदधिमहति राज्ये काव्यवद्दुर्विग्राहे।**
**गहनमपररात्रप्राप्तबुद्धिप्रसादाः**
**कवय इव महीपश्चिन्तयन्त्यर्थ जातम्।।**[8]

अतः कविः ब्राह्ममुहूर्त्ते काव्यरचनायाः चिन्तनमननं कुर्यात् इति अभिप्रायः। पुनः रसभावस्य ज्ञाता कवीनां कृते ओजगुणयुक्ताथवा प्रसादगुणयुक्ता प्रबन्धरचनाकर्त्तव्यमिति नियमो नास्तीति माघस्याशयः। तत्र कृते प्रमाणम्-

**तेजः क्षमा वा नैकान्तं कालज्ञस्य महीपते।**
**नैकमोजः प्रसादो वा रसभावविदः कवेः।।**[9]

काव्यरचनार्थं शब्दशास्त्रज्ञानं, छन्दसः ज्ञानं, कोशज्ञानं, अर्थशास्त्रज्ञानं, इतिहासाश्रितकथानां लोकव्यवहाराणां तथा कलानां मननमावश्यकम्। भामहेन तस्य कारिकायां प्रतिपाद्यते-

**शब्दश्छन्दोऽभिधानार्था इतिहासाश्रयाः कथा।**
**लोके युक्तिः कलाश्चेति मन्तव्या काव्यगैरमी।।**[10]

तद्यथा शिशुपालवधे महाकवेः वर्णने दृश्यते-

---

8. शिशु. 11/16
9. शिशु. 2/83
10. का. अ. 1/9

**त्रस्तौ समासन्नकरेणुसूत्कृतान्नियन्तरि**
**व्याकुलमुक्तरज्जुके।**
**क्षिप्तावरोधाङ्गनमुत्पथेन गां विलङ्घ्य लघ्वीं करभौ**
**वभञ्जतुः॥[11]**

तथैव लेकशास्त्रसम्बन्धज्ञानं यथा-

**वनस्पतिस्कन्धनिषण्णवाल प्रवालहस्ताः प्रमदा इवात्र।**
**पुष्पेक्षणैर्लम्भित लोचकैर्वा मधुव्रतव्रातवृतैर्व्रतत्यः॥[12]**

अनेन ज्ञायते कवीनां कृते विभिन्नानां शास्त्राणां ज्ञानं परमावश्यकं भवति। पुनः स्वप्रतिभानुसारेणासङ्गतं वर्णनं कर्तुं शक्यते, किन्तु पदार्थसङ्गतिमय औचित्यपूर्णः प्रबन्धः कष्टेन निर्मीयते-

**बह्वपि स्वेच्छया कामं प्रकीर्णमभिधीयते।**
**अनुज्झितार्थसम्बन्धः प्रबन्धो दुरुदाहरः॥[13]**

प्रबन्धरचनासु काचिदन्वितिरनिवार्या भवति। तस्य कथावस्तु एकस्मिन् सूत्रे ग्रथितं भवति, तत्र नायको मालायामेकार्थतन्तुप्रोतायां यथा सुमेरुर्भवति तथा भवति। वस्तुतः समग्राऽपि रचना नायके केन्द्रिता भवति। अतो माघो वक्ति-

**यातव्यपार्ष्णिग्राहादिमालायामधिकद्युतिः।**
**एकार्थतन्तुप्रोतायां नायको नायकायते॥[14]**

पुनः व्याकरणसम्मतशब्दानां प्रयोगं कुर्यात् इति विषये कथयति-

**असम्पादयतः किञ्चिदर्थं जातिक्रियागुणैः।**

**यदृच्छशब्दवत्पुंसः संज्ञायै जन्मकेवलम्॥**

---

11. शिशु. 12/24

12. शिशु. 4/35

13. शिशु. 2/73

14. शिशु. 2/92

उक्तेषु सन्दर्भेषु सिद्धमतेद् यन्माघः कविशिक्षाविषयेऽपि स्वकीयं गम्भीरं चिन्तनं स्वकीयै शिशुपालवधमहाकाव्ये प्रस्तौति।

व्याकरणज्ञानं विना तु किमपि नैव प्रवर्तितुं शक्यते। 'मुखं व्याकरणं स्मृतम्' इति प्रसिद्धमेव। मुखं विना यथा वक्तुं नैव शक्यते तथैव व्याकरणज्ञानं विना एकमपि पदं नैव प्रयोक्तुं शक्यते कविना। काव्ये त्वनेकेषां शब्दरूपाणां धातुरूपाणाञ्च प्रयोगे सति 'च्युतसंस्कृति' दोषः काव्ये समापतति। अतएव दोषदूरीकरणार्थमपि व्याकरणशास्त्रस्य ज्ञानं सुतरामावश्यकं वर्तते। यथाह श्रीहर्षः नैषधे -

**क्रियेत चेत्साधुविभक्तिचिन्ता**
**व्यक्तिस्तदा साप्रथमाभिधेया।**
**या स्वौजसां साधयितुं विलासै-**
**स्तावत्क्षमानाम पदं बहु स्यात्।।**[15]

काव्यसर्जने प्रतिभायाः अभ्यासस्य च महत्त्वं विषये कथयति-

**अजस्रमभ्यासमुपेयुषां समं मुदैव देवः कविना बुधेन च ।**
**दधौ पटीयान् समयं नयन्नयं दिनेश्वरश्रीरुदयं दिने दिने।।**[16]

काव्यरचना श्रुतिसङ्गता स्यात्। अतः आह -

**मध्ये श्रुतीनां प्रतिवेशिनीनां सरस्वती वासवती मुखे नः।**
**ह्रियेव ताभ्यश्चलतीयमद्धा पथान्न सत्सङ्गगुणेन नद्धा।।**[17]

काव्ये सुवर्णैः (शोभनवर्णैः) सह वाण्या महत्त्वं स्वीकुर्वन् स वदति-

**न सुवर्णमयी तनुः परं ननु किं वागपि तावकी तथा।**[18]

---

15. नै. 3/23
16. नै. 1/17
17. नै. 3/65
18. नै. 2/52

काव्ये रसानां वर्णने शृङ्गाररसस्य महत्त्वं निरूपयति यथा-

**शृङ्गारभृङ्गारसुधाकरेण वर्णस्रजानूपय कर्णकूपौ।**
**त्वच्चारुवाणीरसवेणितीरतृणानुकारः खलु कोषकारः॥[19]**

सरसकाव्यसर्जनमेव विजयते -

**कः शच्या रचयाञ्चकार चरिते काव्यं स नः कथ्यताम्।**
**एतस्यास्तु करिष्यते रसधुनीपात्रे चरित्रे न कैः॥[20]**

कलुषहारिसहृदयहर्षकारि च काव्यसर्जनं प्रशस्तम्-

**भवदवृत्तस्तोतुर्मदुपहितकण्ठस्य कवितु-**
**र्मुखात्पुण्यैः श्लोकैस्त्वयि धनमुदेयं जनमुदे।**
**ततः पुण्यश्लोकः क्षितिभुवनलोकस्य भविता**
**भवानाख्यातः सन् कलिकलुषहारी हरिरिव॥[21]**

उक्तेषु सन्दर्भेषु सिद्धमेतद् श्रीहर्षः कविशिक्षायामपि स्वकीयं गम्भीरं चिन्तनं स्वकीये नैषधीयचरितमहाकाव्ये प्रस्तौति।

इत्थं बृहत्त्रय्यां वर्णिता कविशिक्षा कवीप्सो जनानां कृते नितान्तोपयोगी।

### उपसंहारः

एवमेतस्याः कविशिक्षायाः विवेचनेनाऽनेकेषां तथ्यानां समुन्मीलनं भवति। कविकर्मणो महनीयत्वादस्मिन् कर्मणि महत्तमानामेवोपादा-नानामावश्यकता भवति। न खलु यः कोऽपि जनः कविर्भवितुमर्हति। कविस्तु विधात्रपरपर्यायो भवति। शास्त्राध्ययनादपि क्लिष्टतरं कविकर्म। शास्त्रे तु केवलं सिद्धान्तानां तथ्यानां वा स्मरणमात्रेणैव सिद्धिमाप्नोति

---

19. नै. 22/57

20. नै. 15/86

21. नै. 14/92

पुरुषः, परन्तु कविकर्मणि तु प्रतिभा-मति-स्मृति-अनुभूति-धीत्यादीनामनेकेषां गुणानामपेक्षा, शास्त्रे तु केवलं ज्ञानस्यैव प्राधान्यं भवति। परन्तु काव्ये तु लोकस्य शास्त्रस्य चोभयोरपि प्राधान्यं विशेषतश्च लोकस्यैव प्राधान्यं भवति।

लोकप्राधान्याल्लोकानुभूतिरेव काव्येषु प्राधान्येन वर्ण्यते कविभिः। अनुभूतेः प्रबलतायामेव सा लोकानुभूतिः काव्यपदवीमवगाहते। अस्माच्छास्त्रकाव्ययोरेतदेव भेदकत्वं यत् शास्त्रे तु बुद्धेः प्राधान्यं काव्ये तु हृदयस्यैव प्राधान्यमिति।

अथ कविकर्मणि न खलु शास्त्रवत् कतिपयेषामेव सिद्धान्तानां ज्ञानमपेक्षतेऽपितु निखिलमपि ब्रह्माण्डजातमत्र ज्ञेयं भवति। काव्ये तु सर्वज्ञताऽपेक्ष्यते। कविशिक्षाशास्त्रिणां मतमिदं यत् कतिपयेषां काव्यतत्वानामभ्यासेनापि कवित्वं सिध्यतीति। वस्तुतस्तु काव्यप्रतिभा ईश्वरप्रदत्तैव भवति। तथापि कतिपयेषां काव्यतत्त्वानामभ्यासेनापि कवित्वं लब्धुं शक्यते। तेषामेव तत्त्वानां निरूपणमत्र कविशिक्षायामाचार्यैः संस्कृतस्य सुकविभिः भारवि-माघ-श्रीहर्षादिभिः विधीयते। यद्यपि काव्यस्य हृदयजन्यत्वादनुभूतिजन्यत्वाच्च यन्त्रवदेतस्य प्रशिक्षणं न सम्भवत्येव तथापि सतताभ्यासवशेन काव्यशक्तिरुदेतीति कविशिक्षायाः मूलम् इति दिक्।

# बृहत्त्रय्यां स्तुतिसाहित्यम्

हरिओम शर्मा

संस्कृतस्य स्तोत्रसाहित्यं विशालं सरसं हृदयस्पर्शि चास्ति। भक्तः स्वहृदयस्य विचारं भगवतः समक्षं प्रकटयितुं भगवतो महिमवर्णने स्वकोमलं भक्तिपूरितहृदयञ्चाभिव्यञ्जयति। परन्त्वस्माकं भक्तैः स्वहृदयस्य यावद्दीनताभावस्य मधुरतायाश्च परिचयः प्रदीयते तेन भगवत उदारतायाः परिचयः प्राप्यते, तद्वस्तुत उपमाहीनं वर्तते। अस्माकं भक्तकविः क्वचिद् भगवतो दिव्यविभूतीनां दर्शनेन चकास्ति। क्वचिच्च भगवतो विशालहृदयस्य असीमानुकम्पादीनजनेषु अकारणमेव स्नेहस्य गाथां गायन् आत्मविस्तृतो भवति। स्वपूर्वकर्मणि यदा स्मरति तदा तस्य क्षुद्रता तमभि भावयति। यथा शिशुः स्वपितृभ्यामभिलषितमनोहरं वस्तु न प्राप्नोति तदा रोदिति प्राप्ते सति हसति नृत्यति च। तथैव भक्तकवीनामीदृशी स्थितिर्वर्तते। कवयः स्वेष्टदेवानां समक्षं स्वहृदयस्य विचारान् प्रकटयितुं न सङ्कुचिताः भवन्ति। भक्तकवयः स्वदैन्यतायाः परिचयं ददाति। एतद्गुणसम्पन्नैर्भक्तैर्विरचितस्तोत्रेषु अतीवमधुरता जायते। चित्तमपि सद्यस्तरलितं भवति यदि सङ्गीतस्य समावेशो भवति स्तोत्रेषु तर्हि तत्प्रभावोऽत्यधिको वर्धते। अस्य विशालस्तोत्रसाहित्यस्य यथार्थवर्णनाय स्वतन्त्रग्रन्थस्य आवश्यकता वर्तते। वाग्यज्ञे स्तोत्राणां रचना पाठस्य परम्परा च अस्मिन् सनातनदेशे प्राचीनकालादेव विद्यते। अद्यापीयं धारा अक्षुण्णा वर्तते। एतत्सत्यमूलकः स्तोत्रसंग्रहः प्रकटयति यदाराध्यदेवस्याराध्यदेव्या वा स्तुतौ नवीनताप्राचीनतयोश्च भेदोऽनपेक्षितो विद्यते। समर्थजनस्य वाण्यां चिरप्राचीनमपि चिरनवीनं भवति।

भक्तहृदयस्य कृते किमपि न वक्तुं शक्नुमः। अस्मिन् युगे सहृदया अल्पसंख्यकाः सन्ति, परन्तु लुप्ताः न सन्ति। अत इयमाशा निराधारा नास्ति यत् केचन सुपाठका ईदृशा एव भविष्यन्ति। एषां भक्तिभावना

एतै: स्तोत्रै: आप्यायिता भविष्यति आत्मनिवेदेनस्य शाब्दिकप्रकार: स्तोत्रं नाम। स्वकीयमिष्टं य: येन प्रकारेण पश्यति तदनुसारेण तस्य अन्त:करणस्य भाव: शब्दद्वारेण निस्सरति। केषुचित् स्तोत्रकाव्येषु निन्दापि स्तुतिरूपतां धत्ते, स्तुतिश्च निन्दारूपताम्। एतदभिलक्ष्य अलङ्कारशास्त्रे व्याजस्तुत्यालङ्कार: परिकल्पितो वर्तते। क्वचिद्विपरीत लक्षणया निन्दया स्तुति:, स्तुत्या च निन्दा ध्वन्यते। किञ्च कार्यभारावसन्नस्य प्रशासकस्य मनोविनोदार्थं बन्दीजनै: स्तुतिपाठ: क्रियते। क्वचिदपि साहित्ये स्तोत्रवाङ्मयमिदं व्यापकतां धत्ते। अतो निश्चप्रचमिदं वक्तुं शक्नोमि यत् साहित्ये स्तोत्रवाङ्मयमिदं व्यापकमस्ति, अस्मिंश्च गुरुराजदेवतादिविषयरतित्वात् सौन्दर्यमत्यधिकं वर्तते।

संस्कृतवाङ्मये स्तोत्रसाहित्यस्य भव्यता व्यापकता च विद्यते कथं स्तोत्राणां काव्यत्वमिति भक्तिरससमवितात्मनां सहृदयानां हृदयमेवात्र प्रमाणं नात्र कोऽपि सन्देह: सहृदया एव ज्ञातुं शक्नुवन्ति यत् कुत्र भावात्मकं बन्धात्मकं च स्वरूपं विद्यते स्तोत्राणाम्। यथोक्तं मम्मटेन 'रतिर्देवादिविषयाव्यभिचारी तथाऽञ्जित:, भाव: प्रोक्त:'।

### स्तोत्रशब्दस्य व्युत्पत्ति:

स्तूयतेऽनेनेति व्युत्पत्त्या 'ष्टुञ्' 'स्तु' धातो: दाम्नीशसयुयुजस्तु-दसिसिचिमदयेतिदशनह:[1] इति पाणिनीयसूत्रेण ष्ट्रन् प्रत्यय कृते सति स्तोत्रशब्दस्य उत्पत्ति: भवति। स्तोत्रशब्दस्य एव पर्याय: विद्यते स्तुति: शब्द: 'स्तु' धातो: 'स्त्रियाँ क्तिन्'[2] इति भावार्थे क्तिन् प्रत्यये कृते सति स्तुतिशब्दो व्युत्पद्यते। एवं प्रकारेण स्तोत्रशब्दे करणकारके ष्ट्रन प्रत्यय:, स्तुतिशब्दे च भावार्थे तस्मात् स्तोत्रस्य असाधारणकारणत्वेन निर्वचनं भवति स्तुतिश्च भावात्मकं निर्वचनं भवति। आराध्यस्य प्राप्तौ यद् सामान्यं कारणं तद् भावात्मकमपि भवितुमर्हति। तस्मात् स्तोत्र- स्तुतिशब्दयोर्भिन्नार्थता न स्वीकरणीया एतद् पुन: संभवति यत् स्तुतिपदेन कस्यचिदेकस्यापि स्तोत्रगतस्य पद्यस्य ग्रहणं भवेत् स्तोत्रपदेन च स्तुतिपराणां व्यवस्थितपद्यानां निर्धारिता संख्या अभीष्टा स्यात्। अर्थात् स्तोत्रस्य भावात्मकस्वरूपं स्तुतिरिति।

---

1. अष्टाध्यायी 3/2/182
2. अष्टाध्यायी 3/3/94

बन्धात्मकस्वरूपं स्तोत्रमिति वर्तते। स्तोत्रस्तुत्योर्मध्ये एव भेदो वक्तुं शक्यते यत् स्तुतिः क्वचिद् राजादीनां कृतेऽपि भवितुमर्हति किन्तु स्तोत्रं देवतानामेव। मह्यम् मतमिदं रोचते। साम्प्रतं शोधपत्रस्य विषयस्योपरि विहङ्गमावलोकनं करिष्यते, तत्र सर्वप्रथमम्-

**किरातार्जुनीयमहाकाव्ये स्तुतिसाहित्यम्**

महाभारतस्य प्रसिद्धाख्यानाधारितमहाकाव्यं किरातार्जुनीयं महाकविभारवेः प्रसिद्धा रचनास्ति। अर्थगौरवशब्दभण्डारस्य च दृष्ट्या महाकाव्यमिदं महनीयं विद्यते। इयं रचनाऽलङ्कारैरलङ्कृतास्ति। अस्या कथानकं रुचिकरं वर्तते। भारविः श्लिष्टपदविन्यासस्याचार्योऽस्ति। यद्यपि कालिदासतुल्यप्रसादमय्या रीत्या प्रयोगः काव्येऽस्मिन् न कृतः किन्तु अर्थगौरवस्य च्छटा सर्वत्र विद्यते।

अन्तिमसर्गे अर्जुनकृता शङ्करस्य स्तुतिः महत्त्वपूर्णास्ति यस्यां भगवतः शङ्करस्य विविधगुणानां रूपाकृतीनां कार्याणाञ्च विवेचनमस्ति।

**शरणं भवन्तमतिकारुणिकं**
**भव भक्तिगम्यमधिगम्य जनाः।**
**जितमृत्यवोऽजित! भवन्ति**
**भये ससुरासुरस्य जगतः शरणम्॥**

**विपदेति तावदवसादकरी**
**न च कामसम्पदभिकामयते।**
**न नमन्ति चैकपुरुषं पुरुषास्तव**
**यावदीश न नतिः क्रियते॥**

**संसेवन्ते दानशीला विमुक्त्यै**
**सम्पश्यन्तो जन्मदुःखं पुमांसः।**
**यन्निःसङ्गस्त्वं फलस्यानतेभ्यास्त-**
**त्कारुण्यं केवलं न स्वकार्यम्॥**

**प्राप्यते यदिह दूरमगत्वा यत्फलत्यपरलोकगताय।**
**तीर्थमस्ति न भवार्णवबाह्यं सार्वकामिकमृते भवतस्तत्॥**

**व्रजति शुचि पदं त्वयि**
**प्रीतिमान्प्रतिहतमतिरेति घोरां गतिम्।**
**इयमनघ! निमित्तशक्तिः परा**
**तव वरद! न चित्तभेदः क्वचित्॥**

**दक्षिणां प्रणतदक्षिणमूर्तिं तत्त्वतः शिवकरीमविदित्वा।**
**रागिणापि विहिता तव भक्त्या संस्मृतिर्भव भवत्यभवाय॥**

**दृष्ट्वा दृश्यान्याचरणीयानि**
**विधाय प्रेक्षाकारी याति पदं मुक्तमपायैः।**
**सम्यग्दृष्टिस्तस्य परं पश्यति यस्त्वां**
**यश्चोपास्ते साधु विधेयं स विधत्ते॥**

**युक्ताः स्वशक्त्या मुनयः प्रजानां हितोपदेशैरुपकारवन्तः।**
**समुच्छिनत्सि त्वमचिन्त्यधामा कर्माण्युपेतस्य दुरुत्तराणि॥**

**सन्निबद्धमपहर्तुमहार्यं भूरि दुर्गतिभयं भुवनानाम्।**
**अद्भुताकृतिमिमामतिमायस्त्वं विभर्षिकरुणामय! मायाम्॥**[3]

अनन्तरम् अर्जुनः वायुमूर्तेः अग्निमूर्तेः जलमूर्तेः व्योममूर्तेः इत्यादीनां अष्टमूर्तीनां स्तुतिमकरोत् -

अथाष्टमूर्त्तिषु काश्चित्स्तुवन् वायुमूर्त्तिं तावदाह -

**तरसा भुवनानि यो विभर्ति**
**ध्वनति ब्रह्म यतः परं पवित्रम्।**
**परितो दुरितानि यः पुनीते**
**शिव तस्मै पवनात्मने नमस्ते॥**[4]

**पुनः वह्निमूर्तिं स्मरति -**

**भवतः स्मरतां सदासेन जयिनि ब्रह्ममये निषेदुषाम्।**
**दहते भवबीजसंततिं शिखिनेऽनेकशिखाय ते नमः॥**[5]

3. किरात. 18/22-30
4. किरात. 18/37
5. किरात. 18/38

अथ जलमूर्त्तिं स्तौति -

अबाधामरणभयार्चिषा चिराय
प्लुष्टेभ्यो भव महता भवानलेन।
निर्वाणं समुपगमेन यच्छते ते
बीजानां प्रभव नमोऽस्तु जीवनाय॥[6]

इदानीं नभोमूर्त्तिं स्तौति-

यः सर्वेषामावरीता वरीयान्
सर्वैर्भावैर्नावृतोऽनादि निष्ठः।
मार्गातीतायेन्द्रियाणां नमस्तेऽ
विज्ञेयाय व्योमरूपाय तस्मै॥

अणीयसे विश्वविधारिणे नमो
नमोऽन्तिकस्थाय नमो दवीयसे।
अतीत्य वाचां मनसां च गोचरं
स्थिताय ते तत्पतये नमो नमः॥[7]

शिशुपालवधमहाकाव्ये स्तुतिसाहित्यम् -

शिशुपालवधमहाकाव्यस्य रचयिता महाकविमाघोऽस्ति। स न केवलं सरसकविरपितु सर्वशास्त्रज्ञो विद्वानप्यासीत्। तस्य काव्ये पाण्डित्यं पूर्णरूपेण दृश्यते। शिशुपालवधमहाकाव्यस्य मूलाधारः श्रीमद्‌भागवतमस्ति। स परिष्कृतपदविन्यासस्य आचार्य आसीत्। महाकाव्यस्यास्य चतुर्दशसर्गे भीष्मपितामहकृता श्रीकृष्णस्य स्तुतिर्महत्त्वपूर्णास्ति। यथा-

आदितामजननाय देहिनामन्ततां च दधतेऽनपायिने।
बिभ्रते भुवमधः सदाथ च ब्रह्मणोऽप्युपरि तिष्ठते नमः॥

केवलं दधति कर्तृवाचिनः प्रत्ययानिह न जातु कर्मणि।
धातवः सृजतिसंहृशास्तयः स्तौतिरत्र विपरीतकारकः॥

---

6. किरात. 18/39
7. किरात. 18/40

**पूर्वमेष किल सृष्टवानपस्तासु वीर्यमनिवार्यमादधौ।**
**तच्च कारणमभूद्धिरणमयं ब्रह्मणोऽसृजदसाविदं जगत्॥[8]**

**मत्कुणाविव पुरा परिप्लवौ सिन्धुनाथशयने निषेदुषः।**
**गच्छतः स्म मधुकैटभौ विभोर्यस्य नैद्रसुखविघ्नतां क्षणम्॥**

**श्रौतमार्गसुखगानकोविदब्रह्मषट्चरणगर्भयुज्ज्वलम्।**
**श्रीमुखे दुसविधेऽपि शोभते यस्य नाभिसरसीसरोरुहम्॥**

**सत्यवृत्तमपि मायिनं जगद्वृद्धमप्युचितनिद्रमर्भकम्।**
**जन्म बिभ्रतमजं नवं बुधा यं पुराणपुरुषं प्रचक्षते॥[9]**

पुनः षोडशश्लोकेषु भीष्मपितामहः श्रीकृष्णावताराणां स्तुतिं करोति। सर्वप्रथमं वराहावतारस्य स्तुतिं करोति। यथा -

**स्कन्धधूननविसारिकेसरछिप्तसागरमहाप्लवामयम्।**
**उद्धृतामिव मुहूर्तमैछत स्थूलनासिकवपुर्वसुन्धराम्॥[10]**

पुनश्च द्वयोः श्लोकयोः भगवाननृसिंहावतारस्य स्तुतिं करोति। तद्यथा-

**दिव्यकेसरिवपुः सुरद्विषो नैव लब्धशममायुधैरपि।**
**दुर्निवाररणकण्डु कोमलैर्वक्ष एष निरदारयन्नखैः॥**

**वारिधेरिव कराग्रवीचिभिर्दिङ्मतङ्गजमुखान्यभिघ्नतः।**
**यस्य चारुनखशुक्तयः स्फुरन्मौक्तिकप्रकरगर्भतां दधुः॥[11]**

पुनः चतुश्श्लोकेषु वामनवतारस्य स्तुतिं करोति। यथा-

**दीप्तिनिर्जितविरोचनादयं गां विरोचनसुतादभीप्सतः।**
**आत्मभूरवरजाखिलप्रजः स्वर्पतेरवरजत्वमाययौ॥**

---

8. किरात. 18/41
9. शिशु 14/65-70
10. शिशु. 14/71
11. शिशु. 14/72-73

किं क्रमिष्यति किलैष वामनो
यावदित्थमहसन्न दानवाः।
तावदस्य न ममौ नभस्तले
लङ्घिताार्कशशिमण्डलः क्रमः॥

गच्छतापि गगनाग्रमुच्चकैर्यस्य भूधरगरीयसाङ्घ्रिणा।
क्रान्तकन्धर इवाबलो बलिः स्वर्गभर्तुरगमत्सुबन्धताम्॥

क्रामतोऽस्य ददृशुर्दिवौकसो दूरमूरुमलिनीलमायतम्।
व्योम्नि दिव्यसरिदम्बुपद्धतिस्पर्धयेव यमुनोघमुत्यितम्॥[12]

पद्यैकस्मिन् मोहिनीरूपस्य वर्णनं करोति-

यस्य किंचिदपकर्तुमक्षमः कायनिग्रहगृहीतविग्रहः।
कान्तवक्त्रसदृशाकृतिं कृती राहुरिन्दुमधुनापि बाधते॥[13]

दत्तात्रेयस्य स्तुतिं कुर्वन भावं प्रकटयति-

सम्प्रदायविगमादुपेयुषीरेष नाशमविनाशिविग्रहः।
स्मर्तुमप्रतिहतस्मृतिः श्रुतीर्दत्त इत्यभवदत्रिगोत्रजः॥[14]

परशुरामावतारस्य स्तुतिं कुर्वन् मनोभावमुद्घाटयति-

रेणुकातनयतामुपागतः शातितप्रचुरपत्रसंहति।
लूनभूरिभुजशाखमुज्झितच्छायमर्जुनवनं व्यधादयम्॥[15]

रामावतारस्य स्तुतिं करोति पद्येऽस्मिन् -

एष दाशरथिभूयमेत्य च ध्वंसितोद्धतदशाननामपि।
राक्षसीमकृत रक्षितप्रजस्तेजसा धिकविभीषणां पुरीम्॥[16]

---

12. शिशु. 14/74-77
13. शिशु. 14/78
14. शिशु. 14/79
15. शिशु. 14/80
16. शिशु. 14/81

श्रीकृष्णावतारस्य स्तुतिं पञ्चश्लोकेषु स्व-वाग्वाणीभावाञ्जलिं प्रकटयति-

**निष्प्रहन्तुममरेशविद्विषामर्थितः स्वयमथ स्वयंभुवा।**
**सम्प्रति श्रयति सूनुतामयं कश्यपस्य वसुदेवरूपिणः।।**

**तात नोदधिविलोडनं प्रति त्वद्विनाथ वयमुत्सहामहे।**
**यः सुरैरिति सुरौघवल्लभो बल्लवैश्च जगदे जगत्पतिः।।**

**नात्तगन्धमवधूय शत्रुभिश्छायया च शमितामरश्रमम्।**
**योऽभिमानमिव वृत्रविद्विषः पारिजातमुदमूलयद्दिवः।।**

**यं समेत्य च ललाटलेखया बिभ्रतः सपदि शंभुविभ्रमम्।**
**चण्डमारुतमिव प्रदीपवच्चेदिपस्य निरवाद्विलोचनम्।।**

**यः कोलतां बल्लवतां च विभ्रद्**
**दंष्ट्रामुदस्याशु भुजां च गुर्वीम्।**
**मग्नस्य तोयापदि दुस्तरायां**
**गोमण्डलस्योद्धरणं चकार।।**[17]

सः वक्रोक्तिमण्डितशाब्दिकचमत्कारोत्पादलङ्कारैः सुसज्जितपदैः पदार्थानां निरूपणमकरोत्। वस्तुतः माघः एकः प्रवीणकविः आसीत् यः विदग्धजनानां मनोविनोदहेतवे नयनाभिरामकाव्यस्य प्रणयनमकरोत्। अर्थालङ्कारदृष्ट्या काव्यमिदं श्रेष्ठं वर्तते। यदा भारविः शिवभक्तः तदा माघो विष्णुभक्तः। भारविः शिवस्य मूर्तीवर्णयति, माघो विष्णोर्दशावताराणां वर्णनं करोति।

## नैषधमहाकाव्ये स्तुतिसाहित्यम्

नैषधमहाकाव्यस्य रचयिता महाकविश्रीहर्षोऽस्ति। तस्य कविता काव्यगुणैस्तु अलङ्कृताः वर्तन्त एव पाण्डित्यमण्डिताप्यस्ति।

काव्येऽस्मिन् एकोनविंशतिसर्गे अवताराणां स्तुतयः कृता। मत्स्यावतारस्य स्तुतिं कुर्वन् निगदति यत्-

17. शिशु. 14/82-86

**छद्ममत्स्यवपुषस्तव पुच्छास्फालनाज्जलमिवोद्धतमब्धे**
**श्वैत्यमेत्य गगनाङ्गण सङ्गादाविरस्ति विबुधालयगङ्गा।।[18]**

पुनः कच्छपावतारस्य स्तुतिं कुर्वन् कथयति यत् -

**भूरिसृष्टिधृतभूवलयानां पृष्ठसीमनि किणैरिव चक्रैः**
**चुम्बितावतु जगत्क्षितिरक्षाकर्मठस्य कमठस्तवमूर्तिः।।[19]**

वराहावतारस्य स्तुतिं करोति-

**दिक्षुयत्खुरचतुष्टयमुद्रामभ्यवैमि चतुरोऽपि समुद्रान्।**
**तस्यपोत्रिवपुषस्तव दंष्ट्रा तुष्ठयेऽस्तु मम वास्तु जगत्याः।।**

**उद्धृतस्खलदिलापरिरम्भाल्लोमभिर्बहिरितैर्बहुहृष्टैः ।**
**ब्राह्ममण्डमभवद्वलिनीपं केलिकोल! तव तत्र न मातः।।[20]**

नृसिंहावतारस्य स्तुतिं निम्नपद्ये प्रकटयति-

**दानवाद्यगहनप्रभवस्त्वं सिंह! मामव रवैर्घनघोरैः।**
**वैरिदारिदिविषत्सुकृतास्त्रग्रामसम्भवभवन्मनुजार्धः।।**

**दैत्यभर्तुरुदरान्धुनिविष्टां शक्रसंपदमिवोद्धरतस्ते।**
**पातु पाणिशृणिपञ्चकमस्माच्छिन्नरज्जुनिभलग्नतदन्त्रम्।।[21]**

पद्येऽस्मिन् वामनावतारस्य स्तुतिं प्रतिपादयति-

**स्वेन पूर्यत इयं सकलाशा भो बले! न मम किं भवतेति।**
**त्वं बटुः कपटवाचि पटीयान्देहि वामन! मनः प्रमदं नः।।**

**दानवारिरसिकायविभूतेर्वश्मि तेऽस्मि सुतरां प्रतिपत्तिम्।**
**इत्युदग्रपुलकं बलिनोक्तं त्वां नमामि कृतवामनमायम्।।**

---

18. नैषध. 21/55
19. नैषध. 21/56
20. नैषध. 21/57-58
21. नैषध. 21/59-60

**भेगिभिः क्षितितले दिवि**
**वासं बन्धमेष्यसि चिरं ध्रियमाणः।**
**पाणिरेष भुवनं वितरेति**
**छद्मवाग्भिरव वामन! विश्वम्।।**[22]

पुनः बलिः भगवन्तं प्रति कथयति यत्-

**आशयस्य विवृतिः क्रियते किं दित्सुरस्मि भवच्चरणेभ्यः।**
**विश्वमित्यभिहितो बलिनास्मान्वामन! प्रणतपावन! पायाः।।**[23]

परशुरामावतारस्य स्तुतिं कुर्वन् स्वात्मनिवेदनं प्रकटयति-

**क्षत्रजातिरुदियाय भुजाभ्यां**
**या तवैव भुवनं सृजतः प्राक्।**
**जामदग्न्यवपुषस्तव तस्यास्तौ**
**लयार्थमुचितौ विजयेताम्।।**[24]

रामावतारस्य स्तुतिं प्रतिभावयति-

**कार्तवीर्यभिदुरेण दशास्ये रैणुकेय! भवता सुखनाश्ये।**
**कालभेदविरहादसमाधिं नौमि रामपुनरुक्तिमहं ते।।**

**हस्तलेखमसृजत्खलु जन्मस्थानरेणुकमसौ भवदर्थम्।**
**राम! राममधरीकृततत्तल्लेखकः प्रथममेव विधाता।।**

**उद्धवाजतनुजादज! कामं विश्वभूषण! न दूषणमत्र।**
**दूषणप्रशमनाय समर्थं येन देव! तव वैभवमेव।।**

**नो ददासि यदि तत्वधियं मे यच्छ मोहमपि तं रघुवीर।**
**येन रावणचमूर्युधि मूढ़ा त्वन्मयं जगदपश्यदशेषम्।।**[25]

---

22. नैषध. 21/61-63
23. नैषध. 21/64
24. नैषध. 21/65
25. नैषध. 21/67-70

कृष्णावतारस्य स्तुतिं प्रकटयन् स्वमनोवृत्तिं प्रतिपादयति-

**ते हरन्तु दुरितव्रततिं मे यैः स कल्पविटपी तव दोर्भिः।**
**छद्मयादवतनोरुदपाटि स्पर्धमान इव दानमदेन।।**

**बालकेलिषु तदा यदलावीः कर्परीभिरभिहत्य तरङ्गान्।**
**भाविबाणभुजभेदनलीलासूत्रपात्र इव पातु तदस्मान्।।**

**कर्णशक्तिमफलां खलु कर्तुं सज्जितार्जुनरथाय नमस्ते।**
**केतनेन कपिनोरसिशक्तिं लक्ष्मणं कृतवता हतशल्यम्।।[26]**

पुनः एकविंशतिसर्गेऽपि कल्क्यवतारस्य स्तुतिं करोति -

**धूमवत्कलयतायुधि कालं म्लेच्छकल्पशिखिना करवालम्।**
**कल्किना दशतयं मम कल्कं त्वं व्युदस्य दशमावतरेण।।**

**देहिनेव यशसा भ्रमतोर्व्यां पाण्डुरेण रणरेणुभिरुच्चैः।**
**विष्णुना जनयितुर्भवताभून्नाम विष्णुयशसश्च सदर्थम्।।[27]**

एषु स्तोत्रेषु पौराणिकतथ्यैः सह कल्पनायाः वर्णनमपि अस्ति। चतुर्दशसर्गे दमयन्तीकृता स्तुतिरपि काव्यकलादृष्ट्या उल्लेखनीया वर्तते। तद्यथा -

**अथाधिगन्तुं निषधेश्वरं सा प्रसादनामाद्रियतामराणाम्।**
**यतः सुराणां सुरभिर्नृणां तु सा वेधसा सृज्यत कामधेनुः।।**

**प्रदक्षिणप्रक्रमणालवालविलेपधूपाचरणाम्बुसेकैः ।**
**इष्टं च मृष्टं च फलं सुवाना देवा हि कल्पद्रुमकाननं नः।।**

**श्रद्धामयीभूय सुपर्वणस्तान्ननाम नामग्रहणाग्रकं सा।**
**सुरेषु हि श्रद्दधतां नमस्या सर्वार्थसिद्धियङ्गमिथः समस्या।।**

**यत्तान्निजे सा हृदि भावनाया बलेन साक्षादकृताखिलस्थान्।**
**अभूदभीष्टप्रतिभूः स तस्या वरं हि दृष्टा ददते परं ते।।**

---

26. नैषध. 21/78-80
27. नैषध. 21/91-92

**सभाजनं तत्र ससर्ज तेषां सभाजने पश्यति विस्मिते सा।**
**आमुद्यते यत्सुमनोभिरेवं फलस्य सिद्धै सुमनोभिरेव।।**

**वैशद्यहृद्यैर्म्रदिमाभिरामैरामोदिभिस्तानथ जातिजातैः।**
**आनर्च गीत्यन्वितषट्षदैः सा स्तवप्रसूनस्तबकैर्नवीनैः।।**[28]

एवं श्रीहर्षस्य विष्णुभक्तिः प्रतिभाति।

**ताम्बूलद्वयमासनं च लभते यः कान्यकुब्जेश्वरा-**
**द्यः साक्षात्कुरुते समाधिषु परं ब्रह्मप्रमोदार्णवम्।**

**यत्काव्यं मधुवर्षि धर्षितपरास्तर्केषु यस्योक्तयः**
**श्रीश्रीहर्षकवेः कृतिः कृतिमुदे तस्याभ्युदीयादियम्।।**[29]

इति कथनेन तस्य दार्शनिकी-अभिरुचि प्रमाणिता भवति। पण्डितत्वाद्भारतीयेषु समस्तेषु दर्शनेषु यत् तज्ज्ञानं तन्नैषधे लभ्यते किन्तु स्तुतिप्रसङ्गेन तदास्तथा विष्णुं प्रति वरीवर्तीति प्रमाणितं भवति।

---

28. नैषध. 14/1-6
29. नैषध. 22/153

# किरातार्जुनीयम् में काव्यसौन्दर्य

**प्रो. अगम कुलश्रेष्ठ**

महाकवि भारविकृत किरातार्जुनीय महाकाव्य में संस्कृत की अलंकृत कविता की सारी प्रवृत्तियाँ समाहित हैं। छठी शताब्दी के आस-पास रचित बृहत्त्रयी के इस प्रथम महाकाव्य में समकालीन दरबारी कविता की सारी विशेषताएँ भव्य रूप में प्रकट हुई हैं। भारवि का व्यक्तित्व उनकी महनीय कविचेतना के कारण उदात्त था।

काव्य की आत्मा की खोज वास्तव में उसके मूलभूत सौन्दर्य की खोज है। वस्तुवादी या अलंकारवादी तथा आत्मवादी या रसवादी दोनों ने ही शब्दार्थ को काव्य का शरीर माना है। अतः आनन्दवर्द्धन का कथन है- **विविधवाच्य-वाचकरचनाप्रपञ्चचारुः**[1] तथा **ललितोचितसन्नि-वेशचारु**[2]

अर्थात्-शब्द-अर्थ की चारु रचना या ललित और उचित सन्निवेश काव्य का बाह्य रूप है। वस्तुवादी तथा आत्मवादी दोनों ही रचनाविधान में प्रतिभा को आवश्यक मानते हैं। अन्तर यह है कि वस्तुवादी का पूरा ध्यान कल्पनाशक्ति और शब्द विवेक पर रहता है जबकि आत्मवादी इन दोनों तत्त्वों के मूल्य में समृद्ध अनुभवों के संस्कार (रसावेशवैशद्य) और तज्जन्य चेतना (संवेदनशक्ति या भाव बोध) की अनिवार्य प्रेरणा मानता है। अस्तु ! शब्द विवेक तो दोनों के लिये आवश्यक है। दण्डी के अनुसार शब्द नामक ज्योति से यह सम्पूर्ण संसार देदीप्यमान है। शब्द दो प्रकार का होता है। अनित्य तथा नित्य। अनित्य शब्द से वैयाकरणों का

---

1. ध्वन्यालोक, चौखम्बा, सं.ग्रं.भा. 1997 वि. पृष्ठ 87
2. ध्वन्यालोक पृष्ठ 45

तात्पर्य उच्चारण जन्य और श्रोत्रग्राह्य ध्वनि अथवा-नाद से हैं तथा नित्य शब्द से उनका तात्पर्य मूल शब्द से है- जो न तो उच्चारणजन्य हैं और न श्रोत्रग्राह्य यही स्फोट है। ध्वनि अनित्य हैं-, स्फोट नित्य है।

विज्ञान जो Big-Bang मानता है, वह यही स्फोट है। परमसम्माननीय, महान् वैज्ञानिक प्रो. प्रेमसरन सतसंगी साहब जो, डी.ई.आई. एडवाइज़री कमेटी ऑन एजुकेशन के चैयरमेन हैं, ने अपनी पुस्तक Exposition on Truth Ultimat Reality and Supereme Being (Form Vantage paints of Radhasoami Faith and System sciences) पुस्तक (राध ास्वामी सतसंग सभा से प्रकाशित) में Big-Bang थ्योरी से, संसार की उत्पत्ति तथा धर्म और विज्ञान की एकता पर सर्वप्रथम अत्यन्त वैज्ञानिक एवं तार्किक रूप से अपना मत प्रस्तुत किया है। उनके अनुसार बिग-बैंग ही सृजन का मूल है। बिगबैग (स्फोट) से ही शब्द हुआ।

भारवि के अनुसार सफल शब्दशिल्प; उक्ति संस्कार के बिना नहीं पनपता- वहन् द्वयीं यद्यफलेऽर्थजाते करोति, संस्कारहतामिवोक्तिम् (3/48) व्याकरण में निर्दोष व्युत्पत्ति को जो महत्त्व है, वही काव्य में शब्द संस्कार का। संस्कारवान् तथा प्रयोगशिक्षा आदि गुणों से विभूषित शब्द यथार्थभाव को प्रकट करते हैं।

**संस्कारवत्त्वाद्रमयत्सु चेतः प्रयोगशिक्षागुणभूषणेषु।**
**अयं यथार्थेषु शरेषु पार्थः शब्देषु भावार्थमिवाशशंसे।।**(7/6)

पारमार्थिक दृष्टि से चेतन तत्त्व ही स्फोट है। स्फोट शब्द है- ध्वनि उस शब्द का गुण है। स्फोटः शब्दध्वनिः शब्दगुणः। नागेश भट्ट ने लघु मंजूषा (प्र. 370) में कहा है कि स्फोट आन्तरिक आध्यात्मिक ध्वनि अर्थात्- प्रणव के अतिरिक्त कुछ नहीं है- जो ब्रह्म का समानार्थक शब्द है। भर्तृहरि के अनुसार शब्द; वाणी के रूप में परा, पश्यन्ती, मध्यमा और बैखरी चार रूपों वाला है। जो वक्ता के मूलचक्र, नाभि, हृदय तथा कण्ठ इन चारों स्थानों में अधिष्ठित रहते हैं। अन्तर्ज्योति स्वरूप परा में विद्यमान समग्र शब्द पश्यन्ती वाणी में विकासोन्मुख होकर मध्यमा में विकसित और अर्थ समन्वित होते हैं। मध्यमा वाक् सक्ष्म प्राण शक्ति से संचालित होती है और चिंतन का कार्य करती है

बाद में बैखरी (बिखरना) से सभी प्रकार की ध्वनियाँ उत्पन्न होती हैं। बैखरी वाणी से उत्पन्न वर्ण और उनसे निर्मित भाषिक संरूप रसवादी अथवा अलंकारवादी कवियों के काव्यों में सौन्दर्य चेतना के मौलिक उपकरण बनते हैं।

महाकवि भारवि ने व्यवहार और व्याकरण से गढ़ी हुई भाषा को शिल्पकार के सदृश रूप-रचना की अत्यन्त गहन प्रविधि-प्रक्रिया के साथ प्रस्तुत किया हे। अपनी शैली के शाब्दिक विन्यास की रमणीयता की चर्चा करते हुए भारवि कहते हैं-

**विविक्तवर्णाभरणा सुखश्रुतिः**
**प्रसादयन्ती हृदयान्यपि द्विषाम्।**
**प्रवर्तते नाकृतपुण्यकर्मणां**
**प्रसन्नगम्भीरपदा सरस्वती॥** (14/3)

अर्थात् स्फुट वर्ण ही जिसके आभूषण हों जो कर्णकटु न हों अर्थात् श्रोत्रानन्द जनक हों, जो शत्रुओं के मन को भी प्रसन्न बना देता है, जिसके सुप्तिङन्तरूप पद अर्थगौरवशाली हों ऐसा वाणी का विकास बिना सुकृत के नहीं होता, इस प्रकार यहाँ वाक्पक्ष का परिचय है। आगे श्लोक (14/4) में वे कहते हैं कि प्रथमतः वे श्रेष्ठ हैं जो हृदयंगत भाव को वाणी में स्थापित करते हैं उसके बाद वक्ता और तदनन्तर गम्भीर अर्थ का बोध कराने वाले अत्यन्त दुर्लभ हैं।

भारवि की शिल्पगत प्रस्तुति चित्त स्फारक है। उत्कृष्ट शैली के विषय में भारवि की मान्यता है कि श्रेष्ठ रचना की उत्कृष्टता का कारण प्रसाद गुण होता है। उसमें ओजस्विता (प्रभविष्णुता) या प्रभावशालित्व, अर्थनिर्भरता, वाक् प्रपञ्च का अभाव साकांक्ष पद-योजना और-स्वतः में पूर्णता होती है।

**प्रसादरम्यमोजस्वि गरीयो लाघवान्वितम् ।**
**साकांक्षमनुपस्कारं विष्वग्गति निराकुलम् ॥ (कि.11/38)**

अन्यत्र गौणरूपेण स्वशैली वैशिष्ट्य का भारवि इस प्रकार कथन करते हैं-

**स सौष्ठवौदार्यविशेषशालिनीं।**
**विनिश्चितार्थामिति वाचमाददे।।** (1/3 उत्त.)

अर्थात् रचना में सौष्ठव (शब्द विन्यास का चारुत्व) औदार्य (अर्थ का उत्कर्ष) की शोभा होनी चाहिये और जो कुछ भी कहा जाये उसमें किसी भी प्रकार की द्विविधा नहीं हो।

भारवि के अर्थगौरव में कल्पना और सूक्ष्म विचारों का मधुर-सम्मिश्रण है। उनका मत है कि पदों में स्पष्टता, अर्थ गौरव, अपुनरुक्त दोष और साकांक्षता गुण का होना अनिवार्य है,

**स्फुटता न पदैरपाकृता न च स्वीकृतमर्थगौरवम्।**
**रचिता पृथगर्थता गिरां न च सामर्थ्यमपोहितं क्वचित्।।**
(2/27)

उपर्युक्त श्लोक के अर्थ गौरव को लेकर भारवरेर्थगौरवम्' की सम्प्रदायोक्ति प्रचलित हुई। अर्थ गौरव से उनका तात्पर्य मूल्यवत्ता से है। रस, ध्वनि आदि सम्प्रदायों के अन्तर्गत उनकी अर्थ गौरव की कल्पना नहीं की जा सकती। शब्दों द्वारा अर्थानुसंधान की प्रक्रिया पर प्रकाश डालते हुए भारवि कहते हैं:-

**संस्कारवत्त्वाद्रमयत्सु चेतः प्रयोगशिक्षागुणभूषणेषु।**
**जयं यथार्थेषु शरेषु पार्थः शब्देषु भावार्थमिवाशशंसे।।**
(17/6)

भारवि के अनुसार सभ्यतम विद्वान् ही समर्थवाणी द्वारा अपने मनोभावों को व्यक्त कर पाते हैं किन्तु गम्भीर निगूढ़ अर्थ प्रकाशन में तो उसमें से कोई-कोई ही समर्थ होते हैं-

**भवन्ति ते सभ्यतमा विपश्चितां**
**मनोगतं वाचि निवेशयन्ति ये।**
**नयन्ति तेष्वाप्युपपन्ननैपुणा**
**गभीरमर्थं कतिचित् प्रकाशताम्।।** (14/4)

भारवि दुर्बोध अर्थ को महत्त्व नहीं देते। वे कहते हैं कि यथा दीपक अनायास पदार्थ जगत् को उद्भासित कर देता है, वैसे ही काव्य से अर्थ दर्शन सुकर होना चाहिये।

**सुकृतः परिशुद्ध आगमः कुरुते दीप इवार्थ दर्शनम्।।**
2/33

अर्थावगम की इस आवश्यकता को प्रतिपादित करने के लिये भारवि ने काव्य की आगम और आम्नाय से तुलना की है। आगम वस्तु प्रतिपादन में निर्विकार और स्थिर रहता है क्योंकि उसका अभिधेय प्रमाण-पुष्ट होता है। कवि की इस असम्पृक्ति से ही अनाकुल अर्थवत्ता काव्य की काम्य सम्पत्ति बनती है-

**न्यायनिर्णीत सारत्वान्निरपेक्षमिवागमे।**
**अप्रकम्प्यतयाऽन्येषामाम्नायवचनोपमम्।।** 11/39

अर्थ बोध की यह अनाकुल क्षमता ही कृतिकार की आत्मा को प्रतिबिम्बित कर सकती है।

**विमला तव विस्तरे गिरां मतिरादर्श इवाभिदृश्यते।।**
कि. 2/26

भारवि के अनुसार प्रसंगानुकूल तथा अवसरोचित लेखन अर्थगरिमा हेतु आवश्यक है। एक स्थल पर वे लिखते हैं-

**अवज्ञातप्रबन्धस्य वचो वाचस्पतेरपि।**
**व्रजत्यफलतामेव नयद्रुह इवेहितम्।।** 11/43

अर्थात् जो प्रबन्ध का तिरस्कार करता है, ऐसे वाचस्पति का भी सारा वाग्वैभव फलहीन ठूँठ जैसा लगता है। भारवि की उक्तियों में औदार्य है।

**उदारचेता गिरमित्युदारां द्वैपायनेनाभिदधे नरेन्द्र।।** 3/10

**तथा-**

**स सौष्ठवौदार्यविशेषशालिनीं**
**विनिश्चितार्थामिति वाचमादहे।।** 1/3 उत्त.

किरात में प्रयुक्त वैदर्भी में उदारता, प्रसाद, माधुर्य एवं ओजस्विता विद्यमान है -

**प्रसादरम्यमोजस्वि गरीयो लाघवान्वितम्।**
**साकांक्षमनुपस्कारं विष्वग्गति निराकुलम्।।** 11/38

इस प्रकार 'अर्थ गौरव' भारवि के प्राञ्जल काव्य का आधाार है। डा. राधावल्लभ त्रिपाठी ने "संस्कृत कवियों के व्यक्तित्व का विकास" पुस्तक में पृ. 143 और नवजीवन रस्तोगी (अर्थ शिल्प और भारवि भारती 1964-63 के अंक में प्रकाशित) ने। इस प्रकार उद्धृत किया है "भारवि के पास प्राञ्जल काव्य का एक ही आधार है- अर्थ गरिमा। उनकी सारी उक्तियाँ इस तत्त्व को ही केन्द्रित कर उपजती हैं। यह अर्थगरिमा प्रगल्भ विद्वान् का अधिकार नहीं है, अर्थद्रष्टा कवि की सृष्टि है, जो शब्दों की अन्तरात्मा का उन्मीलन करता है। शब्द का यह आत्मोन्मीलन, कवि की अर्थदृष्टि का उन्मेष ही अर्थ गुरुता है। अर्थदृष्टि अर्थ शिल्प की सफलता और समर्थता है।

इस प्रकार भारवि मनः प्रियता से ऊपर वाक्वैभव और परिणाम सुखत्व को अधिक महत्त्व देते हैं।

**विहितां प्रियया मनःप्रियामथनिश्चित्य गिरं गरीयसीम्।।**
2/1

तथा-

**परिणामसुखे गरीयसि व्यथकेऽस्मिन् वचसि क्षतौजसाम्।**
**अतिवीर्यवतीव भेषजे बहुरल्पीयसि दृश्यते गुणः।।** 2/4

किरातार्जुनीय को श्रयङ्क महाकाव्य नाम से भी सम्बोधित किया जाता है। इसका सर्वप्रथम छन्द 'श्री' से ही निष्पन्न हुआ है। सम्पूर्ण किरात में पचास से अधिक बार श्री शब्द का प्रयोग हुआ है। अष्टम

सर्ग में श्लोक बीस, चौबीस, अड़तीस, चालीस, इकतालीस, चवालीस पचास तथा छप्पन संख्यक श्लोकों में श्री शब्द का प्रयोग हुआ है।

श्री के साथ लक्ष्मी तथा जय (13/14) शब्दों का भी प्रयोग हुआ है। प्रत्येक सर्ग में दो-तीन बार लक्ष्मी शब्द प्रयुक्त हुआ। कहीं-कहीं श्री तथा लक्ष्मी दोनों शब्द एक साथ मिलते हैं जैसे-

**अथ परिमलजामवाप्य लक्ष्मी-**
**मवयवदीपितमण्डनश्रियस्ताः।**
**वसतिमभिविहाय रम्यहावाः**
**सुरपतिसूनुविलोमनाय जग्मुः।।** 10/1

भारवि जीवन में श्री की प्राप्ति का समुद्घोष करते हैं। उनकी श्री-शोभा, सम्पत्ति के साथ सबसे अधिक तेजस्विता, मनस्विता और गौरव को द्योतित करती है। उनकी सम्पत्ति में व्यक्ति का तेज कभी भी शत्रु से अभिभूत न हो।

**ज्वलितं न हिरण्यरेतसं चयमास्कन्दति भस्मसां जनः।**
**अभिभूतिभयादसूनतः सुखमुज्झन्ति न धाम मानिनः।।**
2-20

यद्यपि किरात श्र्यङ्क महाकाव्य है तथापि इसके प्रारम्भिक तीन सर्गों की दुर्बोधता और दुष्प्रवेश्यता के कारण इन्हें पाषाणत्रय कहा गया।

किरातार्जुनीयम् का नामकरण नायक के नाम पर हैं। अर्जुन सद्वंश क्षत्रिय हैं तथा धीरोदात्त हैं। किरात का प्रारम्भ वनेचर के सन्देश कथन द्वारा काव्यात्मक रूप में होता है। किरात का प्रधान या अंगी रस वीर है तथा श्रृंगार शान्त, रौद्र और वीभत्स रस अंग रूप में हैं- **श्रृंगारादिरसोद्-गमोऽत्र विजयी वीरः प्रधानो रसः** (मल्लिनाथ) अर्जुन की उक्तियाँ और कार्य व्यापार वीर रस की व्यञ्जना करते है इस प्रकार भारवि श्रृंगार और वीर रसों के वर्णनों में अतिशय सिद्धहस्त हैं। सर्ग आठ तथा नौ में संभोग श्रृंगार का सटीक वर्णन है। सर्ग 13 से 17 तक युद्धवर्णन में वीर रस है।

वीर और रौद्र के उपयुक्त वातावरण की सर्जना करते हुए वे कहते हैं कि शंकर भगवान् शस्त्रास्त्र प्रहार से सत्त्वगुण में स्थित तथा तपस्या और पराक्रम के द्वारा प्राप्त प्रताप से युक्त अर्जुन को निर्मल आकाश में स्थित सूर्य को विश्वकर्मा की तरह छीलने लगे।

**स्थितं विशुद्धं** (15/48) तथा 14/32 तथा 2/4, 2/17 आदि)

जलक्रीडा वर्णन में शृंगार रस का सुन्दर चित्रण है। प्रिय गन्धर्व ने हँसकर प्रियतमा का हाथ पकड़ लिया। अत: कामासक्तचिन्ता होने के कारण नायिका की परिधान या वसन ग्रन्थि (नीवी) ढ़ील पड़ गई।

लोक दृष्टि प्रधाान काव्य तथा खण्डकाव्यों का आदिस्वरूप वीररस प्रधाान काव्यों में परिलक्षित होता है। इन्हें वीरगति कहकर अभिहित किया गया। ऋग्वेद और अथर्ववेद के अनेक सूक्त वीरभावापन्न युद्ध वर्णनों से परिपूर्ण हैं। दुर्गासप्तशती का द्वितीय अध्याय इसका उदाहरण है। संस्कृत महाकाव्य परम्परा में किरात जैसे महाकाव्य में यह विजयवर्णन सर्वाधिक लोकप्रिय विषय रहा है- जिसमें उत्साहाधिक्यवश कवि अपने नायक की प्ररोचना करता है। किरात में इसी प्रसंग में शब्दालंकार की विविध प्रवृत्तियों को मुखरित किया है तथा कवि ने युद्ध वर्णन में शब्दालंकार के रूप अनुप्रास, यमकादि में प्रविष्ट होते हुए चित्र पद्धति में प्रवेश किया तथा शस्त्रास्त्र वर्णन, संग्रम पद्धति और विजयोल्लास का वर्णन शब्दालंकार का उदात्त परिचायक बन गया है।

इस प्रकार किरात में शब्दालंकारों में अनुप्रास द्वारा विभिन्न लौकिक भूषणों को एक के बाद एक धारण करने से, यमक द्वारा उन्हीं लौकिक भूषणों के द्विधा-त्रिधा धारण करने से, श्लेष द्वारा विभिन्न रत्नों और सुवर्ण के संयोग से तथा अन्य अलंकारों के द्वारा लौकिक आभूषणों से साम्य स्थापन करते हुए जो वाग्विलास किया है, वह तो चमत्कृतिपूर्ण है ही, साथ ही चित्रालंकारों मे जो आवृत्तियों के माध्यम से अलंकृति लाई गई, वह और भी विस्मय कारिणी हैं। चित्रालंकार के विषय में आचार्य रूद्रट ने यह स्पष्ट कहा है जिस वस्तु विशेष का जो नाम हो,

वही उस अलंकार का नाम होगा तथा जो उसकी आकृति होगी, वही उसका लक्षण समझना चाहिए- **यन्नाम नाम यत् स्यात् तदाकृतिर्लक्षणं मतं तस्य। तल्लक्ष्यमेव दृष्ट्वाऽवधार्यमखिलं तदन्यपि।।** काव्यालंकार 5/15

किरात के पन्द्रहवें सर्ग में अनेक बन्धों के चित्र-विचित्र श्लोक हैं जिनमें कुछ के पहले-तीसरे तथा दूसरे-चौथे पाद समान हैं और कुछ के सभी पाद समान हैं। इसी प्रकार कुछ श्लोक दाहिने और बांये से समान रूप से पढ़े जा सकते हैं। कहीं-कहीं एक श्लोक के दो-तीन अर्थ भी निकलते हैं। केवल एक ही व्यंजन 'न' के प्रयोग द्वारा भारवि ने चित्रालंकार के चरम को प्रदर्शित किया है। यद्यपि ये श्लोक दुर्बोध हैं परन्तु ऐसे श्लोक अत्यल्प मात्र में हैं। अन्य सर्गों में भारवि ने सरल शैली का प्रयोग किया है।

सौन्दर्य का अपरपर्याय अलंकार है। विद्वानों का कथन है- **न तेषां बहिरङ्गत्वं रसाभिव्यक्तौ।** (ध्वन्यालोकलोचन, अभिनवगुप्त पृ.-147) अर्थात् रसाभिव्यक्ति में सहायक होने पर उनका बहिरंगत्व नहीं रहता। किरात में प्रयुक्त अलंकार काव्य के बाह्य धर्ममात्र न होकर आन्तरिक उक्ति के साथ भारवि के मन से निकले भाषारत्न हैं जिनमें कल्पना का नित्यविहार हैं। इनके अनुप्रास, यमक तथा चित्रालंकार आदि नादसंगतिमूलक अलंकार चेतनमन को अपने नाद माधुर्य से आन्दोलित करते हुए रसविभोर कर देते हैं।

चित्रालंकार (2) एकाक्षरपाद

**स सासिः सासुसूः सासो येयायेयाययायय:।**
**ललौ लीलां ललोऽलोलः शशीशशिशुशीः शशन्।।**

(15/5)

इस श्लोक के प्रथम चरण में एक ही प्रकार के अक्षर हैं। अतः यह एकाक्षर पाद रचना है। यहाँ स य, ल, श ये चार प्रकार के वर्ण हैं।

**1. एक वर्ण का प्रयोग-**

> **न नोननुन्नो नुन्नोनो नाना नानानना ननु।**
> **नुन्नोऽनुन्नौ ननुन्नेनो नानेना नुन्ननुन्ननुत्।। (15/14)**

एक ही अक्षर का यह श्लोक कितना चमत्कारपूर्ण है। यह सामर्थ्य भारवि की है जिन्होंने 'न' एक ही अक्षर में गम्भीर अर्थ की अभिव्यक्ति की है।

**3. दो वर्णों का प्रयोग**

> **चारचुञ्चुश्चिरारेची चञ्चच्चीररुचा रुचः।**
> **चचार रुचिरश्चारु चारैराचारचञ्चुरः। (15/38)**

यहाँ च तथा र ये दो प्रकार के वर्णो का प्रयोग है।

**सर्वतोभद्र बन्ध-**

| 1 | 3 | 5 | 7 | | | | |
|---|---|---|---|---|---|---|---|
| दे | वा | का | नि | नि | का | वा | दे |
| वा | हि | का | स्व | स्व | का | हि | वा |
| का | का | रे | भ | भ | रे | का | का |
| नि | स्व | भ | व्य | व्य | भ | स्व | नि |
| | | | | 8 | 6 | 4 | 2 |

-15/25

सर्वतोभ्रमणात् सर्वतोभद्राख्यश्चित्रबन्धः यथाह दण्डी 'तदिदं सर्वतोभद्रं भ्रमणं यदि सर्वतः इति । तंदिष्टं सर्वतोभद्रं सर्वतो भ्रमणं यदि सर्वतः इति। (काव्या. 3/80) यह बन्ध प्रत्येक-चरण के आरम्भ के चार अक्षरों के गतागत अथवा लोम विलोम पाठ से बना है। यह केवल चार-चार कोष्ठकों वाली चार पंक्तियों में सोलह अक्षर लिखने से पूरे पद्य का सूचक होता है। उपर्युक्त छन्द कों संख्याक्रम 1, 2, 3, 5, 7, 8 जो

दिया है से पढ़ने पर भी वहीं वर्ण आयेंगे।

## सर्वतोभद्र बन्ध का अन्य उदाहरण-

| 1 | 3 | 5 | 7 | | | | |
|---|---|---|---|---|---|---|---|
| स | स | त्व | र | ति | दे | नि | त्यं |
| स | द | रा | म | र्ष | ना | शि | नि |
| त्व | रा | धि | क | क | सं | ना | दे |
| र | म | क | त्व | म | क | र्ष | ति |
| | | | | 8 | 6 | 4 | 2 |

(15/27)

इसको भी 1, 2, 3, 4, 5, 6, 7, 8 क्रम जो दिया है, जो पढ़ने पर वहीं वर्ण आयेंगे यही सर्वतोभद्र का वैचित्र्य है।

**गोमूत्रिका बन्ध-**

**नासुरोऽयं न वा नागो घरसंस्थो न राक्षसः।**
**ना सुखोऽयं न वा भोगो धरणिस्थो हि राक्षसः॥**

किरात 15/12

भोज ने सरस्वती कण्ठाभरण (2/115) में इसका यह लक्षण किया है-

**गतिरुच्चावचा यत्र, मार्गे मूत्रस्य गोरिव।**
**गोमूत्रकेति तत्प्राहुर्दुष्करं चित्रवेदिनः॥**

अर्थात्-चलते हुए बृषभ के मूत्रपात से जिस प्रकार भूमि पर बहुकोणयुक्त ऊपर-नीचे रेखाएं बन जाती हैं। उसी प्रकार की रेखाकृति से गोमूत्रिका बन्ध बनता है यह अति दुष्कर चित्रभेद है।

प्रस्तुत छन्द गोमूत्रिकाबन्ध में निम्नवत् होगा।




**निरौष्ठ्य वर्णों का प्रयोग-**

**इति शासति सेनान्यां गच्छतस्ताननेकधा।**
**निषिध्य हसता किंचित्त्स्थे तत्रान्धकारिणा।।** (15/29)

यहाँ सेनान्याम् में 'म्' के अतिरिक्त सभी निरौष्ठ्य वर्ण हैं।

**प्रतिलोमानुलोमार्द्ध :**

किरात के पन्द्रहवें सर्ग में एक ही श्लोक सीधा उल्टा एक सा है-

**ननु हो मथना राघो घोरा नाथ महो नु न।**
**तयदातवदा भीमा मा मीदा बत दायत।।** (15/20)

कहीं पूर्वार्द्ध उत्तरार्द्ध एक जैसा है-

**घनं विदायार्जुनबाणपूगं ससारबाणोऽयुगलोचनस्य।**
**घनं विदायार्जुनबाणपूगं ससार बाणोऽयुगलोचनस्य।।**
(15/50)

इस श्लोक में प्रथम और द्वितीय के समान तृतीय और चतुर्थ चरण हैं परन्तु श्लेष पूर्ण हैं।

**या गम्याः सत्सहायानां यासु खेदो भयं यतः।**
**तासां किं यन्न दुःखाय विपदामिव सम्पदाम्।।** 11/22

यहाँ सम्पत्ति के अर्थ में गम्य = प्राप्य है तथा विपत्ति के अर्थ में गम्य = पार करने योग्य है।

इस प्रकार यहाँ श्लेष प्रयोग द्वारा भारवि ने सम्पत्ति और विपत्ति को समान बताया है।

निम्न श्लोकों में श्लेष द्वारा तीन अर्थों की अभिव्यक्ति हुई है-

**जगतीशरणे युक्तो हरिकान्तः सुवासितः।**
**दानवर्षी कृताशंसो नागराज इवावभौ ।।** 15/45

अर्जुन नागराज (हिमालय अथवा ऐरावत अथवा शेषनाग की) भाँति सुशोभित हुए- इन तीनों की उपमानता को सटीक बनाने के लिए अन्य विशेषण पदों के श्लेष द्वारा तीन अर्थ निकलते हैं।

भारवि रमणीक दृश्यों का सर्जन कल्पना के बल पर करते हैं। निम्न श्लोक में वर्णित है कि कमलिनी के पुष्पित स्थल वन से कमल का पराग बवण्डर के द्वारा आकाश में उड़कर चारों ओर फैल गया, जिससे वह स्वर्णिम छत्र की शोभा को प्राप्त हुआ। इस श्लोक में कमल पराग निर्मित स्वर्णिम छत्र कल्पना प्रसूत है। इसमें निदर्शना अलंकार है। प्रशंसकों ने इस श्लोक के आधाार पर भारवि को 'आतपत्र भारवि' की उपाधि प्रदान की।

**उत्फुल्लस्थलनलिनी वनादमुष्मा-**
**दुद् धूतः सरसिजसम्भवः परागः।**
**वात्याभिर्वियति विवर्तितः समन्ता-**
**दाधत्ते कनकमयातपत्रलक्ष्मीम्।।** 5/39

**तद्गणा ददृशुर्भीमं चित्रसंस्था इवाचलाः।**
**विस्मयेन तयोर्युद्धं चित्रसंस्था- इवाचलाः।।** 15/35

यहाँ द्वि चतुर्थ पादावृत्ति यमक है। चित्र संस्था इवाचलाः (प्रथम पंक्ति के अन्त) का अर्थ है चित्राकार पहाड़ के सदृश प्रमथगण का द्वितीय पंक्ति के चित्रलिखित की तरह निश्चल होकर चित्र संस्था इवाचलाः में आवृत्ति तथा अर्थभिन्नता है अतः संदष्ट नामक यमक है यहाँ।

महायमक-

**विकाशमीयुर्जगतीशमार्गणा**
**विकाशमीयुर्जगतीशमार्गणाः।**
**विकाशमीयुर्जगतीशमार्गणा**
**विकाशमीयुर्जगतीशमार्गणाः॥** 15/52

,, ,, ,, ,,

,, ,, ,,

यहाँ श्लोकाभ्यास या श्लोकावृत्तिरूप महायमक अलंकार है। इसमें अर्जुन और भगवान् के युद्ध का वर्णन है। चारों का शब्द विन्यास एक जैसा है परन्तु अर्थ में भेद है। अतः यहाँ महायमक अलंकार है।

इस महायमक के चार अर्थ इस प्रकार है।

1. जगतीश-मार्गणाः विकाशम् ईयुः - पृथिवीपति अर्जुन के बाण विस्तार को प्राप्त हुए।

2. जगति ईशमार्गणाः विकाशम् ईयुः - संसार में शिव के बाण वि-काश (विच्छेद) को प्राप्त हुए।

3. जगती-श-मारु-गणाः विकाशम् ईयुः- संसार को दुःख देने वाले राक्षसों को मारने वाले शिव के गण (अर्जुन के पराक्रम से) प्रफुल्लित हुए।

4. जगतीशमार्गणाः वि-काशम् ईयुः - जगती के ईश शिव के अन्वेषक देव आदि-पक्षियों की गति के स्थान को प्राप्त हुए।

**पादादियमक-**

**वनेऽवने वनसदां मार्ग मार्गमुपेयुषाम्।**
**बाणैर्बाणैः समासक्तं शंकेऽशं केन शाम्यति।।** 15/10

अर्थात् आप लोग वनवासियों के रक्षक (त्राता) इस वन में मृगों के मार्ग का अनुसरण करते हुए भागे जा रहे हैं तो फिर इन शब्दकारी बाणों के साथ-साथ आने वाला दु:ख किस उपाय से शान्त होगा। मुझे इस बात का सन्देह है। वस्तुत: यह व्यपेत अव्यपेत पादादि यमक का उदाहरण है। प्रथम पंक्ति के आरम्भ में बने के बाद ऽ का व्यवधान है तथा द्वितीय के आरम्भ में मार्ग मार्ग में किसी वर्ण का व्यवधाान नहीं है- तृतीय पादारम्भ में

**बाणैः बाणैः** में भी किसी का व्यवधान नहीं है

अत: अव्यपेत का उदाहरण है। चतुर्थ में पुन: शङ्के के बाद ऽ का व्यवधाान है अत: व्यपेत का उदाहरण है। इस प्रकार 1, 3 में व्यपेत - यमक है। 2, 4 में अव्येपत- यमक है। अत: यह व्यपेताव्यपेत यमक का उदाहरण है। यहाँ मल्लिनाथ की टीका है- 'वण संशब्दने इति धातोर्घञ्। ततः अर्शआदिम्यः इत्यच्प्रत्ययः। यमकात्वाद् वबयोरभेदः। उक्तं च रलयोर्डलयोस्तद्वज्जययोर्बवयोरपि। साबिन्दुकाबिन्दुकयोः स्याद्भेदेन कल्पनम्।

भरत ने इसका लक्षण इस प्रकार दिया है कि जहाँ चरण के आदि में समान अक्षरों का समावेश हो, वहाँ पादादि यमक अलंकार होता है- आदौपादस्य यत्र स्यात् समावेशः समाक्षरः। पादादियमकं नाम, तद्विज्ञेयं बुधैर्यथा।। (नाट्यशास्त्र, भरत 26-78)

**पदान्तादियमक-**

**मा विहासिष्ट समरं समरन्तव्यसंयत।**
**क्षतं क्षुण्णासुरगणैरगणैरिव किं यशः।।** 15/8

यहाँ प्रथम पादान्त में तथा द्वितीय पाद के आरम्भ में समरं है अतः यह अव्यपेत पादान्तादि यमक का उदाहरण है। तृतीय के अन्त तथा

चतुर्थ के प्रारम्भ में गणैः गणैः इव में पदान्तादि यमक है।

भारवि का नीतिशास्त्रीय ज्ञान में भी सौन्दर्य है। हितं मनोहारि च दुर्लभ वचः (1/4) भारवि ने अनेक प्रकार के छन्दों का प्रयोग किया है। भारवि का प्रिय छन्द वंशस्थ है। कहीं-कहीं व्याकरणादि की पारिभाषिक उपमाएं हैं जैसे-प्रकृति प्रत्यययोरिवानुबन्धः। (13-19)

भारवि ने अपनी शैली का विवेचन करते हुए लिखा है-

**प्रसादरम्योजस्वि गरीयो लाघवान्वितम्।**
**साकांक्षमनुपस्कारं विष्वग्गति निराकुलम्॥** 11/38

अर्थात् अच्छी रचना प्रसाद गुण के कारण रम्य होती है। उसमें ओजस्विता, (प्रभविष्णुता), अर्थनिर्भरता, वाक्प्रपञ्च का अभाव- साकांक्ष पद योजना और स्वतः पूर्णता होती है।

भारवि अश्लिष्ट वर्णवाली श्रवण सुखद और अर्थनिर्भर वाणी को मानो स्त्रीरत्न के समान रमणीय मानते हैं। (14/3) ऐसी वाणी के द्वारा कवि गाम्भीर्य अर्थ का प्रकाशन करता है।

अनुप्रासात्मक-ध्वनियों के द्वारा शब्द संगीत की सृष्टि करने के साथ ही अर्थ की स्वाभाविकता का निदर्शन कराने में कवि को विशेष सफलता प्राप्त हुई है जैसे-

**महौजसौ मानधाना धानार्चिता**
**धनुर्भृतः संयति लब्धकीर्तयः।**
**न संहतास्तस्य न भिन्नवृत्तयः**
**प्रियाणि वाञ्छन्त्यसुभिः समीहितुम्॥** 1/19

यहाँ म, न, ध में अनुप्रास ध्वनि के द्वारा श्लोक के अर्थ की स्वाभाविकता स्पष्ट है।

किसी पद की पुनरावृत्ति करने का विधान किरात में अनेक जगह है जैसे-

**मुनिरूपोऽनुरूपेण सूनुना ददृशे पुरः॥** 11/2

यहाँ रूप पद की पुनरावृत्ति है

इसी प्रकार--------**वीतप्रभावतनुरप्यतनुप्रभावः।**

आदि छन्द है 11/64

भारवि की उपमाओं में सौन्दर्य, स्वारस्य, सरसता, पाण्डित्य और औचित्य का सुन्दर समन्वय है। युधिष्ठिर कहते हैं कि मनुष्य जब किंकर्त्तव्यविमूढ़ होता है तो अन्धकार मैं दीपक के समान आगम उसका मार्ग निर्देश करता है-

**मतिभेदस्तमस्तिरोहिते गहने**
**कृत्यविधौ विवेकिनाम्।**
**सुकृतः परिशुद्ध आगमः**
**कुरुते दीप इवार्थदर्शनम्।। (2/33)**

दार्शनिक उपमा के साथ वैयाकरणी उपमाएं भी भारवि ने दी हैं जैसे शिव और अर्जुन के बीच में वध हेतु उपस्थित वराह की उपमा प्रकृति और प्रत्यय के बीच में विद्यमान अनुबन्ध (इत् संज्ञक क् आदि, जैसे क्त और क्तिन् में क् अनुबन्धों) से दी गई है-

**स भवस्य भवक्षयैकहेतोः**
**सितसप्तेश्चविधास्यतोः सहार्थम्।**
**रिपुराप पराभवाय मध्यं**
**प्रकृतिप्रत्ययोरिवानुबन्धः।। (13/19)**

सर्ग 13 तथा 17 सर्ग में उपमालंकार का सुन्दर प्रयोग है- इसके अतिरिक्त 2/31, 4/28, 13/15, 20, 33, 14/42, 17/2 से 17/9 तक उपमाएं हैं।

इसके अतिरिक्त भारवि ने निम्नालंकारों का प्रयोग किया है जैसे-

1. उत्प्रेक्षा- 2/10, 11, 3/8, 5/30, 6/33, 7/31, 11/13, 14/50, 17/8, 48

2. रूपक 2/50, 4/3, 11/4

3. अतिशयोक्ति–3/60, 9/4, 12/7

4. अर्थान्तरन्यास– 1/2, 23, 2/43, 3/12, 17, 4/23, 8/37, 9/70, 10/50, 11/8, 11

5. श्लेष– 1/24, 13/14, 15, 15/45

6. एकावली – 2/32

7. समासोक्ति– 2/36, 3/60, 5/27

8. दृष्टान्त – 2/51, 15/15

9. अर्थापत्ति– 7/27

10. विरोधाभास – 18/41

11. काव्यलिंग – 5/40

किरात में भारवि ने अलंकारों के तुल्य अनेक छन्दों को अपनाया है जैसे– उद्गता, प्रहर्षिणी, उपजाति, वैतालीय, दुतविलम्बित, प्रतिमाक्षरा, स्वागता पुष्पिताग्रा, औपच्छन्दसिक, वसन्ततिलका आदि। उनका श्लोक छन्द तथा वंशस्थ प्रयोग रुचिकर है। बारहवे सर्ग में उद्गता जैसे कठिन छन्द को प्रयोग है। उन्होंने मत्तमयूर तथा कुटिला जैसे कठिन छन्दों का भी प्रयोग किया है। पांचवे तथा अठारहवें सर्ग में सोलह प्रकार के छन्द प्रयुक्त हुए हैं।

जिस कवि की भाषा जितनी अधिक सबल और प्रसंगोचित होगी, उतनी ही तीव्र भावानुभूति उसकी कविता द्वारा होगी। भारवि लम्बे-लम्बे समासों, अनेक विशेषणों से युक्त उलझे हुए दीर्घ वाक्यों के पक्षपाती नहीं हैं। उनकी ललित शब्द योजना अर्थाभिव्यक्ति की दृष्टि से सर्वथा उपयुक्त एवं प्रसंगकानुकूल है। भारवि के अनुसार शब्द चेतना शिल्प उक्ति संस्कार के बिना नहीं पनपती।

**वहन् द्वयीं यद्यफलेऽर्थजाते**
**करोति संस्कारहतामिवोक्तिम्।।** 3/48

उक्तिं औदार्य के प्रति भारवि का दुर्निवार आग्रह है।

**अलंघ्यत्वाज्जनैरन्यैः क्षुभितोदन्वदूर्जितम्।**
**औदार्यादर्थसम्पत्तेः शान्तं चित्तमृषेरिव।।** 11/40 तथा 3/10 आदि।

उदारता, प्रसाद, माधुर्य तथा ओजस्विता आदि वैदर्भी के गुणों को उन्होंने स्थान दिया है

**प्रसादरम्यमोजस्वि गरीयो लाघवान्वितम्।**
**साकांक्षमनुपस्कारं विष्वग्गति निराकुलम्।।** 11/38

भारवि को वाक् सार्थकता सर्वाधिक इष्ट है।

**सलेशमुल्लङ्घितशास्त्रवेङ्गितः**
**कृती गिरां विस्तरतत्त्वसंग्रहे।**
**अयं प्रमाणीकृत-कालसाधनः**
**प्रशान्त संरम्भ इवाददे वचः।।** 14/2

तथा 2/1, 4, 27, 3/10, 11/38 आदि।

**सौन्दर्य बोध**- कुछ ही क्षण भारवि में ऐस आते हैं जब वे प्रकृति के मनमोहक सहज सौन्दर्य पर मुग्ध होकर उसमें खो जाते हैं। किरात के चतुर्थ सर्ग में शरद् वर्णन में यह स्थिति आई है।

इस प्रकार भारवि की शैली-साधारणतः सरल है और वैदर्भीरीति तथा प्रसाद गुण मण्डित है। इनकी वैदर्भी कालिदास के सदृशसरल-सहज नहीं है। अतः मल्लिनाथ ने कहा है- नालिकेलफलसम्मितं वचः। उनकी प्रसादगुण मण्डित-सूक्तियों से काव्य में प्राञ्जलता का प्रचुर प्रादुर्भाव हुआ है जैसे- संवृणोति खलु दोषमज्ञता - 11/63।

भारवि एक स्वतन्त्रचेता कवि हैं और काव्य के सम्बन्ध में उन्होंने अनेक ऐसी धारणाएं किरातार्जुनीयम् में प्रकट की हैं जो उनकी मेधा के मन्थन से उद्भूत हुई हैं। काव्य में वे अर्थ गौरव को वरेण्यतम मानते हैं और उनकी अर्थ गौरव विषयक धारणा नितान्त मौलिक है। अर्थ गौरव से भारवि का तात्पर्य काव्य की मूल्यवत्ता है। वे सुन्दर से अधिक शिव और आस्वादन से अधिक प्रयोजन को महत्त्व देते हैं। भारवि के पास प्रांजल काव्य का एक ही आधार है- अर्थगरिमा।

# किरातार्जुनीये बिम्बविधानम्

डॉ. सुन्दरी सिद्धार्थ

कवि: क्रान्तद्रष्टा, विलक्षणकर्मकर:, अलौकिकस्य काव्याख्यस्य जगत: स्रष्टा इति वर्णित:। सर्जनकार्यार्थं तस्य समीपे अस्ति एकं विशिष्टम् उपकरणम्। शब्द इति। शब्द 'ब्रह्म' इति कथ्यते। अस्य शब्दस्य शक्ति: अपारा अपूर्वा च। याथार्थ्यलोकम् अधारीकृत्य संयोजिता काव्यसृष्टि: नूनम् अयथार्था एव। वाक्य-काव्ययो: भेदं स्पष्टीकर्तुम् एकम् उदाहरणम् प्राय: प्रस्तूयते। मार्गे एकं जर्जरितं वृक्षखण्डं दृष्ट्वा सखा कथितवान्-'शुष्कं काष्ठं तिष्ठत्यग्रे'। कालिदासस्य मुखात् हठात् निस्सृतम्–'नीरसतरुरिह पुरतो भाति।' इदमेव काव्यवैचित्र्यम्। वैचित्र्यस्य एक: पक्ष एव बिम्बम्। आकारसृष्टि: इति अर्थं कर्तुं शक्यते। शब्दानां संगुम्फेन मानसपटले, कल्पनाभित्तौ च यत् चित्रम्, या आकृति:, यत् स्वरूपं वा उद्भूयते नानाचित्रविचित्रसौन्दर्येण सह तत्र अङ्कितं भवति– तदेव बिम्बम्। अस्य प्रक्रिया का? इन्द्रियाणां माध्यमेन तस्य गति:।

अस्माकम् इन्द्रियाणि बहिर्मुखानि। तत् तत् विषयसौख्यम् अनुभवितुं सदैव उत्सुकानि। काव्याऽध्ययन-पठन-समये, कस्यचित् अपि इन्द्रियस्य किंचित् रुचिकरं आकर्षकं वा भवति चेत्, तस्य रसानुभव: भवति। इन्द्रियत: मनसि, मनसो बुद्धौ– तदा अनुभव प्रक्रिया पूर्णा भवति। एवम् बिम्बविधाने केचित् पञ्चप्रकारा: मन्यन्ते– घ्राणबिम्बं स्पर्शबिम्बम्, दृश्यबिम्बं, श्रवणबिम्बं, रसनाबिम्बम् च।

यदा कवि: 'एवम् इदम्, इदम् एवम्' इति शब्दमात्रेण, वाचकाभिधया वस्तुनिर्देशं करोति, तत्तु 'वर्णनम्' इति स्वीक्रियते। यदा तदेव वस्तु अलंकार-गुण-वक्रोक्ति-प्रभृतिभि: काव्योपकरणै: जीवतत्त्वं मूर्तरूपत्वं च आरोप्य प्रस्तूयते, तथा च तत् असामान्यम् अलौकिकं हृदयस्पर्शि च प्रतिभाति' तत् एव बिम्बम्। अस्तु, किरातार्जनीये बिम्बविधानं

कथं विशिष्टम्? कालिदासदीनां तुलनायाम् आन्तरिकभावसौन्दर्यम् अत्र गौणम्, बाह्यकलासौन्दर्यं च आधिक्येन प्रदर्श्यते इति कारणम् एकम्। वर्णनविशदता' विषयवैविध्यम्, अर्थगौरवम्, चरित्रचित्रणम्– इत्यादीनि अपि साहाय्यकारणानि।

यथा चित्रकरणं तथा काव्यकरणमपि काचित् कला। चित्रकारः रक्त-नील-हरित-चमत्कारं जनयति। कविः वर्णविशेषाणां स्थाने शब्दार्थौ विन्यस्य पूर्वानुभूतम् एव वस्तु' बुद्धौ मनसि च सम्यक् आरोप्य आह्लादम् उत्पादयति। बिम्बविधानस्वरूपम् ऐन्द्रजालम् इदम् केवलं शब्दार्थप्रपञ्चः एव। शब्दशक्तिम् अधिकृत्य कथितं दण्डिना काव्यादर्शे–

**इदमन्धं तमः कृत्स्नं जायते भुवनत्रयम्।**
**यदि शब्दाह्वयं ज्योतिरासंसारं न दीप्यते।**

शब्दाः तु साधनमात्रम्। तेषां प्रयोगकर्ता तु स्वयं कविरेव। ध्वनिकारः कथयति– "अपारे काव्यसंसारे कविरेव प्रजापतिः। यथास्मै रोचते विश्वं तथेदं परिवर्तते।" अतः कविः एव बिम्बविधाता। काव्यम्, कविः इति कोणद्वयम् एव। तृतीयः कोणः भवति पाठकः। त्रयाणाम् एतेषाम् परस्परं सम्मेलनेन एव बिम्बस्य पूर्णत्वं तस्य विधानस्य सार्थकत्वं च। बिम्ब-विधानसन्दर्भे, पाठकस्य या दृष्टिः आवश्यकी' सा तु लोकोत्तरा स्यात्। तत्माध्यमेनप्राप्तः आनन्दः अपि लोकोत्तरः। साहित्यदर्पणे विश्वनाथेन वर्णितम्–

**सत्त्वोद्रेकादखण्डस्वप्रकाशानन्दचिन्मयः।**
**वेद्यान्तरस्पर्शशून्यो ब्रह्मास्वादसहोदरः।।**
**लोकोत्तरचमत्कारप्राणः कैश्चित् प्रमातृभिः।**
**स्वाकारवदभिन्नत्वेनायमास्वाद्यते रसः।।**

महाभारतात् एकं कथांशम् एव गृहीतवान् भारविः। तपसा आराधितात् परमेश्वरात् पाशुपतस्त्रलाभः–इत्यमेव महाकाव्यस्य मुख्यबिन्दुः। 'व्यासस्य उपदेशम् अनुसृत्य अर्जुनः इन्द्रं प्रसादयितुं तपः करोति। प्रसन्नस्य इन्द्रस्य उपदेशम् अनुसृत्य शिवं प्रति तपश्चरणम्। ईश्वरप्रसादेन अस्त्रलाभः।' लघुकथाम् समयानुकूलं लक्ष्यानुसारं बृहत् क्लिष्टं गम्भीरं काव्यम्-इति परिवर्त्य विशिष्टत्वं प्राप्तवान् कविः। बिम्बानि अपि अनेकानि। प्रथमसर्गे

एव सुयोधनस्य राजनीतिबिम्बम्। तस्य मध्ये एव निहितं दुर्योधनस्य भयम्, बलहीनता आदि। वनेचरः कथयति–

**"स चिन्तयत्येव भियस्त्वदेष्यतीः,**
**अहो दुरन्ता बलवद्विरोधिता॥"**

षष्ठे सर्गे– इन्द्रकीलर्वते प्रवेशसमये प्रफुल्लिता प्रकृतिः अर्जुनस्य स्वागतम् इव आरचयति। सप्तमसर्गे– गन्धर्वैः सह आगतानाम् अप्सरसां वर्णनम् अनेकानेकबिम्बान्, सरससचित्रकेलिकलापक्रीडादिमाध्यमेन उद्घाटयति। द्वादशसर्गे– एकपादस्थितस्य अर्जुनस्य तपश्चरण्म् इत्यत्र कालिदासस्य प्रभावः विषयवर्णने सर्वत्र च सम्यक् प्रतिभाति।

महाभारतेन तुलनां कुर्वता, कविना बिम्बविधानं कीदृशम् अनुप्रवेशितम् इति प्रदर्शयति। वनपर्वणि द्रौपद्याः परितापप्रसङ्गे, युधिष्ठिरं प्रति तस्याः उक्तिः–

**"तं त्वां वनगतं दृष्ट्वा कस्मात् मन्युर्न वर्धते।**
**अयं कुरून् रणे सर्वान् हन्तुमुत्सहते प्रभुः॥"**

परन्तु भारवेः द्रौपदी प्रगल्भा, बिम्बं च प्रगल्भतरम्। यथा–

**"अवन्ध्यकोपस्य विहन्तुरापदां,**
**भवन्ति वश्याः स्वयमेव देहिनः।**
**अमर्षशून्येन जनस्य जन्तुना,**
**न जातहार्देन न विद्विषादरः॥"**

एका प्रसिद्धा उक्तिः अस्ति–

शठे शाठ्यं समाचरेत् इति। न समाचरति चेत् किं भवति इति ताद्रूप्यवर्णनेन बिम्बं विदधाति भारविः–

**"व्रजन्ति ते मूढधियः पराभवं,**
**भवन्ति मायाविषु ये न मायिनः।**
**प्रविश्य हि ध्नन्ति शठास्तथाविधान्**
**असंवृताङ्गान् निशिता इवेषवः॥"**

सज्जनानां, मायावित्वरहितानां सम्पूर्णं नाशं कुर्वन्ति शठाः।

महाभारते युधिष्ठिरः द्रौपदीं प्रत्युत्तरति। अत्र महाकाव्ये भीमस्य कथनान्तरमेव समाहृत्य उत्तरं ददाति–

**"बलवानपि कोपजन्मनः तमसो नाभिभवं रुणद्धियः।**
**क्षयपक्ष इवैन्दवीः कलाः सकला हन्ति स शक्तिसम्पदः।।"**

युधिष्ठिरस्य तर्कः अस्ति–

**कृष्णपक्षः इव क्रोधः महाविनाशकारी।**
**एषु पद्येषु राजनीतिसिद्धान्ताः बिम्बीभूताः।**

बिम्बविधाने अलंकाराणां मुख्यत्वं दृश्यते एव। उपमा तु मूला भावना। अतिशयोक्तिः, प्रतीपम् उत्प्रेक्षा, अनुप्रासः इत्यादयः अलंकाराः बिम्बनिर्माणे सहायकाः। बिम्बं कल्पनालोकं निर्माति काव्यलोकोऽयं सामान्यलोकापेक्षया भिन्नः अद्भुतश्च। अतएव मम्मटभट्टः कथयति काव्यप्रकाशे–

**"नियतिकृतनियमरहितां ह्लादैकमयीमनन्यपरतन्त्राम्।**
**नवरसरुचिरां निर्मितमादधती भारती कवेर्जयति।।"**

कविकृतिः प्रतिकवि भिद्यते। अतएव कविषु अगण्येषु सत्सु अपि, काव्यानाम् एकरूपता एकरसता वा न सञ्जायते। प्रत्येकं कवेः शब्दप्रयोगविधिः वैयक्तिकः एव। कथयति कविर्दण्डी काव्यादर्शे–

**"इक्षुक्षीरगुडादीनां माधुर्यस्यान्तरं महत्।**
**तथापि न तदाख्यातुं सरस्वत्यापि शक्यते।।"**

अन्यः एकः ध्यातव्यः विषयः--

**यथा सर्वत्र तथा काव्येऽपि परिवर्तनम्**
**अपरिहार्यम्। नूतनता आगच्छति एव।**

कथितं च–

**"प्रज्ञा नवनवोन्मेषशालिनी प्रतिभा मता।।**
**पदे पदे यत् नवताम् उपैति, तदेव रूपं रमणीयतायाः।।"**

**निदर्शनम् एतत्–** 1. वेदकाले अकृत्रिम–बिम्बरचना। 2. रामायणे

काव्यं प्रधानं, बिम्बं काव्यसहायकम्। 3. कालिदासस्य शैली अलंकृता किंतु भावपक्षप्रधाना, बिम्बानि च मार्मिकाणि, आडम्बरबिम्बम् स्वल्पम्। 4. भावे: काले कलापक्ष: प्रधान: बभूव। आलंकारिकबिम्बानां प्रवर्तक: एव स:। एवमेव अविरला काव्यधारा अग्रे सरति सरिष्यति च।

**1. ऋग्वेदे बिम्बम्**– मित्रसमान: अग्नि: यज्ञसन्दर्भे प्रदीप्त: भूत्वा रक्षति।

**"घृतप्रतीकं ऋतस्य धूर्षदम्,**
**अग्निम् मित्रम् न समिधान ऋज्यते।**
**इन्धानो अक्रो विदथेषु दीद्यत्,**
**शुक्रवर्णाम् उदु नो यंसते धियम्।।"**

एवमेव उषस् मरुदा आदीनाम् मन्त्रेषु बिम्बानि दृश्यन्ते।

2. रामायणस्य सुन्दरकाण्डे सीताया: सौन्दर्यं बिम्बरूपेण आकर्षयति–

**"त्वां कृत्वोपरतो मन्ये, रूपकर्ता स विश्वकृत्।**
**नहि रूपोपमा ह्यन्या तवास्ति शुभदर्शने।।"**

3. महाभारते व्यापकत्वं सूचयति बिम्बम्।

**"धर्मे चार्थे च कामे च मोक्षे च भरतर्षभ।**
**यदिहास्ति तदन्यत्र यन्नेहास्ति न तत् क्वचित्।।"**

4. कालिदासस्य मेघदूतं तु बिम्बानां आढ्य: कोश एव। मेघ: अद्रिसानौ स्थित: मुष्टामुष्टिक्रीडां कुर्वन् गज: इव प्रतिभाति–

**"आषाढस्य प्रथमदिवसे मेघमाश्लिष्टसानुं**
**वप्रक्रीडापरिणतगजप्रेक्षणीयं ददर्श।।"**

ध्वनिप्रेरितं बिम्बम् एकम्– लज्जावानताया: पार्वत्या: वर्णनं– कुमारसंभवे–

**"एवं वादिनि देवर्षौ पार्श्वे वितुरधोमुखी।**
**लीलाकमलपत्राणि गणयामास पार्वती।।"**

5. इदानीं भारवेः बिम्बानि। प्रश्नः उत्थितः– 'किरातार्जुनीये कथं कुत्र बिम्बं सम्भवति? तत्र तु भाषणानि एव भवन्ति सर्वत्र इति। "द्रौपधा उक्तिः, भीमस्य भाषणम्' युधिष्ठिरस्य वचनानि, व्यासमुनेः उपदेश-भाषणम्' द्रौपद्याः अर्जुनं प्रति उक्तिः, गुह्यकस्य तपश्चरणमधिकृत्य अर्जुनं प्रति भाषणम्' वृद्धमुनिवेषेण आगतस्य इन्द्रस्य अर्जुनपरीक्षायै भाषणम्, अर्जुनस्य वनेचरं प्रति उक्तिः, कार्तिकेयस्य (स्कन्दस्य) सैनिकान् प्रति उक्तिः, किरातरूपशंकरं दृष्ट्वा अर्जुनस्य वितर्कश्च।" परन्तु चिन्ता न करणीया। यतः अर्थगौरवे सिद्धहस्तः स भारविः शब्दबिम्बं प्रस्तौति– [नयः तु विषमः। परं अभ्यासेन सरलः भवति। यथा गहनजलाशये सोपानं विरचय्य तस्मिन् अवतरणं सरलं भवति] यथा

**"विषमोऽपि विगाह्यते नयः, कृततीर्थः पयसामिवाशयः।**
**स तु तत्र विशेषदुर्लभः, सदुपन्यस्यति कृत्यवर्त्म यः॥"**

एतद् तु शाब्दिकं बिम्बम्।

कालिदासस्तु 'मेघः गजः इव' इति वर्णयति। भारविः तं विपरिवर्तते। इन्द्रस्य दैवगजाः आकाशे सरन्तः पयोदसदृशाः प्रतिभान्ति–(VIII.8)–

**"सिन्दूरैः कृतरुचयः सहेमकक्ष्याः,**
**स्त्रोतोभिः त्रिदशगजा मदं क्षरन्तः।**
**सादृश्यं ययुररुणांशुरागभिन्नैः,**
**वर्षद्भिः स्फुरितशतह्रदैः पयोदैः॥"**

सन्देहालंकारः उत्क्षिपति एकम् अक्षिबिम्बम्। शिवार्जनुयोः मल्ल्युद्धम्। प्रेक्षकाः तु शिवगणाः। ते संशयान्विताः। कः शिवः, कः अर्जुनः? उपरि कः। अधः कः। यावत् निश्चेतुं प्रयतन्ते, तावत् अधः यः सः उपरि, उपरि यः स च अधः भवति।(XVIII.9)–

**"अयमसौ भगवान् उत पाण्डवः,**
**स्थितमवाङ्मुनिना शशिमौलिना।**
**समधिरूढमजेन नु जिष्णुना,**
**स्विदिति वेगवशात् मुमुहे गणैः॥"**

बिम्बं श्रवणसुखदमपि भवति। चित्रालंकारः, यमकालंकारः इत्यादिषु। नैतद् नूतनम्। कलिदासेन रघुवंशस्य नवमे सर्गे दशरथवर्णने अङ्कुरित एव यमकालंकारः। यथा–

**'दशरथः प्रशशास महारथो, यमवतामवतां च धुरि स्थितः॥'**

भारविः अलंकृतिश्रेष्ठत्वम् अभिज्ञाय, गृह्णाति यमकं, छन्दोऽपि– 'द्रुतविलम्बितमाह नभौ भरौ।" (V.9) यथा–

**"पृथुकदम्बकदम्बकराजितं, ग्रथितमालतमालवनाकुलम्।**
**लघुतुषारतुषारजलश्च्युतम्, धृतसदानसदाननदन्तिनम्॥"**

दीपशिखाकालिदासः, घण्टामाघः च। तथैव आतपत्रभारविः अपि अन्यद् विरुदम्। नूनं तत् तु प्रसिद्धौ बिम्बविधानेन एव प्रेरितम्। कविना विचेतनायाम् अपि निसर्गप्रकृतौ, चैतन्यम् उत्पादितम् इति प्रतीयते। (V.39) उदाहरणम्– [सरसिज सम्भूत परागः वायुवेगेन उपरि, सर्वतः च विकीर्णः भवति। गोलाकारं प्राप्य परागः पीतवर्णम् आतपत्रम् इव प्रतिभाति।] यथा–

**"उत्फुल्लस्थलनलिनीवनादमुष्मात्,**
**उद्धूतः सरसिजसम्भवः परागः।**
**वात्याभिर्वियति विवर्तितः समन्ताद्**
**आधत्ते कनकमयात पत्रलक्ष्मीम्॥"**

**निष्कर्षः–** बिम्बविधानस्य क्लिष्टरूपं दृष्टं भारवेः काव्ये। एतत् वा साधु असाधु वा? असाधु, यतः–स्वाभाविकता सूक्ष्मता च न्यूना जाता; रसास्वादपथे किञ्चित् अपूर्णत्वम्। परन्तु साधु एव, यतः– कलापक्षः सुस्थापितः। अद्भुतचमत्कारयुक्तवक्रोक्तिरूपसर्जनम् अधिकपाठकान् आकर्षयति। काव्यपरिधिः विस्तृतो भवति। विकासोन्मुखं साहित्यम् इति सन्तोषः। अद्वैतिनः दार्शनिकाश्च ब्रह्मास्वादसहोदरं रसं पिबन्तु नाम। अन्ये तु "अस्माकं कृतेऽपि काव्यं भवत्येव" इति मोदन्ते। इति शम्।

आंगलभाषायां किरातार्जुनीयस्य समीक्षात्मकम् एकम् पुस्तकम्। तत्र बिम्बविधानस्य रूपद्वयं संकेतितम् 1. Discursive form. 2.

Prescutational form. इति।

प्रथमं तु तार्किकं, बुद्धिमतं बिम्बम् यथा (II.30)–

**सहसा विदधीत न क्रियामविवेकः परमापदां पदम्।**
**वृणते हि विमृश्यकारिणं गुणलुब्धाः स्वयमेव सम्पदः॥**

द्वितीयं तर्कातीतम्, झटिति अवगम्यते। अद्‌भुतबिम्बं (III.25) [व्यासस्य आदेशः पार्थस्य आननं साक्षात् वेगेन तथा प्रविष्टः यथा अर्कस्य दीप्तिः पद्‌ममुखं प्रविशति] यथा–

**"निर्याय विद्याथ दिनादिरम्याद्**
**बिम्बाद् इवार्कस्य मुखान्महर्षेः।**
**पार्थाननं वह्निकणावदाता**
**दीप्तिः स्फुरत्पद्‌ममिवाभिपेदे॥"**

एकाक्षरपद्येऽपि मिश्रितं ध्वननश्रवणबिम्बमस्ति। (XV.14) यथा–

**"ननो ननुन्नो, नुन्नोनो नाना नाना नना ननु।**
**नुन्नो नुन्नो न नुन्नेनो नानेना नुन्ननुन्ननुत्॥"**

● भारवेः बिम्बविधाने विविधत्वं दरीदृश्यते। कठिनातिकठिने अस्मिन् काव्ये बिम्बानि अन्विष्य' अवगम्य' आस्वाद्य दैवाद् रसोद्रेकं प्राप्नोति यः, स रसान्वितः रसिकश्च।

● बाणस्य गद्यारण्यम् इव अत्रापि महान् प्रयासः अपेक्ष्यते। इदमेव संकेतयति सूक्तिद्वयमिदम्। एका मल्लिनाथस्य, अपरा राज्ञ्याः गंगादेव्याः 'मथुराविजय'नामकमहाकाव्यात्।

1. **"नारिकेलफलसम्मितं वचो भारवेः सपदि तद् विभज्यते।**
   **स्वादयन्तु रसगर्भनिर्भरम्, सारमस्य रसिकाः यथेप्सितम्॥"**
2. **"विमर्दव्यक्तसौरभ्या भारती सापि भारवेः।**
   **धत्ते बकुलमालेव विदग्धानां चमत्क्रियाम्॥"**

क्लिष्टा खलु, परं वैदर्भीरीतिरेव इति स्पष्टम्।

स्थाप्यतां मानसे इदं चित्रम्। एकस्याः युवत्याः चित्रम्। सुन्दरी सा। स्थिता। न चरणौ, केवलं पंकजकुसुमम्। न पादौ, कदलीदण्डावेव। न नितम्बौ – घटौ एव। कटिः – अङ्गुलिद्वयायतं केवलम्। न भुजौ पल्लवौ एव। न ग्रीवा – शंखः एव। न अधरः विद्रुमः एव। न अक्षिणी – मीनौ एव। न भ्रुवौ – चापौ एव। न केशाः भृङ्गाः एव। न मुखम्– गोलाकारः पूर्णचन्द्रः एव।

एतत् चित्रम्, न बिम्बम्। यतः यथार्थमिदम्, बिम्बं तु कल्पनान्वितम्। सहृदयः तु बिम्बमेव अनुभवति, न तु चित्रम्।

# किरातार्जुनीये अर्थान्तरन्याससुषमा

डॉ. धर्मेन्द्रकुमारसिंहदेवः

**उपक्रमः**

असीमः काव्यप्रपञ्चः। तत्र जयति बृहत्त्रयी। बृहत्त्रयी नाम भारवेः किरातार्जुनीयम्, माघस्य शिशुपालवधम्, श्रीहर्षस्य नैषधीयचरितम् इति सुविदितमेव। तत्र च विजयते किरातार्जुनीयं नाम भारवेर्लेखनीलताप्रसूतं महाभारतीयकथाधारितं महाकाव्यकुसुमम्। तत्रापि **भारवेरर्थगौरवम्** इति प्रसिद्धिं जेगीयते। **सहसा विदधीत न क्रियाम्** इति सूक्तिमूला भारवेर्जीवनवृत्तेन सह जनश्रुतिरपि प्रचलतीति नास्ति विदुषामगोचरः।

**परिचयः**

किरातार्जुनीयं नाम महाकाव्यम्। प्रणेतास्य महाकविः भारविः। तत्र महाकाव्ये कथावस्तु महाभारतस्य वनपर्वतः सङ्कलितम्। तच्च द्वैतवनमधिवसतां पाण्डवानां तात्कालिकवृत्तान्तविशेषमधिकृत्य प्रवृत्तम्। तत्र च पाण्डवानाम् अन्यतमस्य प्रकाण्डवीरस्य अर्जुनस्य किरातरूपधारिणः पशुपतेः सकाशाद् मोघास्त्रप्राप्तिरूपं वृत्तमुपगुम्फितम्। महाकाव्यमिदम् अष्टादशसर्गैरुपनिबद्धम्। काव्यस्यारम्भः श्रीशब्देन, उपसंहारश्च लक्ष्मीपदेन कृतः। वीररसस्य प्राधान्येन चित्रणं मनोहरं सम्पन्नम्। प्राकृतिकदृश्यानां निरूपणम्, ऋत-शैल-सूर्यास्त-जलक्रीडादीनां च वर्णनम् अतीव मनोज्ञम्। पाशुपतास्त्रसम्प्राप्तिपर्यवसानमेवास्य काव्यस्य फलत्वेनावसीयते। तथा चाह मल्लिनाथः–

**नेता मध्यमपाण्डवो भगवतो नारायणस्यांशजः**
**तस्योत्कर्षकृते नु वर्ण्यचरितो दिव्यः किरातः पुनः।**
**शृङ्गारादिरसोऽङ्गमत्र विजयी वीरःप्रधानो रसः**
**शैलाद्यानि च वर्णितानि बहुशो दिव्यास्त्रलाभः फलम्।।**

**इति।**

तत्र च कथानके चरित्रचित्रणचमत्कारः, कल्पनाकमनीयता, गम्भीरभावानां सन्निवेशश्च प्रतिष्ठापयन्ति कविवरं भारविम्। स्वल्पैः पदैर्विशदार्थवर्णनमेव कवेरस्य भारवेर्वैशिष्ट्यम्। भारवेरर्थगौरवम् इति प्रसिद्धिः सुतरां चरितार्थताम् आवहति। अर्थगौरवदृशा, राजनीतिरहस्यनिरूपणधिया च काव्यमिदं काव्यान्तरेभ्यः अतितरां वैशिष्ट्यमपि विभावयति। वर्णनशैली चास्यौजःपूर्णा। अस्मिन् हि महाकाव्यस्य अखिलानि लक्षणानि परिपूर्णतया अभिव्यक्तिमुपगतानि विभाव्यन्ते। साधूक्तं कृष्णकविना–

**तदेव वृत्त्यापि महान्तमर्थं प्रदर्शयन्ती रसमादधाना।**
**सा भारवेः सत्पथदीपिकेव रम्याकृतिः कैरिव नोपजीव्या।।**

भारवेः क्वचिद् भाषा अर्थगाम्भीर्यवशाद् जटिलापि रसगर्भनिर्भरत्वात् न विजहाति मनागपि माधुर्यम्। नारिकेलफलवद् बाह्यरूपमेव कठिनं प्रतीयते। आभ्यन्तरन्तु सरसरससम्भृतम् आनन्दम् आतनुते सहृदयानाम्। उचितमुक्तं हि मल्लिनाथेन–

**नारिकेलफलसम्मितं वचो भारवेः सपदि तद्विभज्यते।**
**स्वादयन्तु रसगर्भनिर्भरं सारमस्य रसिका यथेप्सितम्।। इति।**

किं बहुना, महाकाव्यचक्रेतिवृत्ते भारविः सालङ्कृतकाव्यशैली-प्रवर्तकेषु कविमूर्धन्येषु प्रमुखपदम् अलङ्करोतीति निश्चप्रचम्।

**विषयप्रवेशः**

**काव्यं ग्राह्यम् अलङ्कारात्, सौन्दर्यम् अलङ्कारः** इति वामनोक्त-रीत्या काव्येषु तावद् अलङ्काराणां सुषमा सर्वात्मना चमत्करोति। तत्रालङ्कारप्रपञ्चे सूक्तिं वा सुभाषितं वा नीतिवाणीं वा हितवाणीं वा भजते अर्थान्तरन्यासो नामालङ्कारोऽपि। स चार्थान्तरन्यासो भारवेः प्रियतम इति पदे पदे संलक्ष्यते। अर्थान्तरन्यासो नाम–

**सामान्यं वा विशेषो वा तदन्येन समर्थ्यते।**
**यत्तु सोऽर्थान्तरन्यासः साधर्म्येणेतरेण वा।।** –का.प्र. 10.109

तेन च साधर्म्येण वैधर्म्येण वा सामान्येन विशेषस्य विशेषेण

सामान्यस्य वा समर्थनरूपः अर्थान्तरन्यासः सर्वथा काव्यस्य कवेरपि सुषमां पुष्णाति। तस्मात् किरातार्जुनीयस्य अर्थान्तरन्याससुषमा इति विषयः शोधत्वेन गृहीतः। तत्र च प्रसङ्गानुकूलम् अर्थान्तरन्यासस्य निदर्शनानि प्रस्तूय यथावसरं तत्र सौन्दर्यमपि प्रतिपादितम्।

**परमत्रेदमवधेयम्।** अनुपपद्यमानतया संभाव्यमानस्यार्थस्योपपादनार्थं यत् अर्थान्तरं न्यस्यते सोऽर्थान्तरन्यासः। दृष्टान्ते तु सामान्यं, सामान्येन, विशेषो विशेषेण समर्थ्यते इति ततो भेदः। साक्षाद् व्याप्तादेरनभिधानादनुमानतो भेदः। कारणेन कार्यस्य कार्येण कारणस्य वा समर्थनं तु काव्यलिङ्गस्य विषयः। प्रतिवस्तूपमायामुपमानोपमेयभावो विवक्षितः, अत्रार्थान्तरन्यासे तु समर्थ्यसमर्थकत्वं विवक्षितमिति ततोऽस्य भेदः– इति सारबोधिनी। तस्माद् अनुपपद्यमानतया संभाव्यमानयोः सामान्यविशेषयोरुपपादनार्थं तयोरन्यतर-रूपोदाहरणोपन्यासः अर्थान्तरन्यास इति फलितार्थः।

**अर्थान्तरन्यासस्य सुषमा**

अथेदानीं मल्लिनाथप्रभृतीनां टीकापरम्परामनुसृत्य अर्थान्तरन्यासस्य सुषमा प्रस्तूयते–

**कृतप्रणामस्य महीं महीभुजे**
**जितां सपत्नेन निवेदयिष्यतः।**
**न विव्यथे तस्य मनो न हि प्रियं**
**प्रवुक्तमिच्छन्ति मृषा हितैषिणः॥1.21॥**

–सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः।

**क्रियासु युक्तैर्नृप चारचक्षुषो**
**न वञ्चनीयाः प्रभवोऽनुजीविभिः।**
**अतोऽर्हसि क्षन्तुमसाधु साधु वा**
**हितं मनोहारि च दुर्लभं वचः॥1.4॥**

–सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः।

**स किंसखा साधु न शास्ति योऽधिपं**
**हितान्न यः संशृणुते स किंप्रभुः।**

सदाऽनुकूलेषु हि कुर्वते रतिं
नृपेष्वमात्येषु च सर्वसम्पदः॥1.5॥

—सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः।

तथाऽपि जिह्मः स भवज्जिगीषया
तनोति शुभ्रं गुणसम्पदा यशः।
समुन्नयन्भूतिमनार्यसङ्गमात्
वरं विरोधोऽपि समं महात्मभिः॥1.8॥

—सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः।

प्रलीनभूपालमपि स्थिरायति
प्रशासदावारिधिमण्डलं भुवः।
स चिन्तयत्येव भियस्त्वदेष्यतीरहो
दुरन्ता बलवद् विरोधिता॥1.23॥

—सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः।

तदाशु कर्त्तुं त्वयि जिह्ममुद्यते
विधीयतां तत्र विधेयमुत्तरम्।
परप्रणीतानि वचांसि चिन्वतां
प्रवृत्तिसाराः खलु मादृशां गिरः॥1.25॥

—सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः।

व्रजन्ति ते मूढधिपः पराभवं
भवन्ति मायाविषु ये न मायिनः।
प्रविश्य हि घ्नन्ति शठस्तथाविधा-
नसंवृताङ्गान्निशिता इवेषवः॥1.30॥

—अत्रार्थान्तरन्यासगर्भितोपमा।

अबन्ध्यकोपस्य विहन्तुरापदां
भवन्ति वश्याः स्वयमेव देहिनः।
अमर्षशून्येन जनस्य जन्तुना न
जातहार्देन न विद्विषादरः॥1.33॥

—सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः।

द्विषन्निमित्ता यदियं दशा ततः समूलमुन्मूलयतीव मे मनः।
परैरपर्यासितवीर्यसम्पदां पराभवोऽप्युत्सव एव मानिनाम्॥ 1.41॥
—सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः।

न समयपरिरक्षणं क्षमं ते
निकृतिपरेषु परेषु भूरिधाम्नः।
अरिषु हि विजयार्थिनः क्षितीशा
विदधति सोपधि सन्धिदूषणानि॥1.45॥
—सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः।

विषमोऽपि विगाह्यते नयः कृततीर्थः पयसामिवाशयः।
स तु विशेषदुर्लभः सदुपन्यस्यति कृत्यवर्त्म यः॥2.3॥
—सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः।

तदलं प्रतिपक्षमुन्नतेरवलम्ब्य व्यवसायबन्ध्यताम्।
निवसन्ति पराक्रमाश्रया न विषादेन समं समृद्धयः॥2.15॥
—वैधर्म्येण कार्यकारणरूपोऽर्थान्तरन्यासः।

मदसिक्तमुखैर्मृगाधिपः करिभिर्वर्त्तयते स्वयं हतैः।
लङ्घयन्खलु तेजसा जगन्न महानिच्छति भूतिमन्यतः॥2.18॥
—विशेषेण सामान्यस्य समर्थनरूपोऽर्थान्तरन्यासः।

ज्वलितं न हिरण्यरेतसं चयमास्कन्दति भस्मनां जनः।
अभिभूतिभयादसूनतः सुखमुज्झन्ति न धाम मानिनः॥2.20॥
—विशेषेण सामान्यस्य समर्थनरूपोऽर्थान्तरन्यासः।

किमपेक्ष्य फलं पयोधरान् ध्वनतः प्रार्थयते मृगाधिपः।
प्रकृतिः खलु सा महीयसः सहते नान्यसमुन्नतिं यया॥2.21॥
—विशेषेण सामान्यस्य समर्थनरूपोऽर्थान्तरन्यासः।

सहसा विदधीत न क्रियामविवेकः परमापदां पदम्।
वृणते हि विमृश्यकारिणं गुणलुब्धाः स्वयमेव सम्पदः॥2.30॥
—अत्र सहसाविधाननिषेधलब्धविमृश्यकारित्वरूपकारणस्य आपद्-

रूपव्यतिरेककार्येण समर्थनाद् वैधर्म्येण अर्थान्तरन्यासः। द्वितीयार्धेन च स एव साधर्म्येण।

**सुता न यूयं किमु तस्य राज्ञः**
**सुयोधनं वा न गुणैरतीताः।**
**यस्त्यक्तवान्वः स वृथा बलाद्वा**
**मोहं विधत्ते विषयाभिलाषः॥3.13॥**

—सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः।

**कृतानतिर्व्याहृतसान्त्ववादे जातस्पृहः पुण्यजनः स जिष्णौ।**
**इयाय सख्यामिव सम्प्रसादं विश्वासयत्याशु सतां हि योगः॥3.31॥**

—सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः।

**मा गाश्चिरायैकचरः प्रमादं वसन्नसम्बाधशिवेऽपि देशे।**
**मात्सर्यरागोपहतात्मनां हि स्खलन्ति साधुस्वपि मानसानि॥3.53॥**

—वैधर्म्येण कार्यकारणरूपोऽर्थान्तरन्यासः।

तुतोष पश्यन्कलमस्य सोऽधिकं
सवारिजे वारिणि रामणीयकम्।
सुदुर्लभे नार्हति कोऽभिनन्दितुं
प्रकर्षलक्ष्मीमनुरूपसङ्गमे॥4.4॥

—सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः।

ततः स संप्रेक्ष्य शरद्गुणश्रियं
शरद्गुणलोकनलोलचक्षुषम्।
उवाच यक्षस्तमचोदितोऽपि गां
न ह्रीङ्गितज्ञोऽवसरेऽवसीदति॥4.20॥

—सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः।

**पतन्ति नास्मिन्विशदाः पतत्रिणो**
**धृतेन्द्रचापा न पयोदपङ्क्तयः।**
**तथापि पुष्णाति नभःश्रियं परां**
**न रम्यमाहार्यमपेक्षते गुणम्॥4.23॥**

—सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः।

इत्युक्त्वा सपदि हितं प्रियं प्रियार्हे
धाम स्वं गतवति राजराजभृत्ये।
सोत्कण्ठं किमपिं पृथासुतः प्रदध्यौ
संधत्ते भृशमरतिं हि सद्वियोगः॥5.51॥

—सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः।

विगणय्य कारणमनेकगुणं
निजयाऽथवा कथितमल्पतया।
असदप्यदः सहितुमर्हसि नः
क्व वनेचराः क्व निपुणा यतयः॥6.37॥

—सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः।

अधिगम्य गुह्यकगणादिति तन्मनसः प्रियं प्रियसुतस्य तपः।
निजुगोप हर्षमुदितं मघवा नयवर्मगाः प्रभवतां हि धियः॥6.38॥

—सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः।

तदुपेत्य विघ्नयत तस्य तपः कृतिभिः कलासु सहिताः सचिवैः।
हृतवीतरागमनसां ननु वः सुखसङ्गिनं प्रति सुखाऽवजितिः॥6.43॥

—सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः।

अविमृष्यमेतदभिलष्यति स
द्विषतां वधेन विषयाभिरतिम्।
भववीतये न हि तथा स विधिः
क्व शरासनं क्व च विमुक्तिपथः॥6.44॥

—सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः।

पृथुधाम्नि तत्र परिबोधि च मा
भवतीभिरन्यमुनिवद्विकृतिः।
स्वयशांसि विक्रमवतामवतां न
वधूष्वघानि विमृशन्ति धियः॥6.45॥

—सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः।

तप्तानामुपदधिरे विषाणभिन्नाः
प्रह्लादं सुरकरिणां घनाः क्षरन्तः।

**युक्तानां खलु महतां परोपकारे**
**कल्याणी भवति रुजत्स्वपि प्रवृत्तिः॥ 7.13॥**

—सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः।

**प्रत्यार्द्रीकृततिलकास्तुषारपातैः**
**प्रह्लादं शमितपरिश्रमा दिशन्तः।**
**कान्तानां बहुमतिमाययुः पयोदा**
**नाल्पीयान् बहु सुकृतं हिनस्ति दोषः॥ 7.15॥**

—सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः।

**घनानि कामं कुसुमानि बिभ्रतः करप्रचेयान्यपहाय शाखिनः।**
**पुरोऽभिसस्रे सुरसुन्दरीजनैर्यथोत्तरेच्छा हि गुणेषु कामिनः॥ 8.4॥**

—सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः।

**ओजसापि खलु नूनमनूनं नासहायमुपायाति जयश्रीः।**
**यद्विभुः शशिमयूखसखः सन्माददे विजयि चापमनङ्गः॥9.33॥**

—विशेषेण सामान्यस्य समर्थनरूपोऽर्थान्तरन्यासः।

**न स्रजो रुरुचिरे रमणीभ्यश्चन्दनानि विरहे मदिरा वा।**
**साधनेषु हि रतेरुपधत्ते रम्यतां प्रियसमागम एव॥9.35॥**

—वैधर्म्येण कारणेन कार्यकारणरूपोऽर्थान्तरन्यासः।

**आदृता नखपदैः परिरम्भाश्चुम्बितानि घनदन्तनिपातैः।**
**सौकुमार्यगुणसंभृतकीर्तिर्वाम एव सुरतेष्वपि कामः॥9.49॥**

—सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः।

**प्राप्यते गुणवतापि गुणानां व्यक्तमाश्रयवशेन विशेषः।**
**तत्तथा हि दयिताननदत्तं व्यानशे मधु रसातिशयेन॥9.58॥**

—विशेषेण सामान्यार्थसमर्थनरूपोऽर्थान्तरन्यासः।

**बद्धकोपविकृतीरपि रामाश्चारुताभिमततामुपनिन्ये।**
**वश्यतां मधुमदो दयितानामात्मवर्गहितमिच्छति सर्वः॥9.64॥**

—सामान्येन विशेषस्य समर्थनरूपोऽर्थान्तरन्यासः।

समदशिखिरुतानि हंसनादैः
कुमुदवनानि कदम्बपुष्पवृष्ट्या।
श्रियमतिशयिनीं समेत्य जग्मुर्गुण-
महतां महते गुणाय योगः॥10.25॥

—सामान्येन विशेषस्य समर्थनरूपोऽर्थान्तरन्यासः।

प्रभवति न तदा परो विजेतुं
भवति जितेन्द्रियता यदात्मरक्षा।
अवजितभुवनस्तथा हि लेभे
सिततुरगे विजयं न पुष्पमासः॥10.35॥

—विशेषेण सामान्यार्थसमर्थनरूपोऽर्थान्तरन्यासः।

बलवदपि बलं मिथोविरोधि
प्रभवति नैव विपक्षनिर्जयाय।
भुवनपरिभवो न यत्तदानीं
तमृतुगुणः क्षणमुन्मनीचकारः॥10.37॥

—विशेषेण सामान्यार्थसमर्थनरूपोऽर्थान्तरन्यासः।

करुणमभिहितं त्रपा निरस्ता
तदभिमुखं च विमुक्तमश्रु ताभिः।
प्रकुपितमभिसारणेऽनुनेतुं
प्रियमियती ह्यबलाजनस्य भूमिः॥10.58॥

—सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः।

रुचिकरमपि नार्थवद् बभूव
स्तिमितसमाधिशुचौ पृथातनूजे।
ज्वलयति महतां मनांस्यमर्षे न
हि लभतेऽवसरं सुखाभिलाषः॥10.62॥

—सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः।

धार्तराष्ट्रैः सह प्रीतिर्वैरमस्मास्वसूयत।
असन्मैत्री हि दोषाय कूलच्छायेव सेविता॥11.55॥

—उपमाप्राणितोऽर्थान्तरन्यासः।

कथं वादीयतामर्वाङ्मुनिता धर्मरोधिनी।
आश्रमानुक्रमः पूर्वैः स्मर्यते न व्यतिक्रमः॥11.76॥

—सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः।

स तदोजसा विजितसारम-
मरदितिजोपसंहितम्।
विश्वमिदमपिदधाति पुरा
किमिवास्ति यन्न तपसामदुष्करम्॥12.29॥

—सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः।

दनुजः स्विदयं क्षपाचारो वा
वनजे नेति बलं बतास्ति सत्त्वे।
अभिभूय तथा हि मेघनीलः
सकलं कम्पयतीव शैलराजिम्॥13.8॥

—सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः।

सज्जनोऽसि विजहीहि चापलं सर्वदा क इव वा सहिष्यते।
वारिधीनिव युगान्तवायवः क्षोभयन्त्यनिभृता गुरूनपि॥13.66॥

—उपमानुप्राणितोऽर्थान्तरन्यासः।

ततः किरातस्य वचोभिरुद्धतैः
पराहता शैल इवार्णवाम्बुभिः।
जहौ न धैर्यं कुपितोऽपि पाण्डवः
सुदुर्ग्रहान्तःकरुणा हि साधवः॥14.1॥

—सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः।

यदि प्रमाणीकृतमार्यचेष्टितं किमित्यदोषेण तिरस्कृता वयम्।
अयातपूर्वा परिवादगोचरं सतां हि वाणी गुणमेव भाषते॥14.11॥

—सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः।

वयं क्व वर्णाश्रमरक्षणोचिताः
क्व जातिहीना मृगजीवितच्छिदः।

**सहापकृष्टैर्महतां न सङ्गतं**
**भवन्ति गोमायुसखा न दन्तिनः।।14.22।।**

–विशेषेण सामान्यार्थसमर्थनरूपोऽर्थान्तरन्यासः।

**उपैत्यनन्तद्युतिरप्यसंशयं**
**विभिन्नमूलोऽनुदयाय संक्षयम्।**
**तथा हि तोयौघविभिन्नसंहतिः**
**स हव्यवाहः प्रययौ पराभवम्।।16.61।।**

–विशेषेण सामान्यार्थसमर्थनरूपोऽर्थान्तरन्यासः।

# किरातार्जुनीयम की संवाद शैली

डॉ. कल्पना जैन

किसी एक द्वारा प्रतिपादित सिद्धान्त यदि अन्य किसी द्वारा उसी आशय से प्रतिपादित किया जाता है उसे संवाद कहा जाता है। सम्प्रति हिन्दी में संवाद शब्द उत्तर-प्रस्तुत या कथोपकन की दृष्टि से प्रयुक्त होती है। प्रस्तुत आलेख में संवाद शब्द इसी नूतन अर्थ में प्रयुक्त है।

काव्यों में संवादात्मकता का होना काव्य-सौष्ठव की दृष्टि से नितान्त आवश्यक है। जिस प्रकार व्यावहारिक जीवन में मनुष्य की बातचीत करने की प्रणाली उसके चरित्र का मापदण्ड बन जाती है, उसी प्रकार कथा के पात्रों के कथोपकथन का भी प्रभाव उनके चरित्र एवं अन्य क्रियाकलापों पर पड़ता है। मनुष्य की बाह्य आकृति एवं साज सज्जा केवल इतना ही बतला सकती है कि अमुक व्यक्ति ग़रीब या अमीर है, किन्तु उसके मनोभावों की जानकारी उसके वार्तालाप से ही होती है। किसी व्यक्ति की कर्मण्यता, अकमर्ण्यता, उदारता, त्याग, साधुता, दुष्टता, दया, ममता, प्रेम आदि वृत्तियों और भावनाओं की यथार्थ जानकारी संभाषण के द्वारा ही संभव है।

काव्यों में अनेक वर्ग के पात्रों का समावेश होता है और उन पात्रों के कथोपकथन में उनकी वर्गगत विशेषताओं को दिखलाने के लिए जब तक कवि का ध्यान नहीं रहेगा, तब तक उसके द्वारा सृष्ट पात्रों में पात्रोचित जीवन का विन्यास नहीं होगा।

संवाद के माध्यम से पात्र का व्यक्तित्व अनावृत रूप में पाठक के सामने उपस्थित होता है। अतः वह अन्य वर्णनों की अपेक्षा अधिक आवर्जक और प्रभावकारी होता है। इसी में प्रायः सूक्तियों को सन्निवेश भी रहता है। जो पाठक को प्रेरणा देता है। अतः महाकाव्य में संवाद की योजना श्लाघ्य होती है। जिसमें महाकवि भारवि अत्यन्त सफल है।

भारवि की चिरकीर्ति उपार्जित करनेवाली एकमात्र रचना अष्टादश सर्गात्मक महाकाव्य 'किरातार्जुनीयम्' जिनकी विद्वानों में बृहत्त्रयी में गणना की है, विदग्ध महाकाव्यों में परिगणित होती है। महाकवि भारवि ने संवादों का विन्यास बड़ी खूबी के साथ किया है। संवाद रोचक है। कवि ने स्वयं ही संवादशैली को द्वितीय सर्ग में युधिषिठर के मुख से स्पष्ट करा दिया है–

**स्फुटता न पदैरपाकृता न च न स्वीकृतमर्थगौरवम्।**
**रचिता पृथगर्थता गिरां न च सामर्थ्यमपोहितं क्वचित्।।**[1]

कथा का प्रभाववर्ण वर्णन संवादों के द्वारा ही गतिमान है। प्रथम सर्ग में वनेचर गुप्तचर के वचनों को देखिए–

**स किंसखा साधु न शास्ति योऽधिपं**
**हितान्न यः संशृणुते स किंप्रभुः।**
**सदानुकूलेषु हि कुर्वते रतिं**
**नृपेष्वमात्येषु च सर्वसम्पदः।।**[2]

अतः अमात्यादि को कटुसत्य भी कहना ही चाहिए और राजा को भी उसे सुनना ही चाहिए। इस कटु सत्य के कथन के अनन्तर कवि आमात्य के मुख से विनय भी प्रकट करते हैं।

**निसर्गदुर्बोधमबोधविक्लवाः**
**क्व भूपतीनां चरितं क्व जन्तवः।**[3]

इसी प्रकार 1/10 वें श्लोक में वनेचर के मुख से कवि दुर्योधन के चातुर्यपूर्ण व्यवहार एवं उसके दिखावटीपन को अभिव्यक्त करता है। समस्त समाचार को प्रकट कर वह युधिष्ठिर को शीघ्र ही प्रतीकार करने को कहता है।

---

1. किराता. 2.27
2. किराता. 1.5
3. किराता. 1.6

**तदाशु कर्तु व्ययि जिघ्रमुहाते**
**विधीयता तत्र विधेयमुत्तरम्।**
**परप्रणीतानि वचांसि चिन्वतां**
**प्रवृत्तिसारा खलु मादृशां गिरः॥**

यहाँ यह बात विशेष रूप से हृदयंगम करनी चाहिए कि वनेचर किरात अपनी पदमर्यादा को सावधाानी के साथ जानता है। उसके भाषण से उसमें ज्ञानगरिमा होने की बात स्वतः सिद्ध है फिर भी अपनी पदमर्यादा को ध्यान में रखते हुए प्रतिक्रिया के रूप का निर्धारण करने के लिए वह कोई परामर्श नहीं देता।

जब यह समाचार युधिष्ठिर द्रौपदी व अनुजों को देते हैं, तब शत्रु की उन्नति का समाचार सुनकर द्रौपदी के मन में प्रतिशोध की भावना भड़क उठती है तथा वह युधिष्ठिर को उकसाती हुई कहती है–

**भवादृशेषु प्रमदाजनोदितं**
**भवत्यधिक्षेप इवानुशासनम्।**
**तथापि वक्तुं व्यवसाययन्ति मां**
**निरस्तनारीसमया दुराधयः॥**

द्रौपदी द्वारा कठोर भाषण उसके मनस्विनी होने का परिचायक है। स्त्री प्रेरकशक्ति है। स्त्री में मनस्विता का अभाव होने पर वह अपमान का बदला लेने की प्रेरणा देने में और कष्ट सहने में असमर्थ होती है। मनस्विता गुण है। वह अवसर को पहचानती है। निरन्तर कठोर भाषण करना उसका स्वभाव नहीं है।

द्रौपदी के मन में – युधिष्ठिर द्वारा जुए के दांव पर अपने भाइयों को और अन्ततोगत्वा द्रौपदी को भी लगाना बहुत खल रहा है। इस हृदयगत शल्य की अभिव्यक्ति कितनी कुशलता से की गई है, अपनी मर्यादाओं की रक्षा उसके द्वारा कितनी निपुणता एवं सावधानी से

---

1. किराता., 1.25
2. किराता., 1.28

की गयी है, वाणी में कैसी मार्मिकता है। 'धनुर्विधानिपणु' जितनी कुशलता से लक्ष्यवेध करता है, उससे भी कहीं अधिक निपुणता से यहाँ द्रौपदी के (युधिष्ठिर के मन में प्रति हिंसा के भाव जागृत करने के लिए प्रयुक्त वाग्बाण भी कैसे लक्ष्यवेध कर रहे हैं) देखने जैसा है–

**गुणानुरक्तामनुरक्तसाधनः**
**कुलाभिमानी कुलजां नराधिपः।**
**परैस्त्वदन्यः क इवापहारयेन्**
**मनोरमामात्मवधूमिव श्रियम्।।**[1]

द्रौपदी के संवाद में कैसा तर्कशुद्ध उत्कृष्ट कोटि का क्रम हैं भावावेश में भी वह कहीं अवाच्य अथ्वा अव्यवहार्य बातों को नहीं कहती। उसके संवाद ओज गुण से ओत-प्रोत है। उसकी वाक्धारा प्रशंसनीय है। राजा युधिष्ठिर के मतपरिवर्तनार्थ द्रौपदी के द्वारा अपने भाषण में दी जाने वाली दलीलों को देखिए–

**पुरः सरां घामवतां यशोधनाः**
**सुदुःसहं प्राप्य निकारमीदृशम्।**
**भवादृशाश्चेदधिकुर्वत रतिं**
**निराश्रया हन्त हता मनस्विता।।**[2]

आप शत्रु का प्रतीकार करें, आपको सफलता मिलेगी इस रूप में आशीर्वादात्मक स्वकथन का उपसंहार करती हुई द्रौपदी कहती हैं–

**विधिसमयनियोगात् दीप्तिसंहारजिह्म**
**शिथिलवसुमगाधे मग्नमापत्पयोधौ।**
**रिपुतिमिरमुदस्योदीयमानं दिनादौ**
**दिनकृतामिव लक्ष्मीस्त्वां सभभ्येतु भूयः।।**[3]

---

1. किराता., 1.31
2. किराता., 1.43
3. किराता., 1.46

इस प्रकार अपने मनोनुकूल द्रौपदी के वचन सुनकर भीम ने युक्तियुक्त वचन युधिष्ठिर से कहा–

**यदवोचत वीक्ष्य मानिनी परितः स्नेहमयेन चक्षुषां।**
**अपि वागधिपस्य दुर्वचं वचनं तद्विदधीत विस्मयम्।।[1]**

चूकिं युधिष्ठिर धर्मराज है यह भी कवि को स्थापित करना है अतः वह युधिष्ठिर के व्यक्तित्व को उभारते हुए कहते हैं–

**सहसा विदधीत न क्रियामविवेकः परमापदां पदम्।**
**वृणते हि विमृश्यकारिणं गुणलुब्धाः स्वयमेव सम्पदः।।[2]**

पञ्चम सर्ग में तपस्या के लिए उद्यत अर्जुन को शत्रुओं के प्रति उद्दीप्त करती हुई द्रौपदी कहती है कि– मानियों की मानहानि प्राणहानि के समान होती है। आगे के समस्त सर्गो में एक सा अर्थगौरव नजर आता है। एवं प्रत्येक सर्ग को पढ़ने के पश्चात् अगले सर्ग को पढ़ने की उत्सुकता बढ़ जाती है। यही एक कवि के सफल काव्य की पराकाष्ठा है।

इस प्रकार हम देखते हैं कि कवि ने जो प्रतिज्ञा द्वितीय सर्ग में की है उसका अक्षरशः पालन भी किया है। उक्ति– प्रत्युक्ति, पूर्व पक्ष–उत्तरपक्ष तथा अपना पक्ष समर्थन करने के लिए प्रत्युक्त युक्तियाँ, राजनैतिक दूरदर्शिता आदि कवि भी प्रतिभा के सुस्पष्ट परिचायक है। शाश्वत तथ्य से ओत–प्रोत सूक्तियों का बाहुल्य है। संवाद प्रभावकारी और स्वाभाविक है।

भारवि की भाषा सहज एवं सुबोध है किन्तु अर्थगौरव के स्तर पर वह अत्यंत महत्वपूर्ण इसलिए है कि वह राजनीति के लिए पूर्ण कूटनीतिक भाषा है। भारवि की संवाद शैली निश्चित रूप से वैदिक संवाद सूक्तों से प्रभावित है। संवाद शैली के माध्यम से महाकाव्य के कथानक में गतिमयता और ओजस्विता बढ़ती है इस संवाद शैली के

1. किराता., 1.2
2. किराता., 2.30

माध्यम से महाकाव्य को कवि प्रभावकारी बनाने में सफल हुआ है।

**सन्दर्भ ग्रन्थ :-**

1. किरातार्जुनीयम्, व्याख्याता–पं. वेणीमाधव सदाशिवशास्त्री मुसलगांवकर, विनोद पुस्तक मन्दिर, आगरा

2. किरातार्जुनीयम् – व्याख्याकार- बद्रीनारायणमिश्र, चौखम्भा सुरभारती प्रकाशन, वाराणसी

3. Kiratarjuniyam of Bharavi : Cantas 1-111 (Tevct Eng. Tr.s Introd) Ed. M.R. Kale 120 (c), 60 (P), Motilal Banarsidas

4. The Great Epic of India : Character and Origin of the Mahabharata E.Washburn Hopkin 225 [0995-5] Publisher Motilal Banarsidas.

5. Elements of Poetry in the Mahabharat : Ramkaran Sharma 295. Motilal Banarsi Das, Delhi

6. History of Sanskrit Poetic P.V. Kane Motilal Banarsi Das

# किरातार्जुनीय में व्यभिचारि भावों का विन्यास

डॉ. राजेश बतरा

भारतीय साहित्य चिन्तन की परम्परा अत्यन्त प्राचीन है जिसके मूल उत्स वैदिक संहिताओं में सुरक्षित हैं। भारतीय काव्यशास्त्र का इतिहास भारतीय साहित्य चिन्तन का विकसित रूप है जिसमें जीवन की शाश्वतभावधारा का उन्मेष हुआ है। इनमें संस्कृत काव्यशास्त्र की विभिन्न सरणियों का प्राक् रूप वैदिक वाङमय के अतिरिक्त रामायण और महाभारत पर आधारित महाकाव्यों में दृष्टिगोचर होता है।

महाकाव्यों के सभी लक्षणों से सम्पन्न होने के कारण रामायण संस्कृत साहित्य के इतिहास का प्रथम महाकाव्य माना जाता है। परवर्ती महाकाव्य रामायण की भाषा, शैली, छन्द, पद्धति, काव्यशास्त्रीय परम्पराओं तथा पवित्र आदर्शों से प्रभावित हैं, किन्तु रामायण के पश्चात् परवर्ती महाकाव्यों की भाषा एवं शैली शनैः शनैः अधिक चमत्कारी एवं अलंकृत होने लगी। अश्वघोष द्वारा रचित बुद्धचरित एवं सौन्दरानन्द महाकाव्यों में महाकाव्यों का स्वरूप कुछ अधिक विकसित दृष्टिगोचर होता है।

तदुपरान्त महाकवि कालिदास के महाकाव्यों के महाकाव्य का स्वरूप अपने चर्मोत्कर्ष पर प्रतिष्ठित हुआ है। कुमारसम्भव और रघुवंश दोनों ही महाकाव्य कालिदास की अत्यन्त उत्कृष्ट रचनाएँ हैं, किन्तु कालिदास के पश्चात् रचित महाकाव्यों में मुख्यतः रचना वैचित्र्य, वैदग्ध्य, कल्पना, चमत्कार आदि का बाहुल्य ही दिखाई देता है।

इस प्रकार की वैदग्ध्यपूर्ण महाकाव्य शैली के जनक महाकवि भारवि ही हैं। भारवि के अनन्तर इस चमत्कारपूर्ण एवं अलंकृत शैली को माघ एवं श्रीहर्ष ने और भी अधिक प्रौढ़ बना दिया, तथापि

किरातार्जुनीय में काव्यशास्त्रीय ग्रन्थों में वर्णित महाकाव्य के लक्षणों का पालन सप्रयास न होकर स्वाभाविक रूप से हुआ है, यही भारवि के काव्य की विशिष्टता है।

कुमारसम्भव, रघुवंश, किरातार्जुनीय, शिशुपालवध तथा नैषधीयचरित संस्कृत साहित्य के इन पाँच महाकाव्यों में महाकवि भारवि कृत किरातार्जुनीय एक उत्कृष्ट एवं महत्वपूर्ण महाकाव्य माना गया है। महाकवि भारवि के अर्थगौरव ने संस्कृत महाकाव्यों के इतिहास को अपने चर्मोत्कर्ष से गौरान्वित किया है, इसी कारण वृहत्त्रयी की पावन त्रिवेणी में किरातार्जुनीय का स्थान अत्यन्त विशिष्ट बन पड़ा है।

किरातार्जुनीय के कथानक तथा अवन्तिसुन्दरी कथा के उल्लेख से स्पष्ट होता है कि महाकवि भारवि परम शैव थे। किरातार्जुनीय महाकाव्य का मूल आधार महर्षि व्यास द्वारा प्रणीत महाभारत[1] के वनपर्व तथा शिवपुराण[2] की एक प्रख्यात घटना पाशुपत अस्त्र की अर्जुन के द्वारा प्राप्ति है। इतनी छोटी सी घटना का कथानक लेकर उसे नवीन कोमल उपादानों से पुष्ट कर तथा अपनी मौलिकता का विशेष मनोभाव गर्भित कर सरस तथा भव्य महाकाव्य रूप प्रदान करना ही भारवि का कला वैशिष्ट्य है। भारवि की यह नई सामग्री विशेषतः सर्ग 6-10 काव्य के विकास में सर्वथा साधक सिद्ध हुई है। इसमें कौरवों पर विजय प्राप्त करने के लिए अर्जुन का हिमालय पर्वत पर जाना, वहाँ कठोर तपस्या करना, किरातवेशधारी शिव से युद्ध करना और बाद में तपस्या से सन्तुष्ट शिव से इच्छित अस्त्र (पाशुपतास्त्र) प्राप्त करने का वर्णन है। अपनी प्रतिभा से मूलकथा को विकसित कर भारवि ने इसे अठारह सर्गो में निबद्ध एक महाकाव्य के रूप में प्रस्तुत किया है।

### किरातार्जुनीय का काव्य वैशिष्टय :

भारवि का काव्य कोमल भावों की अभिव्यक्ति में क्षम होने तथा सरस होने के कारण सचमुच अद्वितीय है। महाकवि भारवि के

1. महाभारत वनपर्व, अध्याय 38-41
2 ज्ञानसंहिता अध्याय 63-67

काव्य की प्रमुख विशिष्टता है कि इसमें भाषा की उदात्तता, शब्दसौन्दर्य, अर्थगौरव, दीर्घ समासों का अभाव, कोमलकान्त पदावली, अक्लिष्ट शब्द प्रयोग, प्रतिपाद्य की स्पष्टता तथा माधुर्य, ओज, प्रसाद इन तीनों गुणों का सुन्दर समन्वय आदि गुण पाये जाते हैं। भारवि की भाषा भावों के पूर्णतया अनुकूल है जो यथावसर अर्थ को अभिव्यक्त करने में पूर्णतया समर्थ है। उनकी भाषा उनके व्याकरण ज्ञान तथा उनकी व्युत्पत्ति नीति. दर्शन तथा विभिन्न शास्त्रों से सम्बद्ध पाण्डित्य का भी बोध कराती है। स्वयं अपनी शैली के विषय में उनका कथन है–

**विविक्तवर्णाभरणा सुखश्रुतिः प्रसादयन्ती हृदयान्यपि द्विषाम्।**
**प्रवर्तते नाकृतपुण्यकर्मणां प्रसन्नगम्भीरपदा सरस्वती।।**[1]

भारवि ने अपने काव्य में अलंकारों एवं छन्दों का मधुर गुम्फन अत्यन्त स्वाभाविक अवसरानुकूल एवं सफलता पूर्वक किया है। वंशस्थ भारवि का प्रिय छन्द है। वैर्दभी रीति के सभी गुणों को अपनाने का प्रयास इन्होंने अपने काव्य में किया है किन्तु इनकी वैर्दभी रीति कालिदास की वैर्दभी रीति से भिन्न है। प्रकृति चित्रण का सौन्दर्य भी भारवि के काव्य में अपने चर्मोत्कर्ष को प्राप्त करता है। इन्होंने प्रकृति के आलम्बन तथा उद्दीपन दोनों पक्षों का अत्यन्त सुन्दर, रोचक तथा सजीव वर्णन किया है। चरित्र चित्रण में भी भारवि निपुण हैं तथा पाणिनीय व्याकरण के नियमों का पालन करने में तो ये कालिदास तथा माघ से भी आगे हैं। संस्कृत काव्य की एक नवीन शैली 'विचित्र माग' की सृष्टि करने के लिए भी भारवि का प्रबन्ध काव्यों के विकास में एक गौरवपूर्ण योगदान है। इनके काव्य में प्रौढ़ता, अनुभूति तथा भावुकता का समावेश है। कर्तव्य पालन में सन्निद्ध सैनिकों का एक चित्र अवलोकनीय है–

**महौजसो मानधना धनार्चिता धनुर्भृतः संयति लब्धकीर्तयः।**
**नसंहतास्तस्य नभिन्नवृत्तयः प्रियाणि वाञ्छन्त्यसुभिः समीहितुम्।।**[2]

---

1. किरातार्जुनीयम् – 14/3
2. तत्रैव – 1/19

विविध रसों का परिपाक एवं भावाभिव्यक्ति का चारुत्व भारवि के महाकाव्य का प्राणतत्व है अत: इसकी विशद चर्चा यहाँ प्रासंगिक है।

**किरातार्जुनीयम में रस भाव विवेचन :**

रस एवं भाव काव्य के मुख्य तत्त्व हैं। रस एवं भाव का मूल अर्थ मन, प्राण, आत्मा, सत्ता एवं पदार्थ इन अर्थों में ही निहित है। रस और भाव दोनों ही अस्वाद्य हैं तथा अभिव्यक्ति और अनुभूति विषयक हैं। आनन्दानुभूति ही काव्य का प्रमुख प्रयोजन है।

'रसो वै स:' रसं ह्येवायं लब्ध्वाऽऽनन्दी भवति। तैत्तिरीयोपनिषद् में रस को आनन्द कहा गया है अत: काव्य के आस्वादन को ब्रह्मानन्द सहोदर कहा गया है। क्योंकि परम् आनन्द की अभिव्यक्ति काव्य में रस के रूप में होती है आचार्य भरत ने रस को आस्वाद्य कहा है–

**भावाभिनयसम्बद्धान्स्थायिभावास्तथा बुधा:।**
**आस्वादयन्ति मनसा तस्मान्नाट्यरसा: स्मृता:।।**[1]

आचार्य मम्मट रस को प्रधान मानकर गुणों को उसका धर्म मानते हैं–

**ये रसस्याङ्गिनो धर्मा: शौर्यादय इवात्मन:।**
**उत्कर्षहेतवस्ते स्युरचलस्थितयो गुणा:।।**[2]

उनके अनुसार आत्मरूप रस के उपकारक होने पर ही अनुप्रास उपमा आदि अलंकार अपने अलंकारत्व को चरितार्थ करते हैं, अन्यथा नहीं–

**उपकुर्वन्ति तं सन्तं येऽङ्गद्वारेण जातुचित्।**
**हारादिवदलंकारास्तेऽनुप्रासोपमादय:।।**[3]

आचार्य विश्वनाथ ने रसात्मक वाक्य को ही काव्य माना है–

---

1. ना.शा – 6/33
2. का.प्र. – 8/66
3. का.प्र. – 8/2

**वाक्यं रसात्मकं काव्यं।**

आयुर्वेद शास्त्र में षड्विध रस बताए गए हैं– मधुर, अम्ल, लवण, कटु, तिक्त, कषाय। शरीर विज्ञान के अनुसार रस से ही रक्त का निर्माण होता है। किन्तु काव्य के सभी शृंगारादि रस काव्य के प्राण हैं। रस ही काव्य की आत्मा है। लौकिक रस में तो ये कटुता, अम्लता आदि गुण भी पाए जाते हैं किन्तु साहित्य का रस केवल आनन्दात्मक होने से लौकिक मधुरता से भी विलक्षण है।

भारवि के महाकाव्य में भी रस की अविरल धारा प्रवाहित हुई है। उनका काव्य अर्थगौरव और अलंकृति के साथ-साथ रस से पूर्णतः आप्लावित है। किरातार्जुनीय में वीर रस मुख्य रस के रूप में वर्णित हुआ है तथा शृंगार, रौद्र, वीभत्स और भयानक आदि रसों की भी रमणीय अभिव्यक्ति हुई है।

किरातार्जुनीय में महाकाव्य के सभी लक्षण घटित होते हैं। इस काव्य के धीरोदात्त नायक अर्जुन हैं। किरात वेशधारी भगवान शंकर प्रतिनायक हैं, उनके द्वारा प्रेषितदूत की उक्ति एवं शंकर का पराक्रम उद्दीपन विभाव है। नायक प्रतिनायक का प्रहार प्रतिहार अनुभाव तथा दूत के प्रत्युत्तर में गर्व, धृति, औत्सुक्य एवं क्षमा आदि व्यभिचारि भाव अभिव्यंजित हुए हैं। उत्साह स्थायीभाव है। देवांगनाओं की विविध चेष्टाओं से रतिभाव व्यक्त हुआ है। रतिभाव से पोषित शृङ्गाररस अर्जुन के अहार्य उत्साह का पोषक होने के कारण अङ्ग है। अर्जुन के द्वारा दिव्यास्त्र प्राप्ति ही इस महाकाव्य का फल है। संस्कृत महाकाव्यों के प्रसिद्ध टीकाकार मल्लिनाथ ने किरातार्जुनीय के प्रमुख तत्वों का अत्यन्त सुन्दर एवं संक्षिप्त वर्णन इस पद्य द्वारा प्रस्तुत किया है–

**नेता मध्यमपाण्डवो भगवतो नारायणस्यांशजः**
**तस्योर्त्षकृतेऽनुवर्ण्यचरितो दिव्यः किरातः पुनः।**
**शृङ्गारादिरसोऽङ्गमत्र विजयी वीरः प्रधानो रसः**
**शैलाद्यानि च वर्णितानि बहुशो दिव्यास्त्रलाभो फलम्।।**

विभावानुभाव आदि द्वारा पल्लवित पुष्पित उत्साह ही किरातार्जुनीय में वीर रस के रूप में सहृदय जन के लिए संवेद्य बन गया है। किरात और अर्जुन का युद्ध ही काव्य का प्रधान वर्ण्य विषय है और इसी आधार पर महाकाव्य का नामकरण किरातार्जुनीय किया गया है। संस्कृत साहित्य में वीर रस प्रधान तथा ओजपूर्ण यह अनुपम महाकाव्य है। द्वितीय सर्ग में भीम के ओजस्वितापूर्ण वचनों की सजीवता के कारण इस रस की सुन्दर अभिव्यक्ति हुई है–

**मदसिक्तमुखैर्मृगाधिपः करिभिर्वर्तयते स्वयंहतैः।**
**लघयन्खलु तेजसा जगन्न महानिच्छति भूतिमन्यतः॥**[1]

महाकवि भारवि ने उत्साह के विभिन्न रूपों की अपने काव्य में योजना की है। वीर रस की दृष्टि से किरातार्जुनीय के 15, 16, 17 तथा 18 सर्ग उत्कृष्टतम हैं। किरातार्जुनीय के अंग रसों में श्रृंगार रस की सुन्दर परिपुष्टि हुई है। अंग रसों में सम्भोग श्रृंगार की प्रमखुता है। महाकाव्य में इस रस का आलम्बन अप्सराएँ और गन्धर्व हैं तथा उद्दीपन रूप में षड् रितुएँ, सन्ध्या, अंधकार और चन्द्रोदय आदि वर्णित हैं। सर्ग 8–10 में श्रृंगार रस का अत्यन्त सुन्दर सन्निबंधन हुआ है। 12वें तथा 15 वें सर्ग में भयानक रस की सुन्दर परिपुष्टि हुई है। वीभत्स रस भारवि ने केवल आलम्बन के रूप में चित्रित किया है। 14वें सर्ग में अदभुत रस के प्रसंग प्राप्त होते हैं। अदभुत रस में अतिशयोक्ति की छटा का संचार स्वाभाविक रूप से हुआ है। इस प्रकार किरातार्जुनीय महाकाव्य में भारवि के रस परिपाक का चारुत्व हृदयाकर्षक है तथा इसमें सभी काव्यशास्त्रीय नियमों का पालन हुआ है।

**किरातार्जुनीय में भावोत्कर्ष :**

रसानन्द की उत्कर्षता ही इस महाकाव्य की प्रमुख साहित्यिक विशिष्टता है, किन्तु भाव बोध के अभाव में रस प्रतीति का अन्तर्दर्शन भी असम्भव है, अतः यहाँ किरातार्जुनीय में भावों की अभिव्यंजना भी साहित्यिकों के लिए शोध, जिज्ञासा एवं चिन्तन का विषय है। विभावानुभाव

---

1. किरातार्जुनीयम् – 2/18

– व्यभिचारि के संयोग से ही रस निष्पत्ति मानी गई है–

**विभावानुभावव्यभिचारीसंयोगाद्रसनिष्पत्तिः।[1]**

भरतमुनि ने भाव को विभिन्न प्रकार से परिभाषित किया है–

**विभावेनाहृतो योऽर्थो ह्यनुभावैस्तु गम्यते।**
**वागङ्गसत्त्वाभिनयैः स भाव इति संज्ञितः॥[2]**

**वागङ्गमुखरागेण सत्त्वेनाभिनयेन च।**
**कवरेन्तर्गतं भावं भावयन्भाव उच्यते॥[3]**

**नानाभिनयसम्बद्धान् भावयन्ति रसानिमान्।**
**यस्मात्तस्मादमी भावा विज्ञेया नाट्ययोक्तृभिः॥[4]**

रस भाव के परस्पर सम्बन्ध के विषय में भरतमुनि का कथन है–

**न रसो भावहीनोऽस्ति न भावो रसवर्जितः**
**परस्परकृतासिद्धिस्तयोरभिनये भवेत्।[5]**

और भी कहते हैं– जैसे विभिन्न व्यंजनों, औषधियों तथा द्रव्यों के संयोग से भोज्य रस की निष्पत्ति होती है उसी प्रकार विविध भावों के संयोग से स्थायी भाव ही रसरूपता को प्राप्त होता है। भाव ही विभाव आदि से अभिव्यक्त होकर रसरूपता को प्राप्त होता है। जहाँ भाव स्थायी भाव के रूप में आस्वाद्य होता है वहाँ व्यभिचारी भावों का निरपेक्षतया आस्वादन नहीं होता।

स्थायीभावों के आस्वादन से रसध्वनि होती है किन्तु जब व्यभिचारी भावों का स्वतंत्रतया आस्वादन होता है तो वहाँ भाव ध्वनि

---

1. नाट्यशास्त्र
2. नाट्यशास्त्र
3. तत्रैव
4. तत्रैव
5. तत्रैव

होती है। उद्रिक्त भाव के व्यंगत्व प्राधान्य होने से भाव ध्वनि मानी गई है। वह भाव ध्वनि रत्यादि स्थायी भावध्वनि हो या व्यभिचारी भाव ध्वनि प्राधान्य तो वहाँ भाव का ही है।

आचार्य आन्दवर्धन का प्रतीयमान अर्थ, मम्मट का सद्य परनिवृतये, आचार्य विश्वनाथ का रसात्मक वाक्य तथा पण्डितराज का रमणीयार्थ अथवा चमत्कारत्व द्वारा मूल रूप से भाव की व्यंगत्व प्राधान्यावस्था ही उद्बुद्ध हुई है, तथा इसी से काव्यानन्द अथवा रसानन्द की अभिव्यक्ति हुई है।

यहाँ भारवि कृत किरातार्जुनीय महाकाव्य में भाव ध्वनि का उत्कर्ष देखते ही बनता है। भारवि ने भावों की सुन्दर अभिव्यंजना से महाकाव्य में काव्यास्वाद-भावास्वाद की निर्मल धारा प्रवाहित की है। किरातार्जुनीय में कुछ ऐसे भी प्रसंग हैं जिनमें आलम्बन उद्दीपन अथवा संचारी भाव ही मात्र व्यंजित हुए हैं। अर्जुन और इन्द्र के वार्ता प्रसंग में उद्दीपन विभाव के परिपोष का उदाहरण इस प्रकार है-

**उपाधत्त सपत्नेषु कृष्णाया गुरुसन्निधौ।**
**भावमानयने सत्याःसत्यंकारमिवान्तकाः॥**[1]

मूकदानव और अर्जुन युद्ध प्रसंग में मूकदानव आलम्बन, अर्जुन के वधार्थ कृत प्रयास उद्दीपन, धनुष उठाना एवं अर्जुन का पद प्रक्षेप अनुभाव तथा गर्व क्रोध आदि संचारी भाव है तथा मूक दानव (शूकर) के मारने का उत्साह स्थायी भाव के रूप में व्यजित हुआ है। एक अन्य प्रसंग में किरात सेना के उत्साह भाव की सुन्दर व्यंजना हुई है-

**यथास्वामाशंसितविक्रमाः पुरा मुनिप्रभावक्षततेजसः परे।**
**ययुः क्षणादप्रतिपत्तिमूढतां महानुभावः प्रतिहन्ति पौरुषम्॥**[2]
**गम्भीररन्ध्रेषु भृशं महीभृतः प्रतिस्वनैरुन्नमितेन सानुषु।**
**धनुर्निनादेन जवादुपेयुषा विभिद्यमाना इव दध्वनुर्दिशः॥**[1]

---

1. किरातार्जुनीयम् – 11/50
2. तत्रैव – 14/43

**विधूनयन्ती गहनानि भूरुहां तिरोहितोपान्तनभोदिगन्तरा।**
**महीयसी वृष्टिरिवानिलेरिता रवं वितेने गणमार्गणावलिः॥[2]**

15वें सर्ग में अर्जुन के पौरुष से अभिभूत हो भागती हुई शिव सेना तथा कुमार कार्तिकेय का उसे समझाना आदि अर्जुन के उत्साह में सहायक ही हैं। नायकगत उत्साह के साथ प्रतिनायक का उत्साह भी उत्कृष्ट रूप से परिपुष्ट हुआ है। भगवान शंकर अर्जुन क्षिप्त बाण वर्षा को निरस्त कर अपने बाणों से सूर्य के मार्ग को रोक देते हैं।

सर्ग 8-10 में श्रृंगार रस से पोषित रति भाव व्यंजित हुआ है। रस का अनुचित रूप से वर्णन रसाभास कहा गया है। किरातार्जुनीय में रसाभास तथा भावाभास ध्वनि के प्रसंग 10वें सर्ग में प्राप्त होते हैं। देवांगनाओं के द्वारा अर्जुन विषयक रति से अनौचित्य का प्रर्वतन हुआ है अतः रसाभास है। देवांगनाओं के भ्रूविपेक्षादि मुग्धकारी व्यापार अर्जुन का अवलोकन कर जड़वत् हो जाते हैं, यहाँ देवांगनाओं की जड़ता अवस्था चित्रण से रसाभास अभिव्यंजित हुआ है–

**प्रकृतमनुससार नाभिनेयं प्रविकसदंगुलि पाणिपल्लवं वा।**
**प्रथमसुपहितं विलासि चक्षुःस्मिततुरगे न चचाल नर्तकीनाम्॥[3]**

किरातार्जुनीय में मुनि विषयक और देवविषयक दोनों रतिभावों की व्यंजना हुई है। तृतीय सर्ग में मर्हषि व्यास के आगमन पर युधिष्ठिर उनका स्वागत करते समय प्रशंसा करते हुए कहते हैं–

**अनाप्तपुण्योपचयैर्दुरापा फलस्य निर्धूतरजाः सवित्री।**
**तुल्या भवद्दर्शनसम्पदेषा वृष्टेर्दिवो वीतबलाहकायाः॥[4]**

अर्थात् आपकी यह दर्शन सम्पत्ति पुण्यपुंजहीन पुरुषों के लिए अप्राप्य है, यह रजोगुण रहित तथा कामनाओं की पूर्ति करने वाली है,

---

1. किरातार्जुनीयम् – 14/46
2. तत्रैव – 14/47
3. तत्रैव – 10/41
4. तत्रैव – 3/5

बिना बादलों की वर्षा के समान है। मुझ जैसे व्यक्ति को आपका दर्शन सम्भव नहीं था। पुनः वे वेदव्यास के दर्शन से स्वयं को कृतकृत्य मानते हैं। अतः यहाँ मुनि विषयक रतिभाव ध्वनि अभिव्यक्त हुई है, और भी–

**अद्य क्रियाः कामदुघाः क्रतूनां सत्याशिषः सम्प्रति भूमिदेवाः।**
**आसंसृतेरस्मि जगत्सु जातस्त्वय्यागते यद्बहुमानपात्रम्।।**[1]

**श्रियं विकर्षत्यपहन्त्यघानि श्रेयः परिस्नौति तनोति कीर्तिम्।**
**सन्दर्शनं लोकगुरोरमोघं तवात्मयोनेरिव किं न धत्ते।।**[2]

**च्योतन्मयूखेऽपि हिमद्युतौ मे ननिर्वृतं निर्वृतिमेति चक्षुः।**
**समुज्झितज्ञातिवियोगखेदं त्वत्सन्निधावुच्छ्वसतीव चेतः।।**[3]

अठारहवें सर्ग में अर्जुन के शौर्य एवं प्रताप से प्रसन्न होकर भगवान शिव उन्हें प्रत्यक्ष होकर हृदय से लगा लेते हैं और अर्जुन शिव को प्रणाम करते हैं–

**विस्मितः सपदि तेन कर्मणा कर्मणां क्षयकरः परः पुमान्।**
**क्षेप्तुकाममवनौ तमक्लमं निष्पिपेष परिरभ्य वक्षसा।।**[4]

**अथ हिमशुचिभस्मभूषितं शिरसि विराजितमिन्दुलेखया।**
**स्ववपुरतिमनोहरं हरं दधतमुदीक्ष्य ननाम पाण्डवः।।**[5]

पुनः अर्जुन भगवान शिव के विविध रूपों की स्तुति करते हैं–

**शरणं भवन्तमतिकारुणिकं भव भक्तिगस्यमधिगम्य जनाः।**
**जितमृत्यवोऽजित भवन्ति भये ससुरासुरम्य जगतः शरणम्।।**[6]

---

1. किरातार्जुनीयम् – 3/6
2. तत्रैव – 3/7
3. तत्रैव – 3/8
4. तत्रैव – 18/13
5. तत्रैव – 18/15
6. तत्रैव – 18/22

तरसा भुवनानि यो विर्भति ध्वनति ब्रह्म यतः परं पवित्रम्।
परितो दुरितानि यः पुनीते शिव तस्मै पवनात्मने नमस्ते।।[1]

भवतः स्मरतां सदासने जयिनि ब्रह्ममये निषेदुषाम्।
दहते भवबीजसन्तति शिखिनेऽनेकशिखाय ते नमः।।[2]

आबाधामरणभयार्चिषा चिराय प्लुष्टेभ्यो भव महता भवानलेन।
निर्वाणं समुपगमेन यच्छते ते बीजानां प्रभव नमोऽस्तु जीवनाय।।[3]

यः सर्वेषामावरीता वरीयान्सर्वैर्भावैर्नावृतोऽनादिनिष्ठः।
मार्गातीतायेन्द्रियाणां नमस्तेऽविज्ञेयाय व्योमरूपाय तस्मै।।[4]

अणीयसे विश्वविधारिणे नमो नमोऽन्तिकस्थाय नमो दवीयसे।
अतीत्य वाचां मनसां च गोचरं स्थिताय ते तत्पतये नमो नमः।।[5]

असंविदानस्य ममेश संविदां तितिक्षितुं दुश्चरितं त्वमर्हसि।
विरोध्य मोहात्पुनरभ्युपेयुषां गतिर्भवानेव दुरात्मनामपि।।[6]

आस्तिक्यशुद्धमवतः प्रियधर्मः!
धर्म धर्मात्मजस्य विहितागसि शत्रुवर्गे।
संप्राप्नुयां विजयमीश यया समुद्धया
तां भूतनाथ विभुतां वितराहवेषु[7]।।

इस स्तुति में देवविषयक रतिभाव की अभिव्यंजना का सौन्दर्य परिलक्षित होता है। द्वितीय सर्ग में मति भाव की सुन्दर अभिव्यंजना का उदाहरण द्रष्टव्य है–

---

1. किरातार्जुनीयम् – 18/37
2. तत्रैव– 18/38
3. तत्रैव – 18/39
4. तत्रैव – 18/40
5. तत्रैव – 18/41
6. तत्रैव – 18/42
7. तत्रैव – 18/43

**सहसा विदधीत न क्रियामविवेकः परमापदां पदम्।**
**वृणते हि विमृश्यकारिणं गुणलुब्धाः स्वयमेव सम्पदः।।**[1]

अर्थात बिना विचार किए हुए एकाएक कोई कार्य नहीं करना चाहिए। अविवेक आपत्तियों का कारण होता है। विचार पूर्वक कार्य करने वाले को सम्पत्तियाँ स्वयं वरण करती हैं।

शूकर को देखकर अर्जुन विभिन्न प्रकार के विर्तक करते हैं, वहाँ विर्तक भाव की अभिव्यक्ति हुई है–

**घनपोत्राविदीर्णशालमूलो निबिडस्कन्धनिकाषरुग्णवप्रः।**
**अयमेकचरोऽभिवर्तते मां समरायेव समाजुहूषमाणः।।**[2]

**इहवीतभयास्तपोनुभावाज्जहति व्यालमृगाः परेषु वृत्तिम्।**
**मयि तां सुतरामयं विधत्ते विकृतिः किं न भवेदियं नु माया।।**[3]

**अथवैष कृतज्ञयेव पूर्वं भृशमासेवितया रुषा न मुक्तः।**
**अवधूय विरोधिनीः किमारान्मृगजातीरभियाति मां जवेन।।**[4]

**न मृगः खलु कोऽप्ययं जिघांसुः स्खलति ह्यत्र तथा भृशं मनो मे।**
**विमलं कलुषीभवच्च चेतः कथयत्येव हितैषिणं रिपुं वा।।**[5]

**बहुशः कृतसत्कृतेर्विधातुं प्रियमिच्छन्नथवा सुयोधनस्य।**
**क्षुभितं वनगोचराभियोगाद्गणमाशिश्रियदाकुलं तिरश्चाम्।।**[6]

**अवलीढ़सनाभिरश्वसेनः प्रसभं खाण्डवजातवेदसा वा।**
**प्रतिकर्तुंमुपागतः समन्युः कृतमन्युर्यदिवा वृकोदरेण।।**[7]

---

1. किरातार्जुनीयम्– 2/30
2. तत्रैव – 13/3
3. तत्रैव – 13/4
4. तत्रैव – 13/5
5. तत्रैव – 13/6
6. तत्रैव – 13/10
7. तत्रैव – 13/11

देवांगनाओं द्वारा अर्जुन को मुग्ध न कर पाने पर उनमें दैन्य भाव व्यंजित हुआ है–

**स्वयं संराध्यैवं शतमखमखण्डेन तपसा**
**परोछित्त्या लभ्यामभिलषति लक्ष्मीं हरिसुते।**
**मनोभिःसोद्वेगैः प्रणयविहतिध्वस्तरुचयः**
**सगंर्धवा धाम त्रिदशवनिताः स्वंप्रतिययुः॥**[1]

महाकाव्य में गर्व भाव की सुन्दर अभिव्यक्ति भी द्रष्टव्य है–

**वयं क्व वर्णाश्रमरक्षणोचिताः क्व जातिहीना मृगजीवितच्छिदः।**
**सहापकृष्टैर्महतां न सङ्गतं भवन्ति गोमायुसखा न दन्तिनः॥**[2]

विभिन्न भावों के समान विषाद भाव की भी सुन्दर संयोजना किरातार्जुनीय में लक्षित होती है–

**भूरिप्रभावेण रणाभियोगात्प्रीतो विजिह्मश्च तदीयवृद्ध्या।**
**स्पष्टोऽप्यविस्पष्टवपुःप्रकाशः सर्पन्महाधूम इवाद्रिवह्निः॥**[3]

अर्थात् अर्जुन पराक्रमी शत्रु के साथ युद्ध करने में प्रसन्नता अनुभव करते हुए भी शत्रु के उत्कर्ष से क्षीण कान्ति हो रहे हैं। वे धूमावृत पर्वत अग्नि के समान प्रतीत हो रहे हैं।

इस प्रकार भारवि कृत किरातार्जुनीय महाकाव्य में भावोत्कर्ष अपने चरम को प्राप्त करता है। अपने भावों को अभिव्यंजित करने के लिए वे उतने ही शब्दों को चुनते हैं जितने उस कार्य के लिए आवश्यक होते हैं। कम से कम शब्दों में अधिक से अधिक अर्थों की अभिव्यक्ति ही उनके अर्थगौरव की विशिष्टता है। गुण, रीति, अलंकार आदि काव्य के बाह्य तत्व हैं, काव्य का मूल, अन्तरंग, प्राण तथा आत्मतत्व तो रस ही है जो भावाभिव्यंजना द्वारा ही आस्वाद्य होता है अतः किरातार्जुनीय के रस ध्वनि एवं भाव ध्वनि प्रसंगो का अध्ययन–चिन्तन 'वृहत्त्रयीकाव्य

---

1. किरातार्जुनीयम् – 10/63
2. तत्रैव – 14/22
3. तत्रैव – 17/02

परिशीलन' के सन्दर्भ में अत्यन्त उपादेय है। जिसे इस शोधपत्र के माध्यम से हमने विद्वत मण्डली के समक्ष रखा है। किरातार्जुनीय के टीकाकार मल्लिनाथ के अनुसार यह काव्य नारियल के फल की भाँति बाहर से क्लिष्ट तथा कठोर किन्तु भीतर से रसपूर्ण, रसपेशल एवं सारमय है। वस्तुतः भारवि का काव्य सर्वसाधारण जनों के लिए भी है किन्तु सहृदय ही इसके आह्लाद का आस्वादन कर सकते हैं। भारवि के काव्यत्व वैशिष्टय के संदर्भ में किसी आलोचक का यह पद्य कि–

**तावद् भा भारवेर्भाति यावन्माघस्य नोदयः।**
**उदिते नैषधे काव्ये क्वः माघःक्व च भारविः॥**

इस पद्य की व्याख्या के रूप में उत्तर पक्ष ही महिमामण्डित किया जाता है जबकि पूर्व पक्ष का मूल भावार्थ है कि महाकवि भारवि का काव्य अद्वितीय है जिसका प्रौढ़ चर्मोत्कर्ष माघ एवं श्रीहर्ष के काव्य के रूप में मिलता है जो कि भारवि का ही उन पर परवर्ती प्रभाव है। अतः इस पद्य द्वारा भी भारवि को काव्य सर्वोत्कर्ष सिद्ध होता है। वस्तुतः काव्यकौशल का वैशिष्टयपूर्ण रसास्वाद तो महाकवि कालिदास, माघ तथा हर्षादि कवियों में अवश्य ही प्राप्त होता है, किन्तु काव्यास्वाद का जो आह्लाद किरातार्जुनीयम् में मिलता है वह सहृदयों को अपनी ओर सहज ही आकर्षित कर लेता है। आचार्य विश्वनाथ ने इस रसास्वाद को ब्रह्मास्वादसहोदर कहा है–

**सत्वोद्रेकादखण्ड स्वप्रकाशानन्द चिन्मयः।**
**वेद्यान्तरस्पर्शशून्यो ब्रह्मास्वाद सहोदरः॥**

काव्यजन्य आस्वाद लौकिक रत्यादि भावों द्वारा अभिव्यक्त होने पर भी विलक्षण तो है ही योगियों की आध्यात्मिक अनूभूति से भी अधिक आह्लादकारी है। काव्यजन्य सत्व के उद्रेक को साहित्यिक आध्यात्मिकानुभूति से उत्कृष्ट ब्रह्मास्वादसहोदरानुभूति मानते हैं। यह अभिव्यक्ति भाव की व्यंग्यत्व प्राधान्य अभिव्यक्ति ही है। सभी सहृदयों को ब्रह्मास्वादसहोदरानुभूति का अनुभव करने के लिए किरातार्जुनीय महाकाव्य के भावोत्कर्ष का रसास्वादन अवश्य ही करना चाहिए।

# किरातार्जुनीयमहाकाव्ये वक्रोक्तिविचारः

शमशेरसिंहः

षड्काव्यशास्त्रीयसिद्धान्तेष्वन्यतमवक्रोक्तिसिद्धान्तस्यातिप्राचीनकालादेव प्रवृत्तिरित्यवलोक्यते संस्कृतवाङ्मये। भारतीयकाव्यशास्त्रे स्वप्रखरमेधया प्रकाशस्तम्भवक्रोक्तिसिद्धान्तस्य स्थापनस्य श्रेयः श्रीमद्राराजानककुन्तकायैव याति। संस्कृतवाङ्मयस्य प्रसिद्धग्रन्थेषूदाहरणानि समादाय कारिकावृत्त्युदाहरण-रूपेण रचितोऽयं ग्रन्थो 'वक्रोक्तिजीवितम्'। का पुनर्वक्रोक्तिरित्यत्रोच्यते- 'वक्रोक्तिरेववैदग्ध्यभङ्गीभणितिरुच्यते'।[1] अर्थात् कविकर्मकौशलेन शोभिता विचित्रोक्तिरेव वक्रोक्तिः। सर्वसाधारणजनानां कथनात् भिन्नं वैचित्र्यपूर्णं कथनम्। वक्रोक्तिसम्बन्धिनीं धारणां स्फुटीकर्तुं नैकपर्यायवाचिनः शब्दाः प्रयुक्ताः कुन्तकाचार्येण। तद्यथा-

क) वक्रोक्तिः प्रसिद्धाभिधानव्यतिरेकिणी विचित्रैवाभिधा।[2]

ख) वक्रशास्त्रादिप्रसिद्धशब्दार्थोपनिबन्धव्यतिरेकी।

ग) वक्रोक्तिः सकलालङ्कारसामान्यम्।

घ) वक्रतावक्रत्वविच्छित्तिः।

ङ) लोकातिक्रान्तगोचरवचः।

च) वक्रत्वं वक्रभावः प्रसिद्धप्रस्थानातिरेकिणा वैचित्र्येणोपनिषद्।

कुन्तकाचार्येण वक्रोक्तिसम्मतमेव काव्यलक्षणं समुपस्थापितम्-

---

1. व. जी. 1/10
2. व. जी. पृ. 48

**शब्दार्थौ सहितौ वक्रकविव्यापारशालिनि।**
**बन्धे व्यवस्थितौ काव्यं तद्विदाह्लादकारिणि।।**[3]

सर्वप्रथमं वक्रोक्तिशब्दस्य प्रयोगोऽथर्ववेदे 'कुटिलार्थे' कृतः। तद्यथा-**अयं यो वक्रो विपरुर्व्यङ्गो मुखानि वक्र वृजिना कृणोषि।**[4] राघवपाण्डवीयकारः 'कविराज' आत्मानं सुबन्धुं बाणञ्च वक्रोक्तिमार्गे निपुणन्नघोषयत्। यथा-

**सुबन्धुबाणभट्टश्च कविराज इति त्रयः।**
**वक्रोक्तिमार्गनिपुणाश्चतुर्थो विद्यते न वा।।**[5]

कुन्तकाचार्येण वक्रोक्तेः षड्भेदाः निरूपिताः ते च सन्ति-वर्णविन्यासवक्रता-पदपूर्वार्द्धवक्रता-पदपरार्द्धवक्रता-वाक्यवक्रता-प्रकरणवक्रता-प्रबन्धवक्रताश्चेति। तद्यथा-

**वर्णविन्यासवक्रत्वं पदपूर्वार्धवक्रता।**
**वक्रतायाः परोऽप्यस्ति प्रकारः प्रत्ययाश्रयः।।**

**वाक्यस्य वक्रभावोऽन्यो भिद्यते यः सहस्रधा।**
**यत्रालङ्कारवर्गोऽसौ सर्वोऽप्यन्तर्भविष्यति।।**

**वक्रभावः प्रकरणे प्रबन्धे वाऽस्ति यादृशः।**
**उच्यते सहजाहार्य-सौकुमार्य-मनोहरः।।**[6]

## किरातार्जुनीये वर्णविन्यासवक्रता

प्रबन्धस्य लघुतमरूपस्य नाम वर्ण अक्षरः वा। अत्र वर्णः व्यञ्जनस्य पर्यायत्वेन स्वीकृतः। अतः वर्णविन्यासवक्रता व्यञ्जनवक्रताया अपरं नाम। पूर्वाचार्यैः वर्णविन्यासवक्रतायै अनुप्रासस्य संज्ञा दत्ता।

---

3. व. जी. 1/107
4. अथर्व. 7/58/14
5. रा. पा. पृ. 20
6. व. जी. 1/19-21

**'एतदेव वर्णविन्यासवक्रत्वं चिरन्तनेष्वनुप्रास इति प्रसिद्धम्'**[7]

अतोऽनुप्रासस्य समस्तभेदाः, वृत्तयः, यमक-यमकभासादयश्च सम्पूर्णाः अन्तर्भूताः जायन्ते अत्र। कुन्तकाचार्येण प्रथमोन्मेषे वर्णविन्यास-वक्रतायाः षडुपभेदाः वर्णिताः।

**प्रथमभेदः** - यत्र एकवर्णस्य, वर्णद्वयस्य अथवा बहूनां वर्णानां स्वल्पान्तरे उपस्थापनेन विच्छित्तिरुत्पद्यते, तत्र प्रथमप्रकारवर्णविन्यासवक्रता। तद्यथा-

**एको द्वौ बहवो वर्णा बध्यमानाः पुनः पुनः।**
**स्वल्पान्तरास्त्रिया सोक्ता वर्णविन्यासवक्रता।।**[8]

**द्वितीयवर्णविन्यासवक्रता**

**वर्णान्तयोगिनः स्पर्शा द्विरुक्तास्त-ल-नादयः।**
**शिष्टाश्च रादिसंयुक्ताः प्रस्तुतौचित्यशोभिनः।।**[9]

इयञ्च त्रिविधा भवितुं शक्या। सवर्गान्तरस्पर्शवर्णप्रयोगेण, द्विरुक्त-त-ल-नादीनां वर्णानां प्रयोगेण, रादिसंयुक्तवर्णप्रयोगेण च। प्रथमद्विविध वर्णविन्यासवक्रतयोरेकमेवोदाहरणमत्र मया वर्णितमस्ति।

**द्विषन्निमित्ताः यदियं दशा ततः**
**समूलमुन्मूलयतीव मे मनः।**
**परैरपर्यासितवीर्यसम्पदां**
**परोऽप्युत्सव एव मानिनाम्।।**[10]

अत्र तन्नवर्णयोः द्विरुक्तत्वात् द्विरुक्तवर्णविन्यासवक्रता, 'वीर्यसम्पदाम्' इत्यत्र सवर्गान्तस्पर्शवर्णविन्यासवक्रता। द्वितीयपादे म-लवर्णयोः स्वल्पान्तरे प्रयोगात् द्विवर्णविन्यासवक्रता किमप्यपूर्वां विच्छित्तिमुत्पादयति।

---

7. व. जी. वृत्तिभा. 1/19
8. व. जी. 2/1
9. व. जी. 2/2
10. कि. 1/41

**तृतीयवर्णविन्यासवक्रता**

अत्र व्यवधानात् विनैव एकस्य वा एकाधिकव्यञ्जनानां विन्यासः चित्ताकर्षकसंघटनया संयुक्तो भवति। तद्यथा-

**क्वचिदव्यवधानेऽपि मनोहारि निबन्धना।**
**सा स्वराणां सारुप्यात् परां-परां पुष्णाति वक्रताम्।।[11]**

**उदाहरणम् -**

**दधतमाकरिभिः करिभिः क्षतैः**
**समवतारसमैरसमैस्तटैः।**
**विविधकामहिता महिताम्भसः**
**स्फुटसरोजवना जवना नदीः।।[12]**

अत्र करिभिः - करिभिः, महिता-महिता, जवना-जवना, समैः-समैः शब्दानां व्यवधानरहितवृत्त्या किमप्यपूर्वं वक्रत्वं विराजते।

अस्मिन्नेवोदाहरणे वर्णविन्यासवक्रतायाः चतुर्थः भेदः प्राप्यते, नैकव्यञ्जनानां व्यवधानरहितावृत्तित्वात्।

**वर्णविन्यासवक्रतायाः पञ्चमभेदः**

यमकालङ्काराश्रितो भवति। द्वितीयोन्मेषस्य कारिकाद्वये कुन्तकाचार्येण कथितं यत् समवर्णोपेतं परं भिन्नार्थद्योतकं, प्रसादगुणान्वितं, श्रुतिसुभगं, औचित्यपूर्णं, पद्यस्यादौ मध्येऽन्ते वा नियतस्थाने प्रयुक्तवात्, यमकाश्रितोऽयं वर्णविन्यासवक्रतायाः पञ्चमो भेदः। तद्यथा-

**समानवर्णमन्यार्थं प्रसादिश्रुतिपेशलम्।**
**औचित्ययुक्तमाद्यादि नियतस्थाने शोभियात्।।[13]**

महाकाव्यस्य पञ्चदशसर्गेऽस्याः वक्रतायाः नैकान्युदाहरणानि प्राप्तानि। एकमत्र दीयते-

11. व. जी. 2/3
12. कि. 5/7
13. व. 2/6

**दूनास्तेऽरिबलादूना निरेभा बहु मेनिरे।**
**भीताः शितशराभीताः शङ्करं तत्र शङ्करम्।।**[14]

अत्र शङ्करमित्यस्य शब्दस्य सुखकरं शिवञ्चार्थद्वयम् इति प्रयुक्तत्वात् पाद्यान्तयमकाश्रितवर्णविन्यासवक्रता काव्ये कामपि विच्छित्तिमुल्लसति।

## किरातार्जुनीये पदपूर्वार्द्धवक्रता

'सुबन्तस्य तिङन्तस्य पदस्य वा यत्पूर्वार्द्धं प्रतिपदिकस्य लक्षणं धातुलक्षणं वा तस्य वक्रता वक्रभावो विन्यासवैचित्र्यम्'।[15] अतः पदपूर्वार्द्धवक्रताया अभिप्रायो प्रातिपदिकस्य धातोश्च वक्रतया विद्यते। व्याकरणशास्त्रे भगवता पाणिनिना सुबन्तस्य तिङन्तस्य च वर्णसमुदायस्य पदत्वं स्वीकृतम्, तद्यथा-'सुप्तिङन्तं पदम्'[16] पदपूर्वार्द्धवक्रताया अपरं नाम प्रकृतिरपि अस्ति। पदपूर्वार्द्धवक्रतायाः भेदान् विवेचयता कुन्तकाचार्येण रूढिवैचित्र्यवक्रता-पर्यायवक्रतोपचारवक्रता- विशेषणवक्रता-संवृत्तिवक्रता-वृत्तिवक्रता- लिङ्गवक्रता-प्रत्ययवक्रता-भाववैचित्र्य-क्रियावैचित्र्य-वक्रताश्चेति संज्ञकाः दशभेदाः स्वीकृताः।

## प्रथमातावद्रुढिवैचित्र्यवक्रता

यत्र वाच्यार्थस्य सर्वातिशायीतिरस्कारमथवा प्रशंसां कर्तुमिच्छया रूढेरसंभाव्यधर्माध्यारोपगर्भता प्रतीयते, काप्यपूर्वसैन्दर्याधायकरूढिवैचित्र्यवक्रता सा। तद्यथा-

**रूढेरसंभाव्यधर्माध्यारोपगर्भता ।**
**सद्धर्मातिशयारोपगर्भत्वं वा प्रतीयते।।**

**लोकोत्तरतिरस्कारश्लाघ्योत्कर्षाभिधित्सया ।**
**वाच्यस्य सोच्यते कापि रूढिवैचित्र्यवक्रता।।**[17]

---

14. कि. 15/31
15. व. जी. वृत्ति, पृ. सं. 64
16. पा. अष्टा. 1/1/14
17. व. जी. 2/8-9

का पुनः रूढिः? अर्थविशेषे आरोहणमेव रूढिः, तद्यथा-'शब्दस्य नियतवृत्तिता- रूढिवैचित्र्यवक्रता वस्तुतः संज्ञा शब्दानामेव भवति। महाकाव्येऽस्मिन् रूढिवैचित्र्यवक्रतायाः बहून्युदाहरणानि सन्ति। उदाहरणमेकमत्र वर्ण्यते। **'क्रियासु युक्तैर्नृपः चारचक्षुषो न वञ्चनीया प्रभवोऽनुजीविभिः'**[18] अत्र 'नृप' शब्देन नॄन् पातीति नृपः अर्थात् प्रजानां त्राणमेव कार्यत्वात् राज्ञः प्रशंसावशात् रूढः। एवं प्रकारेण इयं रूढिवैचित्र्यवक्रता प्रतीयमानधर्मबहुल्यात् बहुप्रकारवती भवितुमर्हति, तच्च विज्ञैः स्वयमेव प्रेक्षणीयम्।

## पर्यायवक्रता

यद्यपि पर्यायशब्दप्रयोगेण निर्दिश्यमानवस्तुनः सामान्यपरिचय एव दातुं शक्यते, परं वस्तुनः विशिष्टपरिचयस्तु विशिष्टपर्यायप्रयोगेणैव भवितुमर्हति। कुन्तकाचार्येण पर्यायवक्रताया 'अभिधेयान्तरतमादायः' षड्विशेषाः द्वितीयोन्मेषे वर्णिताः। महाकाव्यस्य तृतीयोन्मेषे पर्यायवक्रताया अन्यतममुदाहरणमत्र दीयते-

**यया समासादितसाधनेन सुदुश्चरमाचारता तपस्याम्।**
**एते दुरापं समवाप्य वीर्यमुन्मूलितारः कपिकेतनेन॥**[19]

अत्र 'कपिकेतनेन' इति शब्दस्यार्थः 'अर्जुनः'। 'कपिर्हनुमान्केतनं चिह्नं यस्य तेन अर्जुनेन। अत्र अर्जुनस्य धनञ्जयः सव्यसाचिन्-पार्थेत्यादिषु पर्यायशब्देष्वुपस्थितेष्वपि अर्जुनाय 'कपिकेतनेन' इति शब्दप्रयुक्ते सति किमपि वैचित्र्यमुत्पद्यते।

## विशेषणवक्रता

पदपूर्वार्द्धवक्रतायाः परः भेदः विशेषणवक्रता। अत्र विशेषणस्य महात्म्यात् क्रियापदस्य कारकपदस्य वा या विच्छित्तिः (रमणीयता) समुपजायते सा विशेषणवक्रता। यथोक्तं कुन्तकाचार्येण -

---

18. कि. 1/4
19. कि. 3/22

**विशेषणस्य महात्म्यात् क्रियायाः कारकस्य वा।**
**यत्रोल्लसति लावण्यं सा विशेषणवक्रता।।**[20]

क्रियाकारकभेदाभ्यां द्विधेयं वक्रता। वर्ण्यमानवस्तुनः औचित्यानु-रूपत्वात् समस्तकाव्यस्य जीवितत्वेन परिगण्यते इयम्। महाकाव्येऽत्र विशेषणवक्रतायाः नैकान्युदाहरणानि दृष्टिपथमायान्ति। तेष्वेकमत्र वर्ण्यते-

**प्राप्तोऽभिमानव्यसनादसह्यं दन्तीव दन्तव्यसनाद्विकारम्।**
**द्विषत्प्रतापान्तरितोरुतेजः शरद्घनाकीर्ण इवादिरह्नः।।**[21]

अत्र 'विकारस्य' असह्यं विशेषणं, अह्नश्च 'शरद्घनविकीर्णविशेषणं काव्ये किमपि वैचित्र्यमुत्पादयति, अतः विशेषणवक्रता।

**संवृत्तिवक्रता**

संवृत्तेरभिप्रायः संवरणमाच्छादनं वा। काव्ये यत्र वैचित्र्योत्पादनस्य इच्छया किमपि, कथमपि, यदियमित्यदिभिः सर्वनामपदैर्निकृष्टवस्तुनः आच्छादनं क्रियते, तत्र संवृत्तिवक्रता। तद्यथा-

**यत्र संव्रियते वस्तु वैचित्र्यस्य विवक्षया।**
**सर्वनामादिभिः कश्चित् सोक्ता संवृत्तिवक्रता।।**[22]

महाकाव्यस्यास्य प्रथमसर्गे संवृत्तिवक्रताया उदाहरणमेकमत्र दीयते-

**'द्विषन्निमित्ताः यदियं दशा ततः समूलमुन्मूलयतीव मे मनः।।'**[23]

अत्र श्लोके कौरवैर्कृतापमानात् क्रुद्धो भूत्वा, युधिष्ठिरस्य क्रोध मुत्पादयन्ति, तस्य वनवासकालीनदशां वर्णयति, परं महाकविना 'यदियमिति' सर्वनामपदेन पाण्डवानां निकृष्टदशायाः संवरणमाच्छादनं वा क्रियते, अतोऽत्र संवृत्तिवक्रता। अस्मिन्नेव श्लोके पदमध्यान्तर्भूतप्रत्ययवक्रताय उदाहरणमपि

---

20. व. जी. 2/15
21. कि. 3/45
22. व. जी. 2/16
23. कि. 1/41

वर्तते। 'द्विषन्निमित्ताः' इत्यत्र द्वयोर्पदयोर्मध्ये 'शतृ' प्रत्ययस्य प्रयोगेण पदमध्यवृत्तिरन्यां काचिदपूर्ववक्रतामुत्पादयति।

## आगमवक्रता

'कुन्तकाचार्येण आगमवक्रतान्तर्गतं मुम्ण्वुल्प्रत्यययोरुदाहरणे प्रस्तूते। परमत्र तुक्-णुट्-नुट्-ङुट्प्रत्यययानामपि ग्रहणं करणीयम्। किरातार्जुनीय-महाकाव्यस्य तृतीयसर्गस्य '**असंशयालेचित........**' इति श्लोके प्रयुक्त विभज्यमानपदे 'मुम्' प्रत्ययस्य **आगमत्वात्** आगमवैचित्र्यवक्रता। पदपूर्वार्द्ध-वक्रतायाः वृत्तिवैचित्र्यवक्रतादीनामपि उदाहरणानि महाकाव्येऽत्र सन्ति, तानि समयाभावशात् न वर्ण्यन्ते।

## किरातार्जुनीये परार्द्धवक्रता

पदानां परार्द्धभागेन अथवा प्रत्ययानां वैचित्र्यपूर्णप्रयोगेण या वक्रता समुपजायते सा पदपरार्द्धवक्रता नाम्ना ज्ञायते। पदपरार्द्धवक्रतायाः काल-कारक-वचन-पुरुषोपग्रह-प्रत्ययोपसर्ग-निपाता इमे अष्टौ प्रभेदाः सन्ति।

## तत्राद्यकालवैचित्र्यवक्रता

आचार्यनगेन्द्रस्य मतानुसारं यत्र विच्छित्तिः कालविशेषस्य प्रयोगे आक्षिप्ता भवति सा कालवैचित्र्यवक्रता।[24] कुन्तकाचार्यस्याभिमतानुसारं यत्र औचित्यस्यात्यन्तरतम्येन कालः कामपि रमणीयतां जनयति सा कालवैचित्र्यवक्रता। यथा-

**औचित्यस्यान्तरतम्येन समयो रमणीयताम्।**
**याति यत्र भवत्येषा कालवैचित्र्यवक्रता।।**[25]

महाकाव्येऽत्र कालवैचित्र्यवक्रतायाः बहून्युदाहरणानि दरीदृश्यन्ते। एकमत्र दीयते-

---

24. भाषाशास्त्र की भूमिका, डॉ. नगेन्द्र
25. व. जी. 2/26

**सः किं सखा साधु न शास्ति योऽधिपं**
**हितान्न यः संश्रृणुते स किं प्रभुः।**
**सदानुकूलेषु हि कुर्वते रतिं**
**नृपेष्वमात्येषु च सर्वसम्पदः॥[26]**

अत्र 'शास्ति' 'संश्रृणुते' इत्यनयोः लट्लकारप्रयोगः न वर्तमानकालार्थे किञ्च भूत- वर्तमानभावात्मके सर्वकालार्थे एव। अत अत्र कालवैचित्र्यवक्रता।

## निपातवक्रता

निपातपदानां सुन्दरप्रयोगेण यत्र किमपि वैचित्र्यमुल्लसति, तत्र निपातवक्रता। तद्यथा-

**स्फुटता न पदैरपाकृता न च न स्वीकृतमर्थगौरवम्।**
**रचिता पृथगर्थता गिरां न च सामर्थ्यमपोहितं क्वचित्॥[27]**

अत्र च, न, क्वचित् इति निपातपदानां प्रयोगं केवलं पादपूत्यर्थमेव न कृतमपितु एतेषां स्थापनेन कथने किमपि वैचित्र्यमेव आगच्छति। एवं कारकवचनादीनामपि उदाहरणानि सन्त्यत्र कालाभाववशात् वर्णयितुं न पारयामः।

## किरातार्जुनीये वाक्यवक्रता, वस्तुवक्रता पदार्थवक्रता वा

ग्रन्थस्य प्रथमोन्मेषे वाक्यवक्रतायाः सामान्यपरिचयं दत्त्वा, तृतीयोन्मेषे विशद्विवेचनं कृतम्। वाक्यस्य वक्रभावेन सहस्राधिकाः भेदाः भवितुं शक्यन्ते, व्यक्तिभेदात्। यतोहि प्रत्येककवेः वाक्यवर्णनस्य रीतिः भिन्ना भवति। सर्वेषामलङ्कारणामन्तर्भावोऽत्र जायते। वाक्यवक्रतायाः सहजाऽहार्या च भेदद्वयम्। सहजसिद्धवस्तुनि स्वसूक्ष्मप्रतिभया रमणीयतामादधाति कविः। कुन्तकाचार्येण प्रेयस्-उदात्त-समाहित-प्रतिवस्तूपमादीनामलङ्काराणां खण्डनं विधाय रूपक-अप्रस्तुतप्रशंसा-अर्थान्तरन्यासादयोऽलङ्कारा अत्र उपन्यस्ताः।

---

26. कि. 1/5
27. कि. 2/27

महाकाव्येऽत्र महाकविना सर्वविधार्थालङ्काराणां प्रयोगविज्ञानमत्र प्रयुक्तम्। अर्थान्तरन्यासालङ्कारस्योदाहरणमत्र दीयते। तद्यथा-

**सहसा विदधीत न क्रियामविवेकः परमापदां पदम्।**
**वृणुते हि विमृश्यकारिणं गुणलुब्धाः स्वयमेव सम्पदः।।**[28]

अत्र सहसाविधाननिषेधविमृश्यकारित्वरूपकारणस्य सुविचार्यकार्य-करणेन समर्थनाद् अर्थान्तरन्यासालङ्कारो। एवमलङ्कारमूलायाः सहजाऽहार्या-रूपात्मकवाक्यवक्रतायाः नैकान्युदाहरणानि सन्ति, परं नाऽत्र वर्णयितुं शक्नुमः।

## किरातार्जुनीये प्रकरणवक्रता

प्रकरणस्याभिप्रायो वर्तते प्रबन्धस्यैकदेशानुसारि वर्णनम्। समग्रदृश्यश्रव्यग्रन्थस्य नाम प्रबन्धं, तत्प्रबन्धान्तर्गताऽगतस्य प्रसङ्गविशेषस्य नाम प्रकरणम्। यत्र कस्यापि प्रकरणविशेषस्योत्कर्षेण समस्तप्रबन्धं चमत्कृतं जायते तत्र प्रकरणवक्रता। कुन्तकाचार्येण प्रकरणवक्रतायाः नवभेदाः स्वीकृताः। तत्र प्रथमो भेदः **पात्रप्रवृत्तिवक्रता** अर्थात् पात्राणां विषये मौलिक-भावपूर्णस्थितेरुद्भावना क्रियते येन पात्राणां चरित्रोत्कर्षः जायते। महाकाव्यस्य अस्य प्रथमसर्गे दुर्योधनस्य नैकविधचरित्रोत्कर्षं वर्णितं वनेचरमुखेन महाकविना, यद्यपि महाभारते सः दुराचारी, आत्मश्लाघी, द्यूतप्रेमी। अतोऽत्र पात्रप्रवृत्तिवक्रता। प्रथमसर्गस्य द्वाविंशतमे श्लोके दुर्योधनस्योत्कर्षरूपस्य वर्णनादेव तत्र पात्रवृत्तिवक्रता।

## उत्पाद्यलावण्यवक्रता

किरातार्जुनीयमहाकाव्यस्य मूलकथानके महाभारतस्य वनपर्वणि आगतानां जलक्रीडाविरहवर्णनप्रकृतिवर्णनादीनां प्रकरणानां महाकविकृत-परिमार्जितवर्णनमेव तत्रोत्पाद्यलावण्यवक्रता विलसति।

---

28. कि. 2/30

## विशिष्टप्रकरणस्यातिरञ्जनवक्रता आवृत्तिवक्रता वा

यत्र कविः प्रतिप्रकरणे स्वप्रौढप्रतिभाप्रभावेण एकमेव वस्तुवर्णनं पुनर्पुनरलङ्कारादिभिः निबध्यमानः कामपि विच्छित्तिमुत्पाद्येत् सा विशिष्ट-प्रकरणस्यातिरञ्जनवक्रता। महाकाव्येऽत्र अस्याः वक्रतायाः नैकसर्गेषु दिग्दर्शनं क्रियते। तद्यथा महाकविकृतशरद्वर्णने चतुर्थसर्गे यक्षकृतशरद्वर्णने शरदृतोः अतिरञ्जितं वर्णनमस्ति। एवमेव पञ्चमसर्गे कविकृतहिमालयवर्णने यक्षकृतहिमालयवर्णने च यत् हिमालयस्य वर्णनमस्ति, तत् विशिष्ट-प्रकरणस्यातिरञ्जनवक्रतायां समाहितं भवति। श्लोकोऽत्र दीयते पञ्चसर्गस्य हिमालयवर्णनात् तद्यथा-

**रुचिरपल्लवपुष्पलतागृहेरुपलसज्जलजैर्जलदराशिभिः ।**
**नयति संततमुत्सुकतामयं धृतिमतीरूपकान्तमपि स्त्रियः॥[29]**

अत्र हिमालयपर्वतस्यातिरञ्जनवर्णनात् विशिष्टप्रकरणातिरञ्जन-वक्रता। प्रकरणवक्रतायाः षष्ठः भेदः अङ्गीरसनिष्यन्दवक्रताऽथवा अङ्गादेर्वक्रता। चतुर्थोन्मेषे प्रतिपादितं यत्-

**यत्राङ्गिरसनिष्यन्दनिकषः कोऽपि लक्ष्यते।**
**पूर्वोत्तरसम्पाद्यः साङ्गादेः काऽपि वक्रता॥[30]**

अर्थात् यत्र काव्ये पूर्वोत्तरैरङ्गैः असम्पाद्य कोऽपि प्रधानरसनिष्यन्द-निकषः परिलक्ष्यते। तत्राऽङ्गिरसनिष्यन्दवक्रता। उदाहरणरूपे महाकाव्यस्य अष्टादशसर्गवर्णितकिरातार्जुनयोः बाहुयुद्धवर्णनमुपनिबद्धम्, महाकविना। महाकाव्यस्याङ्गीरसो वीरः, किरातार्जुनयोर्बाहुयुद्धप्रसङ्गे सः स्पष्टतयाऽवलोक्यते। अतोऽत्राङ्गीरसनिष्यन्दवक्रता।

## रोचकप्रसङ्गावतरणवक्रता

अष्टादशसर्गवर्णितकिरातार्जुनयोर्बाहुयुद्धवर्णनमेव तथा अष्टसर्गवर्णित-देवाङ्गनानां जलविहारक्रीडादिवर्णनमपि रोचकप्रसङ्गावतरणवक्रतायाः परो भेदः।

---

29. कि. 5/19
30. व. जी. 4/10

## किरातार्जुनीये प्रबन्धवक्रता

वक्रतायाः अन्तिमभेदः प्रबन्धवक्रता। प्रबन्धस्यार्थः विद्यते सम्पूर्णदृश्यश्रव्यग्रन्थः। प्रबन्धस्य सौन्दर्यकरणमेव कवेः प्रधानं लक्ष्यम्। एषा एव वक्रता काव्येऽङ्गीरूपेण स्वीकृता। प्रथमपञ्चविधवक्रता एतत्प्रबन्ध-वक्रताया अङ्गमात्रमेव। अङ्गानां शोभयैवाङ्गीनां शोभा। कुन्तकाचार्येण प्रबन्ध-वक्रताविषये वर्णितमस्ति यत् 'प्रबन्धे वक्रभावाः यथा कुत्रचिन्महाकविविरचिते रामकथोपनिबन्धे नाटकादौ पञ्चविधवक्रतासामग्रीसमुदायसुन्दरं सहृदय-हृदयहारि महापुरुषवर्णनमुपक्रमे प्रतिभासते ........ रामवद्वर्तितव्यं न रावणवदिति'।[31] अस्याः प्रबन्धवक्रतायाः षडुपभेदाः सन्ति। ते च यथाक्रमेण विवेच्यन्ते।

1. **मूलरसपरिवर्तवक्रता** – यत्र कविः स्वीयरचनायां प्रसिद्धेतिवृत्तिस्य मूलरसस्य स्थाने अपरस्य हृदयाह्लादकारिरसस्य प्राधान्यं दर्शयति अथवा कमपि हृदयावर्जकरसमङ्गीरूपेण स्वीकरोति, तत्र प्रबन्धस्य मूलरस-परिवर्तनवक्रता। कुन्तकाचार्येणाऽत्र रामायणमहाभारतयोरुदाहरणं दत्तम्। उभयग्रन्थे शान्तरसोऽङ्गीरसत्वेन स्वीकृतः। तद्यथा-'**रामायणमहाभारतयोः शान्ताङ्गित्वं पूर्वसूरिभिः निरूपितम्**'।[32] अत्र बहव आचार्याः, विज्ञाः, समालोचकाः, चिन्तकाश्च शान्तरसमङ्गीरूपेण न स्वीकुर्वन्ति परं तथाऽपि कुन्तकाचार्यस्य विभाजनमिदं सर्वथा ग्राह्यं निर्दोषञ्च प्रतीयते। उदाहरणरूपे किरातार्जुनीयमहाकाव्यस्य महाभारतादुद्धृतम् अस्ति। महाभारतं तु शान्तरसप्रधानमिति कुन्तकानन्दवर्धनादिभिराचार्यैरपि स्वीकृतम्। परन्तु महाकविभारविनाऽत्र किरातार्जुनयोः सङ्गरवर्णनं अर्जुनस्य विजयावाप्तिश्च वर्णिता। अतः महाकाव्येऽत्र वीररसमेव अङ्गीत्वं भजते। अतः मूलरसपरिवर्तनवक्रता।

2. **समापनवक्रता** – कुन्तकाभिमतानुसारं यत्र कविः कथायाः उत्तरभागस्य नीरसत्वं परिहारणार्थं त्रैलोक्यचमत्कारकारणं नायकचरित्रोत्कर्ष-पोषिणस्येतिहासस्य एकदेशेन एकांशेन वा प्रबन्धस्य समापनं कुर्वीत, तत्र

---

31. व. जी. वृत्ति पृ. सं. 91
32. व. जी. व्याख्याकारः श्रीराधेश्यामिश्रः, पृ. 441

प्रबन्धस्य समापनवक्रता। अर्थात् यदा कविः कामपि रचनां रचयितुं तत्परो जायते, तदा सः तत्प्राचीनमपि कथासूत्रमादाय, स्वमस्तिष्के तं व्यक्तिविशेषं प्रति सर्वथानूतनानुभवान् धारयति। स्वनूतनानुभवेन कल्पनया वा पुरातनकथां सर्वथा नवीनरूपे समुपस्थापयति। उदहरणरूपे-अत्र महाकाव्ये कवि अर्जुनस्य किरातवेषधारिणा शङ्करेण सह युद्धं वर्णयित्वा पाशुपतास्त्रप्राप्ते सति कथां समाप्यते। परं महाभारते सा कथा धर्मक्षेत्रे कौरवाणां संहारानन्तरं यावत् प्रचलति। अनेन नायकस्योत्कर्षः जायते। अतः प्रबन्धस्य समापनवक्रता।

3. **कथाविच्छेदवक्रता** - अर्थात् प्रकरणविशेषे कथायाः समाप्तिः। अत्र आधिकारिककथावस्तुनः सम्बन्धस्य तिरोधातृभिरपरैः विघ्नैः कथा विच्छिन्ना नीरसा च जाता, तत्रैव स्थले आकस्मिकप्रसङ्गेन औत्सुक्यवर्णनेन कार्यसिद्धिः रससञ्चारश्च यया जायते सा कथाविच्छेदवक्रता। यथा-

**प्रधानवस्तुसम्बन्धतिरोधानविधायिना ।**
**कार्यान्तरान्तरेण विच्छिन्नविरसा कथा॥**

**तत्रैव तस्य निष्पत्तेर्निबन्धरसोज्ज्वलाम्।**
**प्रबन्धस्यानुबध्नाति नवां कामपि वक्रताम्॥**[33]

उदाहरणरूपेण किरातार्जुनीये तृतीयसर्गे द्रौपद्याः वचनानि श्रुत्वा हिमालयाय प्रथितं क्रुद्धं धनञ्जयं प्रति (सव्यसाचिनं प्रति वा) यक्षः शरद्वर्णनं विधाय प्रधानरसवर्णनेन कथां विच्छिनति। तदा हिमालयप्रसङ्गे पर्वतराजहिमालयस्य सर्वेषां विशिष्टगुणानां वर्णनं विधाय, एतदेवार्जुनस्य तपश्चर्यायै सर्वोत्तमं स्थानमस्ति इति वर्णयित्वा पुनराकस्मिकरूपेण प्रधानरसं प्रति कथां नयति। अत अत्र कथाविच्छेदवक्रता विराजते।

4. **आनुषङ्गिकफलवक्रता** - यत्र प्रबन्धे एकप्रधानफलस्य प्राप्तये समुद्यतनायकः स्वप्रभावचमत्कारेण तत्तुल्यान्नादरभाज्यान्नन्यान्नानुषङ्गिकफलान् प्राप्नोति, तत्र आनुषङ्गिकफलवक्रता। महाकाव्यस्यास्य अन्तिमसर्गे अर्जुनस्य तपस्यायाः प्रसन्नो भूत्वा भगवान्शङ्करद्वारा पाशुपतास्त्रप्राप्ते सति,

33. व. जी. 4/20-21

इन्द्रादिलोकपालैरपि सव्यसाचिने बहूनि तत्तुल्यादरभाज्यदिव्यास्त्राणि दीयन्ते। अतोऽत्रानुषङ्गिकफलवक्रता विद्यते।

5. **नामकरणवक्रता** – यत्र कवि: ग्रन्थप्रतिपाद्यवस्तुन आधारं गृहीत्वा स्वप्रबन्धादे: नामयोजनां सम्पाद्येत् सा नामकरणवक्रता, प्रबन्ध वक्रताया: परो भेद:। तद्यथा–

**अस्तां वस्नेषु वैदग्ध्यं काव्ये कामपि वक्रताम्।**

**प्रधानसंविधानांक नाम्नाऽपि कुरुते कवि:।।**[34]

अत्र कुन्तकमहोदयस्य मन्तव्यमस्ति यत् साधारणाभिधानात्मक-नामकरणापेक्षा मूलकथाया: साङ्केतिकनाम शीर्षक: वा सहृदयान् स्वीयं प्रति आकर्षयति। किरातार्जुनीये प्रधानकथा किरातवेशधारिणा शङ्करेण सह अर्जुनस्य सङ्गरानन्तरं पाशुपतास्त्रप्राप्तिरस्ति। महाकाव्येऽस्मिन् किरातार्जुनौ प्रधानपात्रौ स्त:। अत: महाकाव्यस्य नामकरणं 'किरातर्जुनीयम्' अत्युत्तमस्ति।

**निष्कर्ष:**

बृहत्त्रयामन्यतमं महाकाव्यमिदम्। वक्रोक्तिसिद्धान्तदृशा अस्या-वलोकनेन ज्ञायते यत् सम्पूर्णमहाकाव्ये वक्रोक्ते: मूलतत्त्वानि इतस्तत: प्रकीर्णानि सन्ति। सर्वेषां भेदोपभेदानाम् उदाहरणानि बाहुल्येनात्र प्राप्नुवन्ति। एतदेव न एकस्या एव वक्रताया: नैकान्युदाहरणानि दृष्टिपथमायान्ति। वक्रोक्तिकाव्यजीवितमित्यस्मिन् ग्रन्थे महाकाव्यादस्मादनेकानि उदाहरणानि उदाहरणरूपे प्रस्तुत्य स्वयमेव सिद्धं श्रीमद्राराजनककुन्तकाचार्येणेति निश्चप्रच्चम्।

---

34. व. जी. 4/24

# किरातार्जुनीये रसाः, तदङ्गानि च

**गोपालकुमारझा**

काव्यं हि आनन्दानुभूतिसाधनम्। आनन्दानुभूतिश्च रसास्वादमूला भवति। रसास्वादनादेव आनन्दावाप्तिः। अतएव काव्यप्रयोजने मम्मटो 'सद्यः परनिर्वृतये' इति भणति। सकलप्रयोजनमौलिभूतं समनन्तरमेव रसास्वादसमुद्गतं विगलितवेद्यान्तम् आनन्दम्।[1]

विश्वनाथः साहित्यदर्पणे रसस्वरूपं प्रतिपादयति यद् रसो ब्रह्मास्वादसहोदरः-

**वेद्यान्तरस्पर्शशून्यो ब्रह्मास्वादसहोदरः।**
**स्वाकारवदभिन्नत्वेनायमास्वाद्यते रसः॥[2]**

रसस्य आस्वाद्यत्वम् अनुभूतिविषयत्वं च मम्मटेन वर्ण्येते:-

'प्रपाणकरसन्यायेन चर्व्यमाणः, हृदयमिव प्रविशन्, अन्यत्सर्वमिव तिरोदधत्, ब्रह्मास्वादमिवानुभावनयन्, अलौकिकचमत्कारकारी शृङ्गरादिको रसः' काव्य. 4 उल्लासः।

तैत्तिरीयोपनिषदि 'रसो वै सः। रसं ह्येवायं लब्ध्वानन्दी भवति'[3] इत्यत्र ब्रह्मणो रसरूपत्वं तदवाप्तौ च आनन्दोपलब्धिर्वण्यते। तथैव काव्यानन्दोपलब्धिरपि भवति।

एष रसः, 'आनन्द' इत्येतया संज्ञया, 'सत्यम्' इत्येतेन नाम्ना, 'शिवम्' इत्येतेन च नामधेयेन, 'सौन्दर्यम्' इत्येतया चाभिधया लोके सादरं व्यवहृतो भवति। सौन्दर्यं कं न प्राणिनं प्रीणयति? आनन्दः कं न जनं नन्दयति? सत्यं कं न पुरुषं प्रमोदयति? शिवं कं न कल्याणाभिलाषिणं तर्पयति?

दृश्यश्रव्यभेदकाव्यस्यानन्दसत्यशिवसौन्दर्यात्मकत्वात् तद् द्रष्टुं, श्रोतुं, पठितुं, पाठयितुं सर्वेऽपि सचेतस आत्मानं प्रवर्तयन्ति। काव्यं विलोक्य निशम्य वा द्रष्टुर्वा श्रोतुः साधारणीकरणसामर्थ्येन दृष्टेन वस्तुना श्रुतेन वा विषयेण सह तस्यैक्यं सञ्जायते किं वा तादात्म्यं भवति। उभयोरपि मध्ये घटमानेन तादात्म्येन ततो ब्रह्मानन्दसदृशमानन्दानुभूतिर्जायते। अनुभवविषयं प्रपन्नोऽयमेवानन्दः साहित्यशास्त्रेण 'रस' इत्येतेन नाम्ना परिभाष्यते। रससत्त्वेनैव कवेः कृतिः 'काव्यम्' इति कथ्यते। यत्र रसोऽयम् न, सा कृतिः काव्यं न शब्दाडम्बर एव।

भरतेन नाट्यशास्त्रे रसप्रयोजनमुच्यते- **'नहि रसाद् ऋते कश्चिदर्थः प्रवर्तते'**[4] कथं रसनिष्पत्तिरिति जिज्ञासायां तेनोच्यते- **'विभावानुभावाव्यभिचारिसंयोगाद् रसनिष्पत्तिः।'**

लोके यानि कारणानि, कार्याणि, सहकारीणि च तान्येव काव्ये विभावानुभावव्यभिचारितया विराजन्ते। एतेषां स्थायिभावेन सह संयोगाद् रसानुभूतिर्भवति। यथोक्तञ्च मम्मटेन-

**कारणान्यथ कार्याणि सहकारीणि यानि च।**
**रत्यादेः स्थायिनो लोके तानि चेन्नाट्यकाव्ययोः॥**
**विभावा अनुभावास्तत् कथ्यन्ते व्यभिचारिणः।**
**व्यक्तः स तैर्विभावाद्यैः स्थायी भावो रसः स्मृतः**[5]**॥**

**रसस्य अङ्गरूपेण विभावादिः क्रमशः उच्यते-**

विभावः- विभावो नाम विज्ञानार्थः । विभावः कारणं निमित्तंहेतुरितिपर्यायाः। विभाव्यतेऽनेन वागङ्गसत्वाभिनय इति विभावः। यथा विभाति विज्ञातमित्यर्थान्तरम्।(ना. शा. पृ.-373)

तथा च-

**बहवोऽर्था विभाव्यन्तेवागङ्गाभिनयाश्रयाः।**
**अनेन यस्मात्तेनायं विभाव इति संज्ञितः**[6]**॥**

विभावस्य भेदद्वयं भवति। (1)आलम्बनविभावः, (2)उद्दीपन-विभावश्च।

**<u>अनुभावः</u>**- अनुभाव्यतेऽनेन वागङ्गसत्वकृतोऽभिनय इति । तथा च-

वागङ्गाभिनयेनेह यतस्त्वर्थोऽनुभाव्यते।

शाखाङ्गोपाङ्गसंयुक्तस्त्वनुभावस्ततः स्मृतः[7]।। **इति**

**<u>व्यभिचारिभावाः</u>**- वि अभि इत्येतावुपसर्गौ। चर इति गत्यर्थो धातुः विविधमाभिमुख्येन रसेषु चरन्तीति व्यभिचारिणः। वागङ्गसत्वोपेताः प्रयोगे रसान्नयन्तीति व्यभिचारिणः। चरन्ति नयन्तीत्यर्थः। अत्राह कथं नयन्तीति। उच्यते- लोकसिद्धान्त एषः यथा सूर्य इदं दिनं नक्षत्रं वा नयतीति। न च तेन बाहुभ्यां स्कन्धेन व नीयते । किन्तु लोकप्रसिद्धमेतत्। यथेदं सूर्यो नक्षत्रं दिनं व नयतीति एवमेते व्यभिचारिण इत्यवगन्तव्याः। (ना. शा. पृ.-390) इति। ते व्यभिचारिणः काव्यशास्त्रे त्रयस्त्रिंशदप्रकारकाः भवन्ति।

**<u>स्थायिभावः</u>**- अनेकजन्मार्जितसंस्काररूपेणवासनारूपेण वा हृदये स्थायिरूपेण तिष्ठति वसति वा स स्थायी भाव उच्यते। स सर्वेभ्यो भावेभ्यो नरेन्द्रवत् प्रधानो भवति। यथोक्तञ्च- यथा नरेन्द्रोबहुजनपरिवारोऽपि सन् स एव नाम लभते नान्यः सुमहानपि पुरुषः। तथा विभावानुभावव्यभिचारिणपरिवृतः स्थायी भावो रसनाम लभते नरेन्द्रवत्। (ना. शा. पृ.-379) तथा च-

**तथा नराणां नृपतिः शिष्याणाञ्च यथा गुरुः।**

**एवं हि सर्वभावानां भावः स्थायी महानिह[8]।।** इति

ते स्थायिभावाः अष्टप्रकारकाः भवन्ति।

**<u>सात्त्विकभावः</u>**- अवहितं मनः सत्त्वं तत्प्रयोजनं हेतुरस्येति सात्त्विकः। यथोक्तञ्च- इह हि सत्त्वं नाम मनः प्रभवम्। तच्च समाहितमनस्त्वादुच्यते। मनसः समाधौ सत्त्वनिष्पत्तिर्भवति। तस्य च योऽसौ स्वभावो रोमाञ्चाश्रुवैवर्ण्यादिलक्षणो यथाभावोपगतः स न

शक्योऽन्यमनसाकर्तुमिति लोकस्वभावानुकरणत्वाच्च नाट्यस्य सत्त्वमीप्सितम्।[9] इति वस्तुतः सात्त्विकभावा व्यभिचारिभावाभिनयस्य धर्मरूपेण सन्ति। ते अष्टप्रकारका भवन्ति।

**इदानीं बृहत्त्रय्यां रसयोजना निरूप्यते।**

'किरातार्जुनीयम्' महाकाव्यमेतद् बृहत्त्रय्यामन्यतममस्ति। महाकाव्यद्वयं चान्यद् वर्तते- माघविरचितं शिशुपालवधम्, श्रीहर्षप्रणीतं नैषधीयचरितं च। महाकवेः भारवेः कृतिरेकैव 'किरातार्जुनीयम्' इति उपलभ्यते। समग्रेऽपि संस्कृतवाङ्मये नैतादृशम् ओजोगुणसमन्वितं काव्यान्तरम्। अष्टादशात्र सर्गाः। किरातवेषधारिणा शिवेन सहार्जुनस्य संग्रामोऽत्र वर्णितः। वीररसोऽत्र प्रधानः, अन्येऽपि रसाश्च सन्ति, ते गौणाः रसाः। तानग्रे यथास्थानं निरूपयिष्यामि। समुपलब्धमनेनानुपमं यशः स्वकीयेन अर्थविच्छित्तिभरितेन किरातार्जुनीय-महाकाव्येन भवति। कृतिरियं तस्यार्थगौरवसम्पन्नेति दर्श दर्श विपश्चिद्भिः **'भारवेर्थगौरवम्'** इति साह्लादमुद्गीर्यते। महाकाव्यस्यैतस्य टीकाकृत् श्रीमल्लिनाथः काव्यमेतद् नारिकेलफलेनोपमीते, बहि अर्थगाम्भीर्यमूलकक्लिष्टत्वाद् अन्तश्च सरसार्थवत्त्वाद् रसाप्लुतत्वम्। उक्तं च-

> **नरिकेलफलसम्मितं वचो भारवेः सपदि तद् विभज्यते।**
> **स्वादयन्तु रसगर्भनिर्भरं सारमस्य रसिका यथेप्सितम्[10]॥**

एतादृशस्य रसस्य साधकत्वात् कविर्दार्शनिकादपि गरीयान् वैज्ञानिकादपि च महीयान् भवति। सकलस्यापि सामान्यस्य लोकस्योद्धारभरः कवावेव स्थितस्तस्मात् पौराणिकाद् दार्शनिकाद् विज्ञानविदादिकाच्च कविर्महीयान् गरीयांश्च। पैराणिक-दार्शनिकप्रभृतयो बुधवरा यस्य तत्त्वस्याभिव्यक्तिं विदधति तस्यैव तत्त्वस्य वर्णनं कविरपि स्वकीयया काव्यकलया करोति। परं स काव्यकलाभिधया पद्धत्या परमार्थसौन्दर्यमिदं विदधत् समुपस्थापयति।

किरातार्जुनीयमहाकाव्यस्य प्रथमे सर्गे ब्रह्मचारिवेषधारिवनेचरः गुप्तचरो वा दुर्योधनस्य सम्पूर्णवृत्तान्तं युधिष्ठिरं श्रावयति तथा च तं प्रतिकारं कर्तुं

सविनयेन युद्धाय च प्रेरयति। यथा–

**तदाशु कर्तुं त्वयि जिह्ममुद्यते**
**विधीयतां तत्र विधेयमुत्तरम्।**
**परप्रणीतानि वचांसि चिन्वतां**
**प्रवृत्तिसाराः खलु मादृशां गिरः[11]।।**

दूतवाक्यानन्तरं स्वयं द्रौपदी युधिष्ठिरं शत्रुं प्रति क्रोधोद्दीपनं कान्तासम्मितवचोभिः करोति। यथा–

**भवादृशेषु प्रमदाजनोदितं**
**भवत्यधिक्षेप इवानुशासनम्।**
**तथापि वक्तुं व्यवसाययन्ति**
**मां निरस्तनारीसमया दुराधयः।।**

**अखण्डमाखण्डलतुल्यधामभिश्चिरं**
**धृता भूपतिभिः स्ववंशजैः।**
**त्वयात्महस्तेन मही मदच्युता**
**मतङ्गजेन स्रगिवापवर्जिता[12]।।**

**न समयपरिरक्षणं क्षमं ते**
**निकृतिपरेषु परेषु भूरिधाम्नः।**
**अरिषु हि विजयार्थिनः क्षितीशा**
**विदधति सोपधि सन्धिदूषणानि[13]।।**

एतेषु वचनेषु द्रौपद्याः शत्रुकृतापराधजनितपीडास्पष्टमेव परिलक्ष्यते। अपि च अपकारिप्रतिकारायावश्यमेव अध्यवसायः कर्तव्य इत्याशयोऽपि प्राप्यते। इत्थं विविधसंचारिणां बोधोऽत्र जायते। अत्र युधिष्ठिरहृदये सुप्तस्थायिभावस्य उत्साहस्य सनीतिवचोभिरुद्दीपनं करोति। पुनः द्वितीये सर्गे भीमोऽपि क्रोधोद्दीपकवचनेन युधिष्ठिरं युद्धाय प्रेरयति। यथा–

**चतसृष्वपि ते विवेकिनी नृप विद्यासु निरूढिमागता।**
**कथमेत्य मतिर्विपर्ययं करिणी पङ्कमिवावसीदति[14]।।**

तृतीयेसर्गे वेदव्यास आगत्य युधिष्ठिरं युद्धाय उत्साहवर्धनं करोति। दुर्योधनस्य सैन्यबलं प्रदर्श्य तत्प्रतीकारार्थं बलसामर्थ्यप्राप्त्यर्थं मार्गं निर्दिशति। तथा च राज्ञ उत्साहवर्धनाय शत्रोर्हानिं सूचयति-

**जहातु नैनं कथमर्थसिद्धिः संशय्य कर्णादिषु तिष्ठते यः।**
**असाधुयोगा हि जयान्तरायाः प्रमाथिनीनां विपदां पदानि[15]॥**

**लभ्या धरित्री तव विक्रमेण ज्यायांश्च वीर्यास्त्रबलैर्विपक्षः।**
**अतः प्रकर्षाय विधिर्विधेयः प्रकर्षतन्त्रा हि रणे जयश्रीः[16]॥**

सर्वत्रैव अङ्गीरसस्य वीरस्य सम्यक् परिपोषणं दृश्यते। पञ्चदशसर्गतः अन्तपर्यन्तं किरातवेशधारिशिवेन सह अर्जुनस्य युद्धवर्णनं वर्तते। किरातवेशधारिशिवस्य विचित्रप्रकारकं युद्धकौशलं दृष्ट्वा अर्जुनस्य क्रोध ाद्यनुभावस्य वर्णनं क्रियते। यथा-

**भूयः समाधानविवृद्धतेजा नैवं पुरा युद्धमिति व्यथावान्।**
**स निर्ववामास्त्रममर्षनुन्नं विषं महानाग इवेक्षणाभ्याम्॥**

**तस्याहवायासविलोलमौलेः संरम्भताम्रायतलोचनस्य।**
**निर्वापयिष्यन्निव रोषतप्तं प्रस्नापयामास मुखं निदाघः॥**

**क्रोधान्धकारान्तरितो रणाय भ्रूभेदरेखाः स बभार तिस्रः।**
**घनोपरुद्धः प्रभवाय वृष्टेरूर्ध्वांराजीरिव तिग्मरश्मिः॥**

**स प्रध्वनय्याम्बुदनादि चापं**
**हस्तेन दिङ्नाग इवाद्रि शृङ्गम्।**
**बलानि शम्भोरिषुभिस्तताप**
**चेतांसि चिन्ताभिरिवाशरीरः[17]॥**

अत्र भ्रूभङ्गस्वेदाद्यनुभावेन क्रोधेन, पराक्रमेण, उत्साहेन च वीरो व्यज्यते। पुनः अष्टादशसर्गे बाहुयुद्धवर्णनं कृतम्। यथा-

**तत उदग्र इव द्विरदे मुनौ रणमुपेयुषि भीमभुजायुधे।**
**धनुरपास्य सबाणधि शङ्करः प्रतिजघान घनैरिव मुष्टिभिः[18]॥**

**उरसि शूलभृतः प्रहिता मुहुः प्रतिहतिं ययुरर्जुनमुष्टयः।**
**भृशरया इव सह्यमहीभृतः पृथुनि रोधसि सिन्धुमहोर्मयः॥**

**निपतितेऽधिशिरोधरमायते सममरत्नियुगेऽयुगचक्षुषः।**
**त्रिचतुरेषु पदेषु किरीटिना लुलितदृष्टि मदादिव चस्खले[19]॥**

**प्रववृतेऽथ महाहवमल्लयोरचलसञ्चलनाहरणो रणः।**
**करणशृङ्खलसङ्कलनागुरुर्गुरूभुजायुधगर्वितयोस्तयोः[20]॥**

अत्र नानाविधयुद्धेन वीररसो अभिव्यज्यते।

**शृङ्गाररसः-**

अर्जुनस्य तपो भङ्गायाप्सरसः इन्द्रकीलपर्वतमागत्य विविधा-शृङ्गारिकचेष्टाः प्रदर्शयन्ति येनाङ्गरसस्य शृङ्गारस्य पोषणं भवति। यथा-

**प्रयच्छतोच्चैः कुसुमानि मानिनी**
**विपक्षगोत्रं दयितेन लम्भिता।**
**न किञ्चिदूचे चरणेन केवलं**
**लिलेख बाष्पाकुललोचना भुवम्॥**

**प्रियेऽपरा यच्छति वाचमुन्मुखी**
**निबद्धदृष्टिः शिथिलाकुलोच्चया।**
**समादधे नांशुकमाहितं वृथा**
**विवेद पुष्पेषु न पाणिपल्लवम्॥**

**सलीलमासक्तलतान्तभूषणं**
**समासजन्त्या कुसुमावतंसकम्।**
**स्तनोपपीडं नुनुदे नितम्बिना**
**घनेन कश्चिज्जघनेन कान्तया॥**

**कलत्रभारेण विलोलनीविना गलद्दुकूलस्तनशालिनोरसा।**
**बलिव्यपायस्फुटरोमराजिना निरायतत्वादुदरेण ताम्यता॥**

**विलम्बमानाकुलकेशपाशया कयाचिदाविष्कृतबाहुमूलया।**
**तरुप्रसूनान्यपदिश्य सादरं मनोधिनाथस्य मनः समाददे[21]॥**

अत्र सुराङ्गनानां विविधचेष्टाभिः शृङ्गाररस अङ्गरूपेण अभिव्यज्यते।

**भयानकरसः-**

**अथ भूतानि वार्त्रघ्नशरेभ्यस्तत्र तत्रसुः।**
**भेजे दिशः परित्यक्तमहेष्वासा च सा चमूः।।**
**अपश्यद्भिरिवेशानं रणान्निववृतं गणैः।**
**मुह्यत्येव हि कृच्छ्रेषु सम्भ्रमज्वलितं मनः[22]।।**

अत्र शिवगणस्य भयस्थायिभावस्य 'परित्यक्तमहेष्वासा' 'रणान्निववृतम्' 'सम्भ्रमज्वजितं मनः' एतेषु च पदेषु भयानकरसोऽभिव्यज्यते।

**अद्भुतरसः-**

**न रागि चेतः परमा विलासिता**
**वधूः शरीरेऽस्ति न चास्ति मन्मथः।**
**नमस्क्रिया चोषसि धातुरित्यहो**
**निसर्गदुर्बोधमिदं तवेहितम्[23]।।**

अत्र शिवस्य अपूर्ववर्णने विस्मयकारणादद्भुतरसोऽभिव्यज्यते।

तथा च-

**स पिङ्गाक्षः श्रीमान्भुवनमहनीयेन महसा**
**तनुं भीमां बिभ्रत्त्रिगुणपरिवारप्रहरणः।**
**परीत्येशानं त्रिः स्तुतिभिरुपगीतः सुरगणैः**
**सुतं पाण्डोर्वीरं जलदमिव भास्वानभिययौ[24]।।**

अत्र धनुर्वेदाचरणेन अद्भुतरसोऽभिव्यज्यते।

**शान्तरसः-**

**प्रणिधाय तत्र विधिनाथ धियं दधतः पुरातनमुनेर्मुनिताम्।**
**श्रममादधावसुकरं न तपः किमिवावसादकरमात्मवताम्।।**
**शमयन्धृतेन्द्रियशमैकसुखः शुचिभिर्गुणैरघमयं स तमः।**
**प्रतिवासरं सुकृतिभिववृधे विमलः कलाभिरिव शीतरुचिः[25]।।**

अत्र अर्जुनस्य तपःस्थलीवर्णन प्रसङ्गे शान्तरसोऽभिव्यज्यते।

वस्तुतः किरातार्जुनीयमहाकाव्यमतिविशालकाव्यमस्ति। अत्र सर्वरसानामतिविस्तरेण साङ्गोपाङ्गवर्णनम् उदाहरणानि च वर्तन्ते। अस्मिन् लघुशोधपत्रे कानिचन निदर्शनानि प्रदर्शितानि। इति शम्।।

---

1 काव्य. 1.2
2 सा. द. 3.2
3 तै. 2.7
4 ना. शा. 6.32
5 काव्य. 4.27-28
6 ना. शा. पृ.-7/04
7 ना. शा. पृ.-7/15
8 ना. शा. 7/08
9 ना. शा. पृ.-429
10 मल्लिनाथः।
11 किरात. 1.25
12 किरात. 1.28-29
13 किरात. 1.45
14 किरात. 2.06
15 किरात. 3.14
16 किरात. 3.17
17 किरात. 17.7-10
18 किरात. 18.01
19 किरात. 18.05-06
20 किरात. 18.08
21 किरात. 08.14-18
22 किरात. 15.01-02
23 किरात. 18.31
24 किरात. 18.45
25 किरात. 06.19-20

# किरातार्जुनीयमहाकाव्ये पदशय्या

डॉ. सत्येन्द्रपाण्डेयः

**किरातार्जुनीयम्** महाकविभारवेः विरचितं भाव-कलापक्षयोः समन्वितमत्यन्तमुत्कृष्टतरं महाकाव्यं वर्तते। कविकुलगुरोः कालिदासस्यानन्तरं यदि किमपि काव्यं रस-भाव-भाषादृष्ट्या दृष्टिपथमायाति चेत्तद्भारवेः किरातार्जुनीयमेव वर्तते। कलापक्षदृष्ट्या तु कविरसौ कालिदासमप्यतिशेते। अतएव किरातार्जुनीयमिदं भाषायाः प्राञ्जलत्वात् काव्यकलायाः शिल्पविधानदृष्ट्या कालिदासस्य रघुवंशमप्यतिक्रम्य बृहत्त्रयीषु परिगणितम्। किरातार्जुनीये बृहत्त्रय्याम् अन्यतमं महाकाव्यं शिशुपालबधमिव न तु जटिलता श्रुतिकटुता वर्तते न तु नैषधमिव क्लिष्टकल्पनाया बाहुल्यं दृश्यते। वक्तुं शक्यते यत्कोमलकान्तपदावलीदृष्ट्या ओजःपूर्णपद्धत्या, महाकाव्यस्य समग्रशास्त्रीयगुणसमन्विततया नास्त्येतदतिरिक्तं महाकाव्यमन्यत्।

अष्टादशसर्गेषु निबद्धमिदं महाकाव्यं राजनीतिप्रधानं वर्ण्यविषयमवलम्ब्य प्रवर्तते। कपटच्छलप्रवञ्चनापूर्णैः शत्रुभिः प्रतिशोधभावनां-परिपूर्त्यर्थमेव कथानकस्यारम्भो भवति। अथ चास्य नायको मध्यमपाण्डवोऽजुनः स्वनिष्ठापूर्णतपसा भगवन्तं पशुपतिं प्रसाद्य पाशुपतास्त्रधारणस्य स्वीयां योग्यतां किरातवेषधारिणः साक्षात् समक्षं तेन सह युद्धं कृत्वा साधयति। अतो महाकाव्यमिदं वीररसप्रधानं वर्तते। सुप्रसिद्धः टीकाकारो मल्लिनाथो महाकाव्यस्यास्य सर्वाण्यप्यङ्गानि एवं निर्दिशति–

**नेता मध्यमपाण्डवो प्रतिभटो भर्गः किराताकृति-**
**रुत्साहस्थिरभावकः प्रतिभटाटोपक्रियोद्दीपितः।**
**शृङ्गाराङ्गसमेधितः सुमहितो वीरः प्रधानो रसः,**
**धैर्य्याद्याः व्यभिचारिणः समुदिता दिव्यास्त्रलाभः फलम्॥**[1]

1. किरात, भूमिका,पृ.5

मम प्रस्ताविको विषयोऽस्ति **'किरातार्जुनीये पदाशय्या'** अत्र सर्वप्रथमं विचारणीयं वर्तते यत्किन्नाम तावत्पदशय्या? तर्हि पदस्य पदानां वा शय्या रचनाप्रयोगो वा पदशय्या भवति। अर्थात्कवेः पदरचनायाः पदप्रयोगस्य वा यद्वैशिष्ट्यं भवति तदेव तस्य पदशय्या इति वक्तुं शक्यते। वामनाचार्येण रीतेः यल्लक्षणं कृतं **'विशिष्टपदरचना रीतिः।' 'विशेषो गुणत्मा'**[2] तदपि पदशय्यायाः स्वरूपमेव वर्तते। पदशय्याप्रयोगमाध्यमेनैव कवेः रचनाकारस्य वा काव्यमार्गस्य निर्धारणं भवति। कालिदासस्य वैदर्भी, भवभूतेः गौडी, बाणभट्टस्य पाञ्चालीप्रभृतिपथावधारकः तेषां पदशय्याः एव वर्तन्ते। किन्नाम पदत्वमित्यनुयोगे महर्षिपाणिनिः ब्रवीति- **'सुप्तिङन्तं पदम्'**[3] सुबन्ततिङन्तयोः पदसंज्ञा भवति। निरुक्तकारो यास्कः नामाख्यातोपसर्गनिपातभेदैः चत्वारि पदानि स्वीकरोति।[4] काव्यमीमांसाकारो राजशेखरः पदवाक्यविवेकनामके षष्ठेऽध्याये शब्दार्थयोरुभयोरपि पदशब्दस्य व्यवहारो विधत्ते, अथ च तस्य पदस्य पञ्चवृत्तयः इतिस्वीकृतवान्–

**व्याकरणस्मृतिनिर्णीतः शब्दः।**

**निरुक्तनिघण्ट्वादिभिर्निर्दिष्टस्तदभिऽधेयोऽर्थस्तौ पदम्। तस्य पञ्चवृत्तयः-सुब्बृत्तिः, समासवृत्तिः, तद्धितवृत्तिः, कृद्वृत्तिः, तिङ्वृत्तिश्च।**[5]

पदप्रयोगवैशिष्ट्यसन्दर्भे आनन्दवर्धनस्य सङ्घटनायाः सर्वथोपयोगिनी वर्तते। आनन्दवर्धनोऽसमासा-मध्यमसमासा-दीर्घसमासाभेदैः त्रिविधाः सङ्घटनाः माधुर्यादीन् गुणानाश्रित्य रसादीन् व्यञ्यन्ति इति वदति। यथोक्तम्- **'गुणानाश्रित्य तिष्ठन्ती माधुर्यादीन्व्यनक्ति सा। रसान्'**[6] ध्वनिकारय तत्रस्थ सर्वमपि प्रतिपादनं सारांशतया वक्तुं शक्यते यत्कञ्चनाप्यपवादं विहाय सामान्यतया शृङ्गार-करुण-विप्रलम्भशान्तरसाभिव्यञ्जके माधुर्यगुणे असमासा-मध्यमसमासयोः सङ्घटनयोः प्रयोगो भवति।

2. का.सू.वृ. 1/2/7-8
3. पा.अ. 1/4/14
4. तद्याति चत्वारि पदजानानि नामाख्यतोपसर्गतिपातश्च नामीमानिभवन्ति। निरन्तरम्
5. कर.मी.-6, अध्याय
6. ध्यव्यावलोक- 3/6,पृ.337

वीर-वीभत्स-रौद्ररसाभिव्यञ्जके ओजोगुणे दीर्घसमासा-मध्यमसमासयोः सङ्घटनयोः तथा च सर्वासु सङ्घटनासु प्रसादगुणो व्याप्तो भवति अथवा वक्तुं शक्यते यत्सर्वेषु गुणेष्वसमासासङ्घटानायाः प्रयोगो भवितुमर्हति। आनन्दवर्धनस्य मन्तव्यं वर्तते यत्सङ्घटनायाः प्रयोगे सर्वथा इदमित्थं न वक्तुं शक्यते। यतोहि तस्या नियामकं वक्तृवाच्ययोरौचित्यं भवति- **'तन्नियमे हेतुरौचित्यं वक्तृवाच्ययोः'**[7] कवि कथानायक प्रतिपाद्यप्रसङ्गाश्रितेयं सङ्घटना। अतएव शृङ्गारेऽपि दीर्घसमासा अथ रौद्रेऽप्यसमासासङ्घटना दृश्यते। यद्यप्येषा परिकल्पना स्थूलतया राजशेखरस्य समासवृत्तौ सुब्वृत्तौ वान्तर्भावयितुं शक्यते परं रस-गुण-सङ्घटनानामौचित्यपुरस्सरं सन्निवेशस्य निर्देशः नूनमेव पदशय्यायाः निर्धारणे उपयोगी भविष्यति।

काव्यचिन्तकातिरिक्तं महाकविभारवेः पद-पदार्थप्रयोगवैशिष्ट्ये स्वोपज्ञं चिन्तनमपि वर्तते, यत्तेषां पदशय्याप्रदर्शनक्रमे नोपेक्षितुं शक्यते। असौ नैकत्र वाचः प्रशंसायां पदशय्यप्रयोगस्य वैशिष्ट्यमुद्घोषयति। प्रथमसर्गे एव वाण्याः आदर्शं प्रस्तौति यत्सौष्ठवौदार्यः विनिश्चितार्थः शब्दार्थसमवायः प्रशंसनीयो भवति- **'स सौष्ठवौदार्यविशेषशालिनीं विनिश्चितार्थामिति वाचमाददे।'**[8] एवंमेव द्वितीयसर्गे महाराजयुधिष्ठिरस्य मुखेन स्ववाण्याः रमणीयादर्शं प्रस्तौनि यत्काव्यस्य पदावली परिस्फुटा स्यान्न तु दुर्बोध्या। अर्थगाम्भीर्येणं संवलिता स्यात्, न त्वर्थस्य पौनरुक्त्यं भवेत्। अथ च रचनाकारस्याभीष्टभावावबोध ने सर्वथा समर्था स्यात्-

**स्फुटता न पदैरपाकृता न च न स्वीकृतमर्थगौरवम्।**
**रचिता पृथगर्थता गिरां न च सामर्थ्यमपोहितं क्वचित्।।**[9]

तत्रैव।

चतुर्दशसर्गे पुनरसौ वाण्या महत्त्वं निर्दशति यत्स्फुटवर्णालङ्कारैः विभूषिता, शत्रूनपि वशीकृता, प्रसादगुणोपेता गम्भीरपदावली सरस्वती अपुण्यशालिनां मुखात्कथमपि न प्रकटिता भवति-

7. तत्रैव- 2/6, पृ. 347
8. किरात- 1/3
9. तत्रैव- 2/27

**विविक्तवर्णाभरणा सुखश्रुति! प्रसादयन्ती हृदयान्यपि द्विषाम्।**
**प्रवर्तते नाकृतपुण्यकर्मणां प्रसन्नगम्भीरपदा सरस्वती।।**[10]

एवमेव इन्द्रस्य वाण्याः प्रसंशाव्याजेन कविरसौ महाकाव्यस्य पदशय्याया अपि निर्देशं कुरुते-

**प्रसादरम्यमोजस्वि गरीयो लाघवान्वितम्।**

**साकाङ्क्षमनुस्पकारं विष्वग्गति निराकुलम्।।**

**न्यायनिणीतसारत्वान्निरपेक्षमिवागमे।**

**अप्रकम्प्यतयान्येषामाम्नावचनोपमम्।।**

**अलङ्घ्यत्वाज्जनैरन्यैः क्षुभितोदन्वदूर्जितम्।**

**औदार्यादर्थसम्पत्तेः शान्तं चित्तमृषेरिव।।**

**इदमीदृग्गुणोपेतं लब्धावसरसाधनम्।**

**व्याकुर्यात्कः प्रियं वाक्यं यो वक्ता नेदृगाशयः।।**[11]

इत्थं महाकविभारविः न केवलं स्वीयायाः पदशय्यायाः आदर्शमेव प्रास्तौत् प्रत्युत समग्रेऽपि प्रबन्धे तदनुकरणमपि कुरुते। साम्प्रतमहं राजशेखरानन्दवर्धनानुमतं पदप्रयोगवैशिष्ट्यं विविधोदाहरणैः प्रस्तौमि-

सुब्बृत्तिप्रयोगः-

राजशेखरस्य मन्तव्यं वर्तते यद्दाक्षिणात्याः सुब्बृत्तिप्रियाः भवन्ति- **'दयितसुब्बृत्तयो विदर्भाः।'** विदर्भदेशीयस्य भारवेः किरातार्जुनीय एतादृशान्युदाहरणानि प्राप्यन्ते येन कथनस्यास्यौचित्यं सिद्ध्यति। यथा-

**उपकारकमायतेर्भृशं प्रसवः कर्मफलस्य भूरिणः।**
**अनपायि निबर्हणं द्विषां न तितिक्षासममस्ति साधनम्।।**[12]

प्रायशोऽत्र सुबन्तपदानामेव प्रयोगो दृश्यते। अस्तिक्रिया त्वन्यथासिद्धैव प्रतीयते। एवमेव-

10. तत्रैव- 14/3
11. किरात- 11/38-41
12. तत्रैव- 2/43

**विजित्य यः प्राज्यमयच्छदुत्तरान्कुरूनकुप्यं वसु वासवोपमः।**
**स वल्कवासांसि तवाधुनाहरन्करोति मन्युं न कथं धनंजयः।।**[13]

य उत्तरकुरून् विजित्य भवते प्रभूतधनमदात् अधुना स धनञ्जयः वल्कवासांसि धारयति। अत्र धनं जयतीति धनञ्जयः अर्जुनपर्यायप्रयोगः सर्वथा प्रासङ्गिको वर्तते।

कविरसौ महाकाव्येऽस्मिन् बाहुल्येन युग्मक-रून्दानितक-कुलक-कलापादीनां प्रयोगं कुरुते। यत्र क्रियापदस्य चरमे श्लोके एव प्रयोगो भवति। अनेनापि सिद्ध्यति यन्महाकवेः क्रियापदप्रयोगापेक्षया सुब्वृत्तेः प्रयोगोऽभीष्टः।

**समासवृत्तिप्रयोगः-**

महाकविभारविः प्रसङ्गानुकूलं समासवृत्तेः प्रयोगं कुरुते। चतुर्दशसर्गादारभ्य अष्टादशसर्गं यावत् युद्धविषयकं वर्णनं परित्यज्य सर्वत्राप्यल्पसमासा-मध्यमसमासयोरेव प्रयोगो विहितः। दरीदृश्यते। आनन्दवर्धनों भणति- **'सर्वासु सङ्घटनासु प्रसादाख्यो गुणो व्यापी। स हि सर्वरससाधारणः** सर्वसङ्घटनासाधारणश्चेत्युक्तम्।'[14] वीररसप्रधानेऽस्मिन् महाकाव्ये युद्धप्रसङ्गे एवोद्धतरचना दृश्यते अन्यत्र त्वसमासामध्यमसमासयोः निबद्धा प्रसादगुणयुक्ता रचना सहृदयहृदयाहारिणी वर्तते। असमासारचनाया उदाहरणं यथा-

**सहसा विदधीत न क्रियामविवेकः परमापदां पदम्।**
**वृणुते हि विमृश्यकारिणं गुणलुब्धा स्वयमेव सम्पदः।।**[15]

**प्रियेण सिक्ता चरमं विपक्षतश्चुकोप काचिन्न तुतोष सान्त्वनैः।**
**जनस्य रूढप्रणयस्य चेतसः किमप्यमर्षोऽनुनये भृशायते।।**[16]

---

13. तत्रैव- 1/35
14. ध्वन्यावलोकः- 3 उद्योतः,पृ. 351
15. किरात- 2/330
16. तत्रैव- 8/54

श्लोकेऽस्मिन् सर्वाण्यपि पदानि पृथक्तया रचितानि। अथ पठनवेलायामेव झटित्यर्थावगमः जायते। कथनोपकथने गढातिगूढमप्यभिप्रायं कियत्या सरलरीत्या भारविः प्रतिपादयति येनानायासेनैव स्मृतिपथमधि गच्छति–

**विहाय शान्तिं नृप धाम तत्पुनः प्रसीद संधेहि वधाय विद्विषाम्।**
**व्रजन्ति शत्रूनवधूय निःस्पृहाः शमेन सिद्धिं मनुयो न भूभृतः।।**[17]

एवमेव–

**कान्तानां कृतपुलकः स्तनाङ्गरागे वक्त्रेषु च्युततिलकेषु मौक्तिकाभः।**
**सम्पेदे श्रमसलिलोद्गमो विभूषा रम्याणां विकृतिरपि श्रियं तनोति।।**[18]

मध्यमसमासा–

**मानिनीजनविलोचनपातानुष्णबाष्पकलुषान्प्रतिगृह्णन्।**
**मन्दमन्दमुदितः प्रययौ खं भीतभीत इव शीतमयूखः।।**[19]

**यमनियमकृशीकृतस्थिराङ्गः परिददृशे विधृतायुधः स ताभिः।**
**अनुपमशमदीप्ततागरीयान्कृतपदपङ्क्तिरथर्वणेव वेदः।।**[20]

दीर्घसमासा–

युद्धप्रसङ्गेऽनुष्टुब्छन्दसि वद्धापि रचनोद्धता वर्तते–

**स्फुरत्पिशङ्गमौर्वीकं धुनानः स बृहद्धनुः।**
**धृतोल्कानलयोगेन तुल्यमंशुमता बभौ।।**[21]

विकटसमासा रचनापि दर्शनीया वर्तते–

**व्रणमुखच्युतशोणितशीकर- स्थगितशैलतटाभभुजान्तरः।**
**अभिनवौषसरागभृता बभौ जलधरेण समान उमापतिः।।**[22]

---

17. तत्रैव- 1/42
18. किरात- 7/5
19. तत्रैव- 9//26
20. तत्रैव- 10/10
21. तत्रैव- 15/39
22. तत्रैव- 18/4

**प्रववृतेऽथ महाहवमल्लयोरचलसंचलनाहरणो रणः।**
**करणशृङ्खलसंकलनागुरुर्गुरुभुजायुधागर्वितयोस्तयोः।।**[23]

इत्थं महाकविना यथाप्रसङ्गं प्रसादगुणयुक्ता विकटरचना प्रयुक्ता।

**तद्धितवृत्तिप्रयोगः-**

धातुमतिरिच्य प्रातिपदिकाद्विहिता सुब्भिन्नप्रत्ययाः तद्धितसंज्ञकाः भवन्ति। महाकविरसौ तद्धितान्तपदानामपि नवान् आकर्षकांश्च प्रयोगान् कुरुते प्रथमे श्लोके एव 'वर्णिलिङ्गी' पदप्रयोगः कियद्युक्तियुक्तं वर्तते। वर्णः प्रशस्तिः स्मरणाद्यष्टविधमैथुनाभावः अस्यास्तीति वर्णी ब्रह्मचारी 'वर्णाद्ब्रह्मचारिणि'[24] इत्यनेन इन्प्रत्ययः, वर्णिनः लिङ्गं चिह्नमस्यास्तीति वर्णिलिङ्गी ब्रह्मचारिवेशवानित्यर्थः। एवमेव द्वितीयसर्गे-

**परिणामसुखे गरीयसि व्यथकेऽस्मिन्वचसि क्षतौजसाम्।**
**अतिवीर्यवतीव भेषजे बहुरल्पीयसि दृश्यते गुणः।।**[25]

अत्र 'गरीयसि अल्पीयसि' पदयोः प्रयोगः कियत्सापेक्षिको वर्तते। अयमनयोरतिशयेन गुरुः अल्पश्च तस्मिन् गुरु-अल्पशब्दयोः पृथक्-पृथक् **'द्विवचनविभज्योपपदेतरबीयसुनौ'**[26] इत्यनेन इयसुन् प्रत्ययो भवति। मतुबर्थस्य प्रयोगः दर्शनीयः **'अभिमानवतो मनस्विनः प्रियमुच्चैः पदमारुरुक्षतः।'**[27] अत्र अभिमानमस्त्यस्य तस्य इत्यर्थे शोभनं मनः अस्त्यस्य 'तदस्यास्तस्मिन्निति मतुप्'[28] इत्यनेन मतुब्प्रत्ययो भवति। एवमेव **'भवन्ति मायाविषु येन मायिनः'** पदांशेऽस्मिन् मतुबर्थीयस्य **'अस्मायामेधास्रजो विनि'**[29] इत्यनेन 'विनि' अथ ब्रीह्यादिगणे पठितत्वात् इन्प्रत्ययेन कियती श्रुतिसुखदा पदावली निर्मिता। सप्तदशसर्गे **'गाण्डीवी कनकशिलानिभं**

23. किरात- 18/8
24. पा.अ. 4/2/134
25. किरात- 2/4
26. पा.अ. 5/3/57
27. किरात- 2/13
28. पा.अ. 5/2/94
29. तत्रैव- 5/2/121

**भुजाभ्यामाजघ्नेविषम-विलोचनस्य वक्षः।'**[30] अत्र गाण्डीवमस्त्यस्य इत्यर्थे इन् प्रत्ययो भवति येन अर्जुनस्यावबोधः सञ्जायते। **'इमामहं वेद न तावकीं धियं विचित्ररूपाः खलु चित्तवृत्तयः'।**[31] अत्र तावकीमित्र तव इमां तावकीमित्यर्थे **'तस्येदम्'**[32] इत्यनेन अण्प्रत्ययः 'तवकममकावेकवचने'[33] इति तवकादेशे **'टिड्ढाणञ्...'**[34] इति ङीप्प्रत्ययेन सार्वनामिकविशेषणस्य रूपं निष्पद्यते। 'रोचिष्णुरत्नावलिभिर्विद्यमानैर्द्यौ- राचितातारकितेव रेजे।'[35] अत्र तारकाः सञ्जाता अस्य तारकति नभः,तारकाशब्दात् 'तदस्य संजातं तारकादिभ्य इतच्'[36] इत्यनेन इतच्प्रत्ययेन रूपमिदं निष्पद्यते।

**कृद्वृत्तिप्रयोगः-**

पाणिनिमते धात्वधिकारे विहिताः तिङ्भिन्नप्रत्ययाः कृत्संज्ञकाः भवन्ति-**'कृदतिङ्'**[37] अत्र वञ्चितुं योग्याः **'वञ्चनीयाः'** **'तव्यत्तव्यानीयरः'**[38] इत्यनेन कर्मणि 'अनीयर्' प्रत्ययो भूत्वा निष्पद्यते। पदप्रयोगोऽयं यथोच्चारणे तथैव भावावबोधनेऽपि सौकर्यं विदधाति। एवमेव शतृप्रत्ययान्तप्रयोगः दर्शनीयः- **'अनुपालयतामुदेष्यतीं प्रभुशक्तिं द्विषतामनीहया।'**[39] पूर्वार्धे। अत्र अनूपसर्गपूर्वाच्चुरादिगणीयात् पालरक्षणे लटः स्थाने**'लटः शतृशानचावप्रथमासमानाधिकरणे'**[40] इत्यनेन शत्रादेशे अनुपालयत्प्राति-पदिकत्वात् षष्ठीबहुवचने सुबन्तवद्रूपमनुपालयताम्, अथ च उदुपसर्गादिण्गतौ

---

30. किरात- 17/63
31. तत्रैव- 1/37
32. पा.अ. 5/3/120
33. तत्रैव- 4/3/3
34. तत्रैव- 4/1/15
35. किरात- 18/18 उत्तरार्धः
36. पा.अ. 5/2/36
37. तत्रैव- 3/1/93
38. किरात- 1/4
39. पा.अ.3/1/96
40. किरात- 2/10 पूर्वार्धः

लिटि **'तौ सत्'**[41] इत्यनेन धातोः शत्रादेशे स्यादेशे स्त्रीत्वविवक्षायां ङीप् उदेष्यती ततश्च द्वितीया द्विवचने उदेष्यतीमिति रूपद्वयं सिद्ध्यति।

इत्थमेव **'निपीयमानस्तवकाशिलीमुखैः'**[42] अथ परिमोहयमाणेन शिक्षालाघवलीलया।'[43] इत्यत्र शानच्प्रत्ययस्य प्रयोगो वर्तते। 'क्त'प्रत्ययस्य एकस्मिन्नेव श्लोके बाहुल्येन कियद्रुचिरं प्रयोगं कुरुते महाकविरिति दर्शनीयम्-

**स्फुटता न पदैरपाकृता न च न स्वीकृतमर्थगौरवम्।**
**रचिता पृथगर्थता गिरां न च सामर्थ्यमपोहितं क्वचित्।।**[44]

अन्योऽपि क्तान्तपदस्य कर्णपेय प्रयोगो दर्शनीयः- 'प्रचलिते चलितं स्थितमास्थिते विनमिते नतमुन्नतमुन्नतौ।'[45]

**तिङ्वृत्तिप्रयोगः-**

महाकविभारवेः तिङ्वृत्तिप्रयोगः नितरामाकर्षकोऽस्ति।एकैकस्मिन् पद्ये तिस्रः चतस्रः अपि क्रिया प्रयुक्ताः सन्ति-

**जहीहि कोपं दयितोऽनुगम्यतां पुरानुशेते तव चञ्चलं मनः।**
**इति प्रियं कांचिदुपैतुमिच्छतीं पुरोऽनुनिन्ये निपुणः सखीजनः।।**[46]

एवमेव

**भवन्ति ते सभ्यतमा विपश्चितां मनोगतं वाचि निवेशयन्ति ये।**
**नयन्ति तेष्वप्युपपन्ननैपुणा गम्भीरमर्थं कतिचित्प्रकाशताम्।।**[47]

---

41. पा.अ. 3//124
42. तत्रैव- 3/2/124
43. किरात- 8/6
44. तत्रैव- 15, 36
45. तत्रैव- 2/27
46. तत्रैव- 18/10
47. तत्रैव- 8/8

एतदतिरिक्तं लिट्लकारस्य प्रयोगे तु कवेः पदप्रयोगस्य सौन्दर्यं परिस्फुरति- **'न विव्यथे तस्य मनो नहि प्रियं प्रवक्तुमिच्छन्ति मृषा हितैषिणः।'**[48] अत्र **'विव्यथे'** पदम् अथ चोपर्युक्तेषु पद्येषु **'जहीहि 'उपरराम' 'अनुनिन्ये'** पदानि कियन्ति कोमलानि सन्ति। एकत्र तु कविरसौ एकस्मिन्न पद्ये त्रिः लिट्लकारस्यप्रयोगं कृतवान्-

**सजलजलधरं नभो विरेजे विवृतिमियाय रुचिस्तडिल्लतानाम्।**
**व्यवहितरतिविग्रहैर्वितेने जलगुरुमभिः स्तनितैर्दिगन्तरेषु॥**[49]

एवमेव 'विकाशमीयुर्जगतीशमार्गणा'[50] 'घनं विदार्यार्जुनबाणपूगं ससारबाणेऽयुगलोचनस्य।'[51] ससारबाणोऽयुगलोचनस्य।'[52] इत्यादीनि यमकालङ्कारस्योदाहरणानि विद्यन्ते।

इत्थं महाकविभारवेः पदरचना प्रसादगुणयुक्ता प्रसङ्गानुकूला असमासा-मध्यमसमासादीर्घसमासेति संघटनात्रयसमन्विता वर्तते, फलतः अस्यापि पदशय्या वैदर्भीरीतिसमन्वितैव स्वीकृता वर्तते। महाकविः भारविः जानाति स्म यत्कविषु काव्याशास्त्रिषु च काव्यगतशब्दार्थयोः प्राधान्यमधिकृत्य विभेदो वर्तते।[53] अतएवासौ अर्थगौरवस्य महत्त्वं ददानोऽपि कथमपि शब्दसौष्ठवं विजहाति। किरातार्जुनीयमहाकाव्यस्य इदमेव वैशिष्ट्यं वर्तते यदत्र प्रसङ्गानुकूलायाः पदशय्यायाः प्रयोगः कृतो वर्तते।

---

48. तत्रैव- 14/4
49. तत्रैव- 14/4
50. किरात- 10/19
51. तत्रैव- 5/9
52. तत्रैव- 5/7
53. तत्रैव- 15/52
54. तत्रैव- 15/50
55. स्तुवन्ति गुर्वीमभिधेयसम्पदं विशुद्धिमुक्तेरपरे विश्चितः।
    इति स्थितायां प्रतिपुरुषं रुचौ सुदुर्लभाः सर्वमनोरमा गिरः॥ तत्रैव-1.4.5

# शिशुपालवधे रीतिविचारः

डॉ. नवीनजसोला

बृहत्त्रयीमहाकाव्येषुमहाकविमाघविरचितस्य शिशुपालवधस्य स्थानमन्यतमं गण्यते।विंशतिसर्गात्मकंमहाकाव्यमिदम्। यथाकाव्यसाहित्ये- कालिदासउपमायाः प्रदर्शने, भारविरर्थगौरवाय, पदलालित्ये च दण्डीविदग्धतांभजतेतथैवमहाकविमाघः त्रयाणामेवगुणानांसमन्वयेवैदग्ध्यं धत्ते।तदुक्तम्-

**उपमाकालिदासस्य भारवरर्थगौरवम्।**
**दण्डिनः पदलालित्यंमाघेसन्ति त्रयोगुणाः।।**

प्रस्तुते शोधपत्रेऽतिरिच्य माघस्य निखिलंवैशिष्ट्यं रीतिवैशिष्ट्य-मेवप्रस्तूयतेसमासतः।रीत्यनुशीलनात् प्राक् कानामरीतिः? कथमियंका-व्यसौन्दर्यपुष्णाति? इतिजिज्ञासायामुच्यते यत् 'विशिष्टापदरचनारीतिः' इतिवामनाचार्यः रीतिंकाव्यात्मतत्वरूपेणसंस्थाप्य रीतिसम्प्रदायस्य प्रतिष्ठापकोऽभूत्।रीतिशब्दोऽयं व्याकरणे 'रीङ् स्रवणे' इत्यनेनक्तिन् प्रत्यये कृतेसतिनिष्पद्यते। यश्च गति-क्रम-मार्गादिष्वर्थेषुगृह्यते।अमरकोषे शब्दोऽयं 'प्रचारस्यन्दयोः रीतिः, रीतिस्त्रियामारकूटो न स्त्रियाम्।पुनः क्वापिरीतिः प्रचारेस्यन्दे च लौहकिट्टारकूटयोः' (3.3.68) इत्यर्थेस्वीकृतः।अथ च रीतेर्निर्वचनंबहुषुग्रन्थेषुकृतंवर्त्तते।दिङ्मात्रेण यथा-

**विदर्भादिकृतः पन्थाः काव्येमार्गइतिस्मृतः।**
**रीङ्गताविति धातोः साव्युत्पत्यारीतिरुच्यते।।**[1]

**पदसंघटनारीतिरङ्गसंस्थाविशेषवत्।**[2]

अत्रविश्वनाथः शब्दार्थशरीरस्य काव्यस्यात्मभूतानांरसादीनाम् उपकर्त्रीपद-संघटनारीतिरिति लक्षयति।

**सम्प्रति तत्र ये मार्गाः कविप्रस्थानहेतवः।**
**सुकुमारोविचित्रश्चमध्यमोश्चोभयात्मकाः।।**[3]

एवंकुन्तकाचार्येणरीत्यर्थमार्गशब्दः प्रयुज्यते। तच्चकविस्वभावविभेदत्वेनकाव्यमार्गभेदः समीचीनोभवति।

नाट्यशास्त्रेरीत्यर्थप्रवृत्तिशब्दः प्रयुक्तोऽस्ति। रसार्णवसुधाकरेऽपि-शिङ्गभूपालेनलिखितं यत्- 'तत्तद्देशोचिताभाषाक्रियावेशाप्रवृत्तयः' (रसा.सु.1.294)। अर्थात् देशोचितभाषाचारः वेशविन्यासश्चप्रवृत्तिः इतिशब्देनोच्यते।पररीतेः सम्बन्धः वचनविन्यासेनसहसंगच्छति। वामनोऽपिशब्दार्थरूपशरीरस्य विशिष्टसंघटनैवरीतिरिति-

स्वीकरोति।। तन्मतेरीतेराधारतत्त्वानि शब्दगुणाअर्थगुणाश्चसन्ति।

ध्वयालोकेचानन्दवर्धनः पदरचनारीतिंसङ्घटनेतिनाम्नाव्यवहरति। त्रिप्रकार-कासंघटनारसादीन् व्यनक्तिगुणानाश्रित्य तिष्ठन्तीतिप्रोक्तंहि-

**गुणानाश्रित्य तिष्ठन्तीमाधुर्यादीन् व्यनक्तिसा।**[4]

राजशेखरस्तुरीतीनाम् आनन्त्यदोषपरिहारंविधाय स्वकीयमतंप्रस्तौति-**'वचनविन्यासक्रमोरीतिः''**।[5] एवंरीतेः परिचयं संक्षेपेणप्रस्तूय तावत् शिशुपालवधे रीतिविचारः समासतः मयात्र क्रियते।वस्तुतः महाकाव्येऽस्मिन् पदे-पदेलालित्यम-वलोक्यते।**'मेघमाघेगतं वयः','क्षणे क्षणे यन्नवतामुपैतितदेव रूपंरमणीयतायाः'**। इत्यादयः सूक्तिमुक्ताः काव्यस्यास्यगरिमाणमेवसूचयन्ति। यद्यपि रसालङ्कारगुणादी-निकाव्यपोषकानितत्त्वानितथापिगुणानाश्रित्य तिष्ठन्तीरीतिरपिनोपेक्ष्या। तद्रीतेः प्रमुखानिउदाहरणानि यथाशिशुपालवधे-

**वैदर्भीरीतिः**-माधुर्यौजःप्रसादगुणोपेता, विदर्भदेशजन्यत्वादपिरीति-रियंवैदर्भीरीतिःकथ्यते। तद्यथा-**'समग्रगुणावैदर्भी' 'विदर्भादिषुदृष्टत्वात् तत् समाख्या'**।[6] वैदर्भीरीतिरुपनागरिकाऽपिप्रोक्ता। यथा- **"माधुर्यव्यञ्ज-कैवर्णैरुपनागरिकोच्यते।"**[7]असमासेनलघुसमासेन युक्तावैदर्भीरीतिभवति। श्रुतिकटुवर्णान्विहाय माधुर्यगुणव्यञ्जकवर्णाः वैदर्भ्याभवन्ति। यथैकादशसर्गेमा-लिनीच्छन्दसिप्रभातवर्णनम्-

विकचकमलगन्धैरन्धयन्भृङ्गमालाः
सुरभितमकरन्दंमन्दमावातिवातः।
प्रमदमदनमाद्यद्यौवनोद्दामरा-
मारमणरभसखेदस्वेदविच्छेददक्षः।।[8]

अपि च -

**प्रकटतरमिमंमाद्राक्षुरन्यारमण्यः**
**स्फुटमितिसविशङ्कंकान्तयातुल्यवर्णाः।**
**चरणतलसरोजाक्रान्तिसंक्रान्तयासौ**
**वपुषिनखविलेखो लक्षयारक्षितस्ते।।**[9]

**उदयशिखरिशृङ्गप्राङ्गणेष्वेषरिङ्गन्**
**सकलमुखविहासंवीक्षितः पद्मिनीभिः।**
**विततमृदुकराग्रः शब्दयन्त्यावयोभिः**
**परिपततिदिवाऽङ्केहेलयाबालसूर्यः।।**[10]

प्रथमपद्यस्यप्रथमपङ्क्तौतावत् गन्धैः, रन्धयन् भृङ्गादिशब्देषु-माधुर्यव्यञ्जक-वर्णेभ्यः श्रुतिसौन्दर्याच्चवैदर्भीरीतिः साक्षादेवप्रकटीभवति। द्वितीयपङ्क्तौमकरन्दमन्दैः, तृतीयेमदमदनमाद्यद्यौवनोद्दामादिओजोव्यञ्जकवर्णेभ्यः चतुर्थेपादे च 'स्वेदविच्छेददक्षेति' सामासिकयारचनयावैदर्भीरीतिः। एवमेकादशेवैदर्भ्याः बहूनिउदाहरणानि दृश्यन्ते।

**गौडीरीतिः**-यस्यांरचनायाम् ओजःकान्तिगुणौभवतः सौजः कान्तिमती-गौडीरीतिकथ्यते। उत्कटपदैरधिकसमासयुक्तेयंगौडीरीतिकथिता। इयंगौडीरीति-परुषावृत्तिरपिकथ्यते। यथाहिवामनाचार्यः-

**समस्तात्युद्भटपदामोजःकान्तिगुणान्वितम्।**
**गौडीयामितिगायन्तिरीतिंरीतिविचक्षणाः॥**[11]

अस्योदाहरणानि द्वादशेसर्गेनैकानिप्राप्यन्ते। दिङ्मात्रं यथा-

**उत्थातुमिच्छन्विधृतः पुरोबलान्निधीय-मानेभरभाजि यन्त्रके।**
**अर्धोज्झितोद्गारविझर्झरस्वरः स्वनामनिन्येरवणः स्फुटार्थताम्॥**[12]

**भित्त्वा घोणामायसेनाधिवक्षः स्थूरीपृष्ठोगार्ध्रपक्षेण विद्धः।**
**शिक्षाहेतोर्गाढ़रज्ज्वेव बद्धो हर्त्तुं वक्त्रंनाशकद् दुर्मुखोऽपि॥**[13]

विंशसर्गेऽपिसमासबहुलपद्यानांरचनाबाहुल्यात् गौडीरीतिः द्रष्टुं शक्यते। तद्यथा-

**तिकुञ्चितकूर्परेणतेनश्रवणोपान्तिकनीयमानगव्यम्।**
**ध्वनति स्म धनुर्घनान्तमत्तप्रचुरक्रौञ्चरवानुकारमुच्चैः॥**[14]

अत्र हिप्रथमतृतीयपङ्क्त्योः ओजोगुणाभिव्यञ्जकवर्णैः गौडीस्पष्टा एव।**पाञ्चालीरीतिः**- यत्र वैदर्भीगौड्योः समन्वयः माधुर्यसौकुमार्ययोः च समन्वयः दृश्यतेतत्र पाञ्चालीरीतिः मन्तव्येतिकाव्यशास्त्रिणांमतम्।प्रोक्तंहि- **'माधुर्यसौकुमार्योप-पन्नापाञ्चाली'**।[15] माधुर्येणसौकुमार्येण च गुणेनोपपन्नापाञ्चालीरीतिःकथिता। पाञ्चालीरीरितिरयंकाव्यप्रकाशेवृत्तिवर्णनप्रसङ्गेकोमलेतिनाम्नाकथिता। पाञ्चालीतद्यथा षष्ठेसर्गेद्रुतविलम्बितपद्यमिदम्-

**'मुखसरोजरुचंमदपाटलामनुचकारचकोरदृशां यतः।**
**धृतनवातपमुत्सुकतामतोन कमलंकमलम्भयदम्भसि॥**[16]

अपि च -

सुरभिणी श्वसिते दधतस्तृषंनवसुधामधुरे च तवाधरे।

**अलमलेरिवगन्धरसावमूमम न सौमनसौमनसोमुदे॥**[17]

पाञ्चाल्या: प्रसिद्धमुदाहरणमेकं यथा-

**मधुरया मधुबोधितमाधवीमधुसमृद्धिसमेधितमेधया।**
**मधुकराङ्गनयामुहुरुन्मदध्वनिभृतानिभृताक्षरमुज्जगे॥**[18]

उदाहरणेऽस्मिन् रीतिमूलकानामोज: कान्तिगुणानांविद्यमानत्वात्माधुर्य-व्यञ्जकवर्णाच्चपाञ्चालीरीतिरिति।

अथ च ललितपद्यमिदमपि-

**गजकदम्बकमेचकमुच्चैकैनर्भसि वीक्ष्य नवाम्बुदमम्बरे।**
**अभिससार न वल्लभमङ्गना न चकमे च कमेकरसंरह:॥**[19]

पद्येऽस्मिन् माधुर्यसुकुमारगुणानांमिश्रबन्धत्वेनपाञ्चालीरीति: संलक्ष्यते।

**निष्कर्ष:**

एवंप्रकारेणमाघविरचितेऽस्मिन् शिशुपालवधमहाकाव्येरीति- तत्त्वानामनु-शीलनात् ज्ञायते यदत्र वैदर्भीगौडीपाञ्चाली च तिसृणांरीतीनांसमन्वययुक्तानि-पद्यानिसन्तिवस्तुत: कविरयंगुणत्रयंविधत्ते। तत्र क्वचित् माधुर्योपेतानिक्वचित् ओजोगुणसमवेतानिक्वचिच्च्प्रसादगुणोपेतानिपद्यानिबहूनिसन्ति। समासबहुलपद्यानांदर्शनं द्वादशसर्गेअष्टादशे च भवतिअतस्तत्र गौडीरीतियुक्तानिपद्यानिसन्ति। पाञ्चालीरीत्यनु-शीलनेऽपिसकल: षष्ठसर्ग: द्रुतविलम्बितच्छन्दसि रमणीय: इति।

1. स.कण्ठा. 2.27
2. सा.द.9.1
3. व.जी.1.24
4. ध्वन्या.3.5
5. का.मी.3
6. का.सू.1.2.11
7. का. प्र. 9.108
8. शिशु.व.11.19
9. शि. व. - 11.32
10. शि. व. - 11.47
11. का.सू.1.12
12. शिशु.व.12.9
13. शि. व. - 18.22
14. शि. व. - 20-19
15. का.सू.-1.2.13
16. शिशु.व.6.48
17. शि. व. - 6.12
18. शिशु.व.6.20
19. शिशु.व.6.26

# शिशुपालवधमहाकाव्ये अलङ्कारध्वनिः

आचार्यरमेशचतुर्वेदः

आचार्यानन्दवर्धनेन ध्वन्यालोकसंज्ञकग्रन्थविशेषस्य रचनां विधाय काव्यसमालोचनाक्षेत्रे नूतनः पन्थाः प्रदर्शितस्तेन हि काव्यात्मरूपेण ध्वनिरिति संज्ञितस्तत्त्वविशेषो विमृष्टस्तथा च शब्दस्य वाचकत्वलाक्षणिकत्वाभ्यां भिन्नं व्यञ्जकत्वं नूतनं तृतीयं विशेषणं निर्दिशता तेन हि शबदस्यार्थादिकस्य च व्यञ्जनाख्यो व्यापारविशेषो विवेचितस्ततो हि भरतभामहादिभिः प्रकाशितानाम् उपमाप्रभृतीनामलङ्काराणां व्यङ्ग्यत्वमपि विचारपथे समायातम्। यत्र काव्ये व्यङ्ग्यानामलङ्काराणां वाच्यापेक्षया चमत्कारविशेषः प्राधान्यं वा प्रतीयेत तत्र ह्यलङ्कारध्वनेः सत्ता आनन्दवर्धनाचार्येण प्रतिपादिता ऽस्ति। सोऽयम् अलङ्कारध्वनिः शब्दशक्तिमूलः, अर्थशक्तिमूलः, उभयशक्तिमूलश्चेति त्रिधा विवेचितस्तथाचायं त्रिविधोऽपि अलङ्कारध्वनिः संलक्ष्यक्रमनाम्ना विवक्षितान्यपरवाच्य इति नाम्ना च निर्दिष्टः। उभयशक्तिमूलोऽलङ्कारध्वनिस्तु वाक्यग एव भवति तथा शब्दशक्तिमूलो पदे वाक्ये च भवत्येवञ्चार्थशक्तिमूलोऽलङ्कारध्वनिः पदे वाक्ये प्रबन्धे च भवति। अर्थशक्तिमूलोऽलङ्कारध्वनिस्तु व्यञ्जकार्थविशेषतां समाश्रित्य वस्तुना अलङ्कारध्वनिस्तथा अलङ्कारेणालङ्कारध्वनिरिति द्विधा विवेचितस्तथाहि तस्य व्यञ्जकवस्तुनोऽलङ्कारविशेषस्यापि स्वतः संभवित्वं प्रौढोक्तिनिष्पन्नञ्चाश्रित्य द्विविधत्वं निर्दिष्टम्। इत्थं हि ध्वन्यालोके यो हि अलङ्कारध्वनेर्विस्तारो विवेचितस्तमाश्रित्य मल्लिनाथादिभिः शिशुपालवधमहाकाव्यटीकाविरचनावसरे तत्र महाकाव्ये विलसितस्यालङ्कारध्वनिप्रपञ्चस्य विचारः प्रकाशितस्तेषां शिशुपालवधमहाकाव्यटीकाराणां विशेषतो मल्लिनाथमहोदयस्य मतं समाश्रित्य शिशुपालमहाकाव्ये ह्यलङ्कारध्वनेः सद्भावो विमृश्यते। विशिष्टप्रतिमाजुषा कविशिरोमणिना माघेन विरचिते विंशति सर्गात्मके शिशुपालवधमहाकाव्ये श्रीमदानन्दवर्धनाचार्यप्रस्तुतस्य अलङ्कारध्वनि-

प्रपञ्चस्य सुविलासो विराजतेऽत एव ध्वन्यालोककार आनन्दवर्धनाचार्यस्य ग्रन्थेऽलङ्कारध्वनिववेचनावसरे उत्प्रेक्षालङ्कारध्वनिं श्लेषालङ्कारध्वनिञ्च प्रतिपादयता शिशुपालवधमहाकाव्यस्य निम्नलिखितं श्लोकद्वयं समुदाहृतवान्–

**(क) त्रासाकुलः परिपतत्परितो निकेता-**
**न्पुंभिर्न कैश्चिदपि धन्विभिरन्वगन्धि।**
**तस्थौ तथापि न मृगः क्वचिदङ्गनाभि-**
**राकर्णपूर्णनयनेषुहतेक्षणश्रीः॥[1]**

**(ख) रम्या इति प्राप्तवतीः पताकाः**
**कामं विविक्ता इति वर्धयन्तीः।**
**यस्यामसेवन्त नमद्वलीकाः**
**समं वधूभिर्वलभीर्युवानः॥[2]**

मम्मटाचार्यादिभिः काव्यशास्त्रिभिर्महाकविमाघरचितानि पद्यानि स्वग्रन्थेषु विविधालङ्कारविच्छितिविवेचनावसरे समुदाहृतानि तथा च मल्लिनाथादिभिष्टीकाकारैस्तु शिशुपालवधमहाकाव्यस्य टीकासु सप्रपञ्चं महाकाव्येऽस्मिन् अलङ्कारध्वनिसद्भावो विहितः। विंशतिसर्गात्मके पञ्चचत्वारिंशदधिकत्रयोदशशतपद्यैर्विरचितेऽस्मिन् महाकाव्ये शताधिकपद्येषु मल्लिनाथेन विभिन्नानां व्यङ्ग्यालङ्काराणां गुणीभूतत्वं ध्वनित्वञ्च विवेचितमस्ति। एतेषां मनीषिणां शिशुपालवधविवेचनं समाश्रित्य तत्रस्थस्यालङ्कारध्वनेश्च चर्चा सर्गक्रमेणात्र प्रस्तूयते।

श्रीमता माघेनोपमाप्रयोगे महाकविकालिदासस्यानुकरणं कृतम्। यथाहि कालिदास इन्दुमतीविषये निर्दिष्टां दीपशिखाया उपमामाश्रित्य दीपशिखाकालिदास इति ख्यातस्तथैव माघेन रैवतकपर्वतविषये प्रोक्तम्–

**"वहति गिरिरयं विलम्बिघण्टाद्वयपरिवारितवारणेन्द्रलीलाम्।"**

अनेनोपमाप्रयोगेण तस्य नाम 'घण्टामाघः' इति ख्यातम्। इदं पद्यं मम्मटाचार्यः काव्यप्रकाशे समुदाहृतवान्।[3] एवं हि काव्यस्यास्यालङ्कारविलासो विख्यातः।

1. द्रष्टव्यम् – ध्वन्यलोकस्य द्वितीयो द्योते 140 पृष्ठे, तथा शिशुपालवधे 5/26
2. द्रष्टव्यम् – ध्वन्यलोकस्य द्वितीयो द्योते 140 पृष्ठे, तथा शिशुपालवधे 3/53
3. द्रष्टव्यम् – काव्यप्रकाशे 10/17 कारिकायाम् 436 पद्यम् तथा शिशुपालवधे 5/20

**शिशुपालवधप्रथमसर्गेऽलङ्कारध्वनिः—**

माघकविना शिशुपालवधमहाकाव्यस्य प्रथमसर्गस्यारम्भे द्वारिकायां वसुदेवसद्मनि स्थितेन श्रीकृष्णेनाकाशादवतरतो मुनिनारदस्य दर्शनं कृतमिति वर्णितं तत्र द्वितीयपद्ये व्यतिरेकालङ्कारविच्छितिर्विभावनीया।

**गतं तिरञ्चीनमनूरुसारथेः प्रसिद्धमूर्ध्वज्वलनं हविर्भुजः।**
**पतत्यधो धाम विसारि सर्वतः किमेतदित्याकुलमीक्षितं जनैः॥**

अत्र पद्ये मुनिधाम्नो विस्मयकरत्वं वर्णितं तथा च सूर्याग्निभ्यां सह मित्रत्वं निर्दिष्टमतो हि वस्तुना व्यतिरकालङ्कारध्वनिर्मन्तव्यः। अस्य पद्यस्य व्याख्यानावसरे मल्लिनाथेन विलिखितम्—"अत्रोपमेयस्य मुनिधाम्नः सूर्याग्निभ्यामुपमानाभ्यामधःप्रसरणधर्मेणाधिक्यवर्णनाद् व्यतिरेकः। तदुक्तं काव्यप्रकाशे—उपमानादुपमेयस्य व्यतिरेकः स एव सः[1]। इति। एवं हि मल्लिनाथमतानुसारं व्यतिरेकालङ्कारस्य विच्छित्तिस्तु पद्येऽस्मिन् विराजते तस्य व्यङ्ग्यत्वं ध्वनित्वञ्च यद्यपि निर्दिष्टे न स्तः। इतः परं दशम-पद्यस्य व्याख्यानावसरे तेन अलङ्कारेणालङ्कारध्वनिरिति निर्देशः कृतोऽस्ति। तत्र प्रथमसर्गे दशमं पद्यमित्त्थं विद्यते—

**रणद्भिराघट्टनया नभस्वतः पृथग्विभिन्नश्रुतिमण्डलैः स्वरैः।**
**स्फुटीभवद्ग्रामविशेषमूर्च्छनामवेक्षमाणं महतीं मुहुर्मुहुः॥**

अस्मिन् पद्ये महतीनामिकायाः नारदवीणायाः पवनसम्पर्कवशात् स्वरग्राममूर्छनानां स्फुटीभवनं वर्णितं तस्य विवेचनं विदधता मल्लिनाथेन स्पष्टतया स्वतः संभविनाऽलङ्कारेणालङ्कारध्वनिरत्र राजते इति चर्चितम्। तेन विलिखितम्—

**अत्र पुंव्यापारमन्तरेण स्वराद्याविर्भावोक्त्या कोऽपि लोकातिक्रान्तोऽयं शिल्पसौष्ठवातिशयो वीणायाः प्रतीयते तेन सह स्वतः प्रसिद्धस्यातिशयस्याभेदेनाध्यसितत्वात्तन्मूलातिशयोक्तिः। सा च पुंव्यापारं विना मूर्च्छाद्यसम्बन्धेऽपि सम्बन्धामिनादसम्बन्धे सम्बन्ध-**

---

1. शि.पा.व.म.का. 1/2 श्लोकस्य मल्लिकानाथटीका—

**रूपतया पुंव्यापाररूपकारणं विनापि मूर्च्छनादिकार्योत्पत्तिद्योतनाद् विभावना व्यज्यते इत्यलङ्कारध्वनिरिति संक्षेपः।"**[1]

वस्तुतस्तु मल्लिनाथोक्तिरेषा सर्वसुधीजनसहमतिं भजते। अत्र वाक्यगः स्वतःसम्भविनाऽलङ्कारेणालङ्कारध्वनिसंज्ञकः अर्थशक्तिमूलो ध्वनिर्विराजते। महाकाव्यस्यास्य प्रथमसर्गे त्रयोविंशे पद्ये अर्थशक्तिमूलः कविप्रौढ़ोक्तिसिद्धेनालङ्कारेणालङ्कारध्वनिः प्रतिपद्यते। तत्र नारददर्शनजन्यमुदो जगन्निवासभूतस्य श्रीकृष्णस्य हृदये नैव ममुरिति वर्णयता माघेन विलिखितम्–

**युगान्तकालप्रतिसंहृतात्मनो जगन्ति यस्यां सविकासमासत्।**
**तनौ ममुस्तत्र न कैटभद्विषस्तपोधनाभ्यागमसंभवा मुदः॥**

अस्य पद्यस्य व्याख्याने मल्लिनाथेन विलिखितम्–

"चतुर्दशभुवनभरणपर्याये वपुषि (मुदः) अन्तर्न मान्तीति कविप्रौदोक्तिसिद्धातिशयेन स्वतः सिद्धस्याभेदेनाध्यवसिताऽतिशयोक्तिः, सा च मुदामन्तःसम्बन्धेऽप्यसम्बन्धोक्त्या सम्बन्धासम्बन्धरूपा।"[2]

इत्थं हि मल्लिनाथः स्पष्टशब्दैः कविप्रौढ़ोक्तिसिद्धेनालङ्कारेणा-लङ्कारध्वनिं पद्येऽस्मिन् प्रतिपादितवान्। अस्मिन्नेव सर्गे शब्दशक्त्युभवस्य अलङ्कारध्वनेश्चमत्कारो द्वात्रिंशत्तमे पद्ये विलसति। तत्पद्यमित्थं विद्यते–

**उदीर्णरागप्रतिरोधकं जनैरभीक्ष्णमक्षुण्णतयाऽतिदुर्गमम्।**
**उपेदुषो मोक्षपथं मनस्विनस्त्वमग्रभूमिनिरपायसंश्रया॥**

अत्र पद्ये चौरजनव्याप्ते दुर्गमे सज्जनान्तरैरक्षुण्णे वनमार्गे गतस्य व्यापारिणस्तुलना दुर्गममोक्षपथगामिनो भगवद्भक्तेन सह कृता तथा च श्रीकृष्णे तस्य लयो वर्णितोऽस्ति। अत्र पद्ये "प्रतिरोधक' शब्दत्वे नानार्थको विद्यते। तत्रामरकोशे विनिर्दिष्टम् "प्रतिरोधिपरास्कन्दिपाटच्चरमलिमुचाः।" अस्यानेकार्थस्य शब्दस्य प्रतिरोधिरूपोऽर्थस्तु मोक्षपथस्य वर्णने संगच्छते तदनुसारं मल्लिनाथेन व्याख्यातम्" उदीर्ण उद्रिक्तो रागो विषयाभिलाषः,

---

1. शि.पा.व.म.का. 1/10 श्लोकस्य मल्लिकानाथटीका–
2. द्रष्टव्यम् – शि.पा.व.म.का. 1/23 पद्यस्य मल्लिनाथीयं व्याख्यानम्

स एव प्रतिरोधकः प्रतिबन्धकः पाटच्चरश्च यस्मिन्निति। अनेन सहात्र पाटच्चररूपोऽर्थोऽपि चर्चितस्तस्य संगतिर्दुर्गभवनमार्गविषये भवति। एवमेव अग्रभूमिशब्दस्यार्थः प्राप्यस्थानमिति मोक्षार्थिनो विषये संगच्छते आश्रयस्थान-मित्यर्थस्तु दुर्गमननमार्गप्रवृत्तस्य जनस्य विषये संगच्छते एवमेव **निरपायसंश्रया** इति शब्दस्यार्थः निरपायः पुनर्जन्मरहितः संश्रयः प्राप्तिः यस्याः सा तथोक्तेति मोक्षार्थिनो विषये संगच्छते तथा च दुर्गभवनमार्गप्रवृत्तस्य जनस्य विषये त्वस्य शब्दस्यार्थो बहिर्निर्गमनरहिते यावज्जीवनं तत्राश्रय इति विज्ञायते। जनैरभीक्ष्णमक्षुण्णतयाऽतिदुर्गमम्" इति विशेषणन्तूभयत्र सरलया योजयितुं शक्यते। परन्तु पाटच्चरार्थकस्य प्रतिरोधकशब्दस्य तथाच बहिर्निर्गमना-भावरूपप्रतिपादकस्य "निरपाय" शब्दस्य नानार्थकता विशेषरूपेण दुर्गभवनमार्गप्रवृत्तजनस्योपमां व्यञ्जयति।

अत्र पद्ये 'प्रतिरोधक' शब्दस्तथा च **'निरपाय'** शब्दो नानार्थकतां भजते तेन हि मोक्षपथप्रवृत्तस्य जनस्य वर्णनेन सह पाटच्चरदुष्टजनव्याप्ते दुर्गमकान्तारे प्रविष्टस्य जनस्य वर्णनं ध्वन्यते। तस्य चोपमानता व्यञ्जनया बोध्यते ऽतएव पदगताः शब्दशक्तिमूलो ह्यलङ्कारध्वनिरत्र मन्तव्यः। मल्लिनाथेन विशेषविवेचनं विनाऽस्य पद्यस्य व्याख्याने ध्वनिमत्त्वमेभिः शब्दैः प्रकाशितम् "यथा कस्यचित्कुतश्चित्संकटान्निर्गतस्य केनचित्कान्तारेण गतस्य किञ्चिन्निर्बाधस्थानप्राप्तिरभयाय कल्पते तथा त्वमपि मुमुक्षोरिति ध्वनिः।"[1]

**द्वितीयसर्गेऽलङ्कारध्वनिः—**

शिशुपालवधमहाकाव्यस्य द्वितीयसर्गे माघेन नारदमुखात् दुष्टस्य शिशुपालस्य बध्यता वर्णिताऽस्ति। तत्रापि क्वचित्क्वचिदलङ्कारध्वनिः स्पष्टं विद्योतते। यथाहि सर्गान्तेऽष्टनवतितमं पद्यं विभावनीयम्—

> **"ये चान्ये कालयवनशाल्वरुक्मिद्रुमादयः।**
> **तमःस्वभावास्तेऽप्येनं प्रदोषमनुयायिनः॥"**

अत्र पद्ये दुष्टशिशुपालस्य विशेषणं 'प्रदोषम्' इति नानार्थकं विद्यते प्रकृष्टदोषकरः रात्रिप्रारम्भसमयश्चेति द्वावर्थौ विज्ञायेते तथैव

1. द्रष्टव्यम् – शिशुपालवधस्य प्रथम सर्गस्य 32 पद्यस्य मल्लिनाथीयं व्याख्यानम्

शिशुपालानुयायिनां कालयवनादीनां तमःस्वभावा इति विशेषणं तमोगुणवत्त्वं तथाचान्धकारस्वभावत्वं सूचयति। तेन हि प्रदोषकालस्य शिशुपालस्य चौपम्यं ध्वन्यते। अत्र पत्रे माल्लिनाथेन वस्तुनाऽलङ्कारध्वनिः परमृष्टः।[1]

**तृतीयसर्गेऽलङ्कारध्वनिसद्भावः**

शिशुपालवधस्य तृतीयसर्गस्य निम्नलिखितं द्वारिकापुरीवर्णनात्मकं पद्यं श्रीमदानन्दवर्धनाचार्येण श्लेषालङ्कारध्वनेरुदाहरणरूपेण प्रस्तुतम्–

**रम्या इति प्राप्तवतीः पताकाः रागं विविक्ता इति वर्धयन्तीः।**
**यस्यामसेवन्त नमद्वलीकाः समं वधूभिर्वलभीर्युवानः।।**[2]

यद्यपि ध्वनिकारेणानन्दवर्धनाचार्येण पद्यस्यास्य विवेचनं विदघता श्लेषालङ्कारध्वनेः सद्भाव एभिश्शब्दै प्रतिपादितः–

"अत्र वधूभिः सहवलभीरसेवन्तेति वाक्यार्थप्रतीतेरनन्तरं वध्व इव वलभ्य इति श्लेषप्रतीतिरशब्दाऽप्यर्थसामर्थ्यान्मुख्यत्वेन विवर्तते।[3] परन्तु मल्लिनाथेनान्यथा व्याख्यानं विदधता विलिखितम्–

"वधूभिः सममसेवन्त, वधूसहिता असेवन्तेत्यर्थः। अत्र वधूनां वलभीनाञ्च प्रकृतानामेव धर्मसाधर्म्येणौपम्योयोगात् केवलप्राकृतगोचरा तुल्ययोगिता, न श्लेषः। तत्र विशेष्यस्यापि श्लिष्टत्वनियमात्।"[4] इमं विचारमेव समाश्रित्य प्रथमसर्गस्थस्य "उदीर्णरागप्रतिरोधकम्–इत्यादि पद्ये मल्लिनाथेन श्लिष्टोपमा नैव चर्चिता। अस्माभिस्तु ध्वनिकारमतानुसारं तत्रोपमाध्वनिः श्लेषानुप्राणितोऽस्तीति विवेचितम्।

तत्र शिशुपालवधमहाकाव्यस्य तृतीयसर्गस्यान्ते स्थिते निम्नलिखिते पद्ये श्रीकृष्णसैनिकानां समुद्रविहितमातिथ्यं वर्णयता माघकविनाऽलङ्कारध्वनिः समावेशः कृतः–

---

1. द्रष्टव्यम् – तत्रैव 2/98 पद्यस्य मल्लिनाथीयं व्याख्यानम्।
2. द्रष्टव्यम् – ध्वन्यालोके द्वितीयाद्योते पृष्ठम् 140 तथा शिशुपालवधे 3/53 पद्यम्
3. द्रष्टव्यम् – ध्वन्यालोके द्वितीयाद्योते पृष्ठम् 141
4. द्रष्टव्यम् – शि.पा.व.म.का. 3/53 पद्यस्य मल्लिनाथीयं व्याख्यानम्

**"लवङ्गमालाकलितावतंसास्ते नारिकेलान्तरपः पिबन्तः।**
**आस्वादितार्द्रक्रमुकाः समुद्रादभ्यागतस्य प्रतिपत्तिमीयुः॥"**

अस्य पद्यस्य व्याख्याने श्रीमता मल्लिनाथेनालङ्कारध्वनिरित्थं प्रतिपादितः–"प्रतिपत्तिः पदप्राप्तौ प्रवृत्तौ गौरवेऽपि च।" इति विश्वः। अत्राभ्यागत–प्रतिपत्तिप्राप्तेर्विशेषणगत्या अवतंसकलनादिपदार्थहेतुत्वात् काव्यलिङ्गम्। तेन समुद्रचमूचराणां गृहस्थाभ्यागतौपम्यप्रतीतेरलङ्कारध्वनिः।[1]"

**चतुर्थसर्गेऽलङ्कारध्वनिविच्छित्तिः–**

शिशुपालवधमहाकाव्यस्य चतुर्थे सर्गे रैवतकपर्वतवर्णनं विराजते तस्योन्नततां वर्णयता श्रीकृष्णसारथिना प्रोक्तम्–

**"आच्छादितायतदिगम्बरमुच्चकैर्गा-**
**माक्रम्य संस्थितमुदग्रविशालशृङ्गम्।**
**मूर्ध्नि स्खलत्तुहिनदीधितिकोटिमेन-**
**मुद्वीक्ष्य को भुवि न विस्मयते नगेशम्।"[2]**

अत्र पद्ये प्राकरणिकार्थो रैवतकनामकस्य नगेशस्य पर्वतस्य विषये विज्ञायते तथा नगेशशब्दाभिधेयशिवस्य विषयेऽपि विशेषणपदानि संगच्छन्ते। तेन हेतुनाऽप्राकरणिकस्य शिवस्यापि प्रतीतिर्भवति। अस्य पद्यस्य व्याख्याना-वसरे मल्लिनाथेन तुल्ययोगितासमासोक्तिभ्यां सह श्लेषालङ्कारस्यापि वाच्यालङ्काररूपेण प्रतीतिर्निवारिता तथा चान्ते शब्दशक्तिसमुत्थशिवरूपस्या-प्राकरणिकस्यार्थस्य प्रतीतिर्भवतीति प्रकाशयितुं विलिखितम्– "तस्मात् प्राकरणिकार्थमात्रपर्यवसिताभिधाव्यापारेणापि शब्देनार्थान्तरधीकृद्ध्वनि-रित्याहुः।[3] अत्र पद्ये शब्दशक्तिसमुद्भवः श्लेषालङ्कारध्वनिः प्रतिपद्यते।

**पञ्चमसर्गेऽलङ्कारध्वनिविच्छित्तिः–**

महाकाव्यस्यास्य पञ्चमे सर्गे ससैन्यस्य श्रीकृष्णस्य रैवतक पर्वतविहारो वर्णितस्तत्र श्रीकृष्णवल्लभानां नेत्रसौन्दर्यं विलोक्य मृगो

---

1. द्रष्टव्यम् – तत्रैव 3/98 पद्यस्य मल्लिनाथीयं व्याख्यानम्
2. तत्रैव – 4/19
3. द्रष्टव्यम् – शि.पा.व.म.का. 4/19 पद्यस्य मल्लिनाथीयं व्याख्यानम्

लज्जामनुभूय पलायित इति वर्णयितुं कविना पद्यमेतद् विरचितम्–

**त्रासाकुलः परिपतन् परितो निकेतान्**
**पुंभिर्न कैश्चिदपि धन्विभिरन्वबन्धि।**
**तस्थौ तथापि न मृगः क्वचिदङ्गनाना-**
**मार्कर्णपूर्णनयनेषु हतेक्षणश्रीः॥**[1]

अस्य पद्यस्य व्याख्याने मल्लिनाथेन विलिखितम्–

"अत्र जनालोकनोत्थभयहेतुकस्य मृगावस्थानस्वाङ्गेषुहतिहेतुकत्वात्प्रेक्षणाद्धेतूत्प्रेक्षा। सा च व्यञ्जकाप्रयोगात् प्रतीयमाना। हेतोश्च हतेक्षणश्रीरिति गत्योक्तत्वात् काव्यलिङ्गमिति सङ्करः।[2] अत्र पद्ये वाच्यालङ्करात् काव्यलिङ्गादपेक्षया प्रतीयमानाया उत्प्रेक्षायाः चमत्कारातिशयो विज्ञायतेऽत एवालङ्कारध्वनिर्मन्तव्यः।

अत्र पञ्चमे सर्गे मदोन्मत्त गजस्य व्यवहारं वर्णयता माघेन लिखितम्–

**स्तम्भं महान्तमुचितं सहसा मुमोच**
**दानं ददा वतितरां सरसाग्रहस्तः।**
**बद्धापराणि परितो निगडान्यलावीत्**
**स्वातन्त्र्यमुज्ज्वलमवाय करेणुराजः॥**[3]

अत्र प्राकरणिकस्य गजश्रेष्ठस्य व्यवहारस्त्वमिधया बोध्यते तथा च श्लिष्ट शब्दप्रयोगमहिम्ना राज्ञो नृपख्य व्यवहारोऽपि प्रतीयते। मल्लिनाथेनास्य पद्यस्य व्याख्याने विलिखितम्– करेणूनां राजेति गजपतिः, राजा च ध्वन्यते। व्याख्यानान्ते स्पष्टीकुर्वता टीकाकारेण लिखितम्–"अत्र करेणुराजपदसाधर्म्यध्वनिः। विशेषस्यापि श्लिष्टत्वान्न श्लेष इत्युक्तम्।"[4] पदगतः शकशक्तिमूलोऽलङ्कारध्वनिर्विद्यते।

---

1. द्रष्टव्यम् – तत्रैव 5/26
2. द्रष्टव्यम् – तत्रैव 5/26 पद्यस्य मल्लिनाथीयं व्याख्यानम्
3. द्रष्टव्यम् – तत्रैव 5/48
4. द्रष्टव्यम् – तत्रैव 5/48 पद्यस्य मल्लिनाथीयं व्याख्यानम्

**शिशुपालवधषष्ठसर्गेऽलङ्कारध्वनिः–**

तत्र शिशुपालवधमहाकाव्यस्य षष्ठसर्गे विभिन्नानामृतूनां वर्णनं विराजते। तत्र वसन्तर्तुवर्णने प्रियतमासमीपं भ्रमन्तं भ्रमरं विलोक्य प्रियतमो ब्रूते–भ्रमरो त्वयि लताभ्रमं विदधातीति–

**इदमपास्य विरागि परागिणीरलिकदम्बकमम्बुरुहां ततीः।**
**स्तनभरेण जितस्तबकानमन्नवलते वलतेऽभिमुखं तव॥**[1]

अत्र प्रियतमोक्तौ प्रियतमाया जितस्तबकानमन्नवलते! इति सम्बोधनं भ्रमरकृतं प्रियतमामुखसमीपे भ्रमणं सहेतुकं साधयति। भ्रमरस्यायं व्यवहारो लताभ्रमवशाज्जात इति विवेचयता श्रीमल्लिनाथेन विलिखितम्– **"विशिष्टलताभ्रमादिति भावः। तथा च भ्रान्तिमदलङ्कारो व्यज्यते।"**[2] अर्थात् पद्येऽस्मिन् कविनिबद्धवक्तृपौढोक्तिसिद्धेन वस्तुनाऽलङ्कारध्वनिर्विराजते। यत्र वस्तुनाऽलङ्कारो व्यज्यते तत्र गुणीभूतव्यङ्ग्यत्वं नैव भवतीति तत्र तु ध्वनित्वमेव प्रतिपद्यतेऽस्मिन् विषये ध्वनिकारेण स्पष्टं निर्दिष्टम्–

**व्यज्यन्ते वस्तुमात्रेण यदालङ्कृतयस्तदा।**
**ध्रुवं ध्वन्यङ्गता तासां काव्यवृत्तेस्तदाश्रयात्॥**[3]

तत्र षष्ठे सर्गे शिशिरवर्णनेऽपि कविनाऽलङ्कारध्वनिमयं पद्यं प्रकाशितम्–

**कुसुमयन् फलिनीरलिनीरवैर्मदविकासिभिराहितहुङ्कृतिः।**
**उपवनं निरभर्त्सयत प्रिया वियुवतीर्युवतीः शिशिरानिलः॥**[4]

अत्र विरहिणीनां शिशिरानिलेन कृतं निर्भत्सनं कविना वर्णितमतो हि तत्राचेतने शिशिरानिले चेतनत्वं परिकल्प्य निर्भत्सनाख्यस्य चेतनधर्मस्योत्प्रेक्षा कृता। तत्र सञ्जीवनटीकायां मल्लिनाथेन व्याख्यातम्–

---

1. शि.पा.व.म.का. 6/11
2. तत्रैव मल्लिनाथीये व्याख्याने।
3. ध्वन्यालोके 2/30
4. शि.पा.व.म.का. 6/62

**"अत्र वायौ अचेतने चेतनधर्मो निर्भर्त्सनमुत्प्रेक्ष्यते सा चालिनीहुङ्कार झङ्कारा जीवितेति रूपकसङ्कीर्णा व्यञ्जकाप्रयोगाद् गम्या च।"[1]**

अत्रत्यस्यालङ्कारध्वनेर्वैशिष्ट्यं विद्यते यद्धि यमकालङ्कारचमत्कारेण सहैव व्यङ्ग्यालङ्कारचमत्कारो विलसति।

शिशुपालवधस्य षष्ठे सर्गे स्थितस्य निम्नलिखितस्य पद्यद्वयस्यापि व्याख्याने मल्लिनाथेनोत्प्रेक्षालङ्कारस्य गम्यत्वं निर्दिष्टम्–

**शिशिरमासमपास्य गुणोऽस्य नः क इव शीतहरस्य कुचोष्मणः।**
**इति धियाऽस्तरुषः परिरेभिरे घनमतो नमतोऽनुमतान् प्रियान्।[2]**

**कुर्वन्तमित्यतिभरेण नगानवाचः**
**पुष्पैर्विराममलिना च न गानवाचः।**
**धीमान् समस्तमनुसानु गिरौ विहर्तुं**
**बिभ्रत्यचोदि स मयूरगिरा विहर्तुम्।[3]**

अत्रापि यमकालङ्कारस्य चमत्कारो विलसति परन्तु व्यङ्ग्योप्रेक्षाया-श्चमत्कार एव प्राधान्यं भजतेऽतएवालङ्कारध्वनिः।

**शिशुपालवधसप्तमसर्गेऽलङ्कारध्वनिः–**

शिशुपालवधमहाकाव्यस्य सप्तमे सर्गे श्रीकृष्णस्य रैवतकपर्वत-स्थेषु वनेषु विहारस्य वर्णनं विद्यते। तद्वर्णनेऽपि माघेन बहुत्रालङ्कारध्वनेः समावेशः कृतः। यथा तत्रादौ तृतीयं पद्यं निम्नलिखितं विद्यते–

**अवसरमधिगम्य तं हरन्त्योः हृदयमयत्नकृतोज्जवलस्वरूपः।**
**अवनिषु पदमङ्गनास्तदानीं न्यदधत विभ्रमसम्पदोऽङ्गनासु।[4]**

---

1. तत्रैव मल्लिनाथीयं व्याख्यानम्।
2. शि.पा.व.म.का. 6/65
3. तत्रैव 6/79
4. तत्रैव 7/3

अत्र ह्यङ्गनानां विलाससम्पदाञ्चोभयीनामपि प्रकृतीनामेव हृदय-हरणादिना वर्णनसाम्येनौपम्यस्य गम्यमानत्वात् तुल्ययोगितालङ्कारो बोध्यते तथा च तासामङ्गनानां विलाससम्पदामुत्तरोत्तरस्य पूर्वपूर्वविशेषकत्वाव-गमादेकावलीभेदो व्यञ्जनया प्रतीयते तेन हि पद्येऽत्रालङ्कारेणालङ्कारध्वनिर्मतः।[1]

एवमेवाग्रे तरुणपल्लवशब्दप्रयोगपूर्वकं माघेन नूतनकिसलयस्य तरुणविटस्य च अवहारो वर्णितोऽस्ति। तत्र श्लिष्टशब्दप्रयोगवशात् श्लेषालङ्कारो व्यज्यते। तत् निम्नलिखितरूपं विरचितमस्ति–

**अनवरतरसेन रागभाजा करजपरिक्षतिलब्धसंस्तवेन।**
**सपदि तरुणपल्लवेन वध्वा विगतदयं खलु खण्डितेन मम्ले॥[2]**

अत्राभिधायाः प्रकृतार्थे किसलये नियन्त्रितत्वाद् प्रकृतविटरूपार्थस्य प्रतीतिस्तु व्यञ्जनया भवतीति दृशा शब्दशक्तिमूलोऽलङ्कारध्वनिः।[3]

अस्मिन् सर्गे निम्नलिखिते पद्ये नायिकामुखकमलसमीपे भ्रमतो भ्रमरस्य व्यवहारं प्रकाशयतः प्रियतमस्योक्ताऽलङ्कारध्वनिर्विराजते–

**सरजसमकरन्दनिर्भरासु प्रसवविभूतिषु भूरुहां विरक्तः।**
**ध्रुवममृतपनामवाञ्छयासावधरममुं मधुपस्तवाजिहीते॥[4]**

अत्र "मधुप" इति शब्देन भ्रमरस्य प्राकरणिकस्यार्थस्य बोधो भवति तथा च व्यञ्जनया ऽप्राकरणिकस्य मद्यपस्य प्रतीतिर्भवतीति दृशा शब्दशक्तिमूलो ध्वनिर्विभाति।

**शिशुपालवधमहाकाव्यस्याष्टमे सर्गेऽलङ्कारध्वनिः–**

तत्राष्टमे सर्गे कृष्णस्य रमणीनां जलक्रीडायाः वर्णनं विद्यते। तत्र प्रियतमेन शीतलजलाभिषिक्तायाःप्रियाया वर्णनं विदधता माघेन निम्नलिखिते पद्ये व्यङ्ग्योत्प्रेक्षालङ्कारस्य प्रयोगो विहितः–

---

1. तत्रैव 7/3 पद्यस्य मल्लिनाथीयं व्याख्यानम्
2. शि.पा.व.म.का. 7/3
3. तत्रैव मल्लिनाथीयं व्याख्यानम्
4. तत्रैव 7/42

**प्रेम्णोरःप्रणयिनि सिञ्चति प्रियायाः**
**सन्तापं नव जलविप्रुषो गृहीत्वा।**
**उद्धूताः कठिनकुचस्थलाभिघाता-**
**दासन्नां मृशमपराङ्गनान्मधाक्षुः।**[1]

कस्याश्चन नार्याः प्रियतमसिञ्चितायाः सन्तापस्तु दूरीकृतः परन्तु तदीयं सौभाग्यं विलोकितवत्याअपराया हृदये सन्तापः प्रादुरभूदिति वर्णनेन कविः सन्तापस्य स्थानपरिवर्तनमुत्प्रेक्षितवान्। सोत्प्रेक्षा शब्दप्रयोगाभावाद् व्यङ्ग्या। श्रीकृष्णनारीणां जलक्रीडावर्णनावसरे कस्याश्चन नार्या जलादुत्तरण-मेभिरश्शब्दैः प्रकाशितम्–

**दिव्यानामपि कृतविस्मयां पुरस्ता-**
**दम्भस्तः स्फुरदरविन्दचारुहस्ताम्।**
**उद्वीक्ष्य श्रियमिव काचिदुत्तरन्तीम-**
**स्मार्षीज्जलनिधिमन्थनस्य शौरिः।**[2]

अत्रारविन्दहस्तायाः नार्याः जलोत्तरणं वर्णयता कविना तस्या उपमा श्रिया सह कृता तामुपमामाश्रित्य मन्थनानन्तरं समुद्रोत्पन्नायाः श्रियः स्मरणं व्यञ्जनया प्रतीयते। अतएव स्मरणालङ्कारध्वनिः।[3]

तत्राष्टमे सर्गे निम्नलिखिते पद्ये शब्दशक्तिमूलः श्लेषालङ्कार-ध्वनिर्विद्यते यथा–

**आर्द्रत्वादतिशदिनीमुपेयवद्भिः**
**संसक्तिं भृशमपि भूरिशोऽवधूतैः।**
**अङ्गेभ्यः कथमपि वामलोचनानां**
**विश्लेषो बत नवरक्तकैः प्रपेदे।।**[4]

---

1. तत्रैव 8/40
2. शि.पा.व.म.का. 8/64
3. तत्रैव मल्लिनाथीयं व्याख्यानम्
4. शि.पा.व.म.का. 8/67

अत्र प्रकरणगतानां रक्तवर्णवस्त्राणां दूरीकरणं बोधयित्वाऽभिधा विरता जाता ततश्चाप्राकरणिकानां रागिणां प्रियाणां दूरीकरणं व्यञ्जनया बोध्यतेऽत एव श्लेषालङ्कारध्वनिर्मतः।[1] सोऽयं ध्वनिः शब्दशक्तिमूलः।

**नवमसर्गेऽलङ्कारध्वनिः–**

तत्र शिशुपालवधमहाकाव्यस्य नवमे सर्गे सूर्यास्तसमयादिवर्णनं कविना विहितम्। तत्रैकं पदं निम्नलिखितं विद्यते–

**पतिते पतङ्गमृगराजि निजप्रतिबिम्बरोषित इवाम्बुनिधौ।**
**अथ नागयूथमलिनानि जगत्परितस्तमांसि परितस्तरिरे।।**[2]

अत्र पद्ये पतङ्गशब्दाभिहिते सूर्ये मृगराजत्वस्य सिंहत्वस्यारोपः। पद्यस्यास्य व्याख्याने मल्लिनाथेन विलिखितम्–

**"तत्रोत्प्रेक्षया भ्रान्तिमदुपमया रूपकञ्च व्यज्यते**
**इत्यलङ्कारेणालङ्कारध्वनिरिति संक्षेपः।"**[3]

अत्र सूर्यास्तवर्णने एकमपरं पद्यम् अलङ्कारध्वनिमण्डितं निम्नलिखितरूपं प्रकाशितम्–

**दयिताहतस्य युवभिर्मनसः परिमूढतामिव गतैः प्रथमम्।**
**उदिते ततः सपदि लब्धपदैः क्षणदाकरेऽनुपदिभिः प्रययेे।।**[4]

अस्य व्याख्यानेऽपि मल्लिनाथेन स्पष्टतयाऽलङ्कारेणालङ्कारध्वनिः प्रतिपादितोऽस्ति।[5]

तत्र सर्गस्यान्तिमे पद्ये कविना चन्द्रोदयवर्णनेन सहैव रमणीनां मदिरापानस्य वर्णनं कृतं यत्रोपमाध्वनेः सद्भावो विराजते। तत्पद्यं निम्नलिखितस्वरूपं विद्यते–

---

1. तत्रैव मल्लिनाथीयं व्याख्यानम्
2. तत्रैव 9/18
3. तत्रैव मल्लिनाथीयं व्याख्यानम्
4. शि.पा.व.म.का. 9/70
5. तत्रैव मल्लिनाथीयं व्याख्यानम्

**इत्थं नारीर्घटयितुमलं कामिभिः काममासन्**
**प्रालेयांशोः सपदि रुचयः शान्तमानान्तरायाः।**
**आचार्यत्वं रतिषु विलसन्मन्मथश्रीविलासा**
**ह्रीप्रत्यूहप्रशमकुशलाः शीधवश्चक्रुरासाम्॥**[1]

अत्र पूर्वार्धे समासोक्तिरलङ्कारो द्वितीयार्धे तु शीधुष्वारोपित-स्याचार्यत्वस्य प्रकृतोपयोगात्परिणामालङ्कारस्तयोः सापेक्षत्वात्सङ्करः। तेन च दूतीनर्मसख्युपमाध्वनिरिति मल्लिनाथेन प्रतिपादितम्।[2]

**दशमसर्गेऽलङ्कारध्वनिः–**

दशमसर्गस्य प्रथमपद्ये पूर्वसर्गान्तिमपद्यवदेव परिणामालङ्कारेणोपमायाः ध्वनिः प्रकाशते। तत्पद्यं निम्नलिखितस्वरूपं विद्यते–

**सञ्जितानि सुरभिष्वथ यूनामुल्लसन्नयनवारिरुहाणि।**
**आययुः सुघटितानि सुरायाः पात्रतां प्रियतमावदनानि।**

अत्र प्रियावदनेष्वारोप्यमाणायाः पात्रतायास्तेषां पानसाधनतापादनेन कृतवदनोपयोगात् परिणामालङ्कारः स च श्लेषसङ्कीर्णः। तेन श्लेषसङ्कीर्णेन परिणामेनोपमा व्यज्यतेऽत एवालङ्कारेणालङ्कारध्वनिः।[3]

अतोऽनन्तरं द्वितीये निम्नलिखिते पद्ये सापह्नवोप्रेक्षा विलोक्यते–

**सोपचारमुपशान्तविचारं सानुतर्षमनुतर्षपदेन।**
**ते मुहूर्तमथ मूर्तमपीष्यन् प्रेम मानमवधूय वधूः स्वाः।**[4]

अत्रानुतर्षपदेनेत्यतर्षापह्नवेन मूर्तप्रेमोत्प्रेक्षणात् व्यञ्जकाप्रयोगाच्च प्रतीयमानसापह्नवोत्प्रेक्षा मल्लिनाथेन प्रतिपादिता।[5] परन्तु ध्वनित्वं नैव विवेचितम्।

---

1. शि.पा.व.म.का. 9/87
2. तत्रैव मल्लिनाथीयं व्याख्यानम्
3. द्रष्टव्यम् – तत्रैव 10/1 मल्लिनाथीयं व्याख्यानम्
4. शि.पा.व.म.का. 10/2
5. तत्रैव मल्लिनाथीया टीका

तत्र दशमसर्गे एकमन्यत्पद्यं विद्यते यत्र स्पष्टतयाऽलङ्कारेणा-लङ्कारध्वनिः प्रकाशते तथा च मल्लिनाथेनापि तत्र ध्वनिः प्रतिपादितोऽस्ति। तत्पद्यं श्रीकृष्णानुचराणां मद्यपानवृत्तवर्णनात्मकमेवंविधं विद्यते–

**दत्तमिष्टतमया मधु पत्युर्बाढमाप पिबतो रसवत्ताम्।**
**यत्सुवर्णमुकुटांशुभिरासीच्चेतनाविरहितैरपि पीतम्।**[1]

अत्र पद्ये 'बादम्' पदेनोत्प्रेक्षा विज्ञायते तथा च पीतशब्दप्रयोगेण श्लेषमूलातिशयोक्तिर्बोध्यते। ततश्च व्यङ्ग्यरूपेण 'यदचेतनानामपि पेयं तच्चेतनानां किं वक्तव्यमित्यर्थापत्तिः प्रकाशते, स च प्राधान्यं भजतेऽत एव मल्लिनाथेनापि अलङ्कारध्वनिरत्र प्रतिपादितः।[2]

**शिशुपालवधैकादशसर्गेऽलङ्कारध्वनिः–**

शिशुपालवध महाकाव्यस्यैकादशे सर्गेऽलङ्कारध्वनिर्बहुत्र पद्येषु भासते। अस्मिन् सर्गे प्रभातस्य वर्णनं विस्तरेण विहितन्तत्र निम्नलिखिते पद्येऽलङ्कार-ध्वनिः स्पष्टं भासते–

**विलुलितकमलौघः कीर्णवल्लीवितानः**
**प्रतिवनमवधूताशेषशाखिप्रसूनः।**
**क्वचिदयमनवस्थः स्थास्नुतामेति वायु-**
**र्वधुकुसुमविमर्दोद्गन्धि वेश्मान्तरेषु॥**[3]

अत्र वायोर्बहूनि विशेषणानि प्रकाशितवता कविना तस्य रमणीनां वेश्मान्तरेषु वधूकुसुमविमर्दोद्गन्धसंयोगेन स्थास्नुता वर्णिता तेन स्थायित्व-वर्णनेनातिशयोक्तिर्बोध्यते तथा च कमलादिगन्धादप्यधिको विमर्दनजन्यो गन्धोऽस्तीति व्यतिरेकालङ्कारो व्यङ्ग्यतया प्राधान्येन च प्रतीयतेऽत एवालङ्कारेणा-लङ्कारध्वनिरत्र विराजते। अतएव मल्लिनाथेनापि पद्येऽस्मिन् अलङ्कारेणालङ्कार-ध्वनेर्विलासः प्रतिपादितः।[4]

---

1. शि.पा.व.म.का. 10/6
2. तत्रैव मल्लिनाथीयं व्याख्यानम्
3. तत्रैव 11/29
4. तत्रैव 11/29 पद्यस्यव्याख्यानम्

**शिशुपालवधमहाकाव्यस्य द्वादशसर्गेऽलङ्कारध्वनिः–**

शिशुपालवधस्य द्वादशे सर्गे श्रीकृष्णानुचराणां राज्ञां शिविरात्प्रस्थानं वर्णितम्। तत्र सैन्यप्रस्थानवर्णने सैन्यसमूहस्य भूधरौपम्यमित्थं प्रस्तुतम्–

**भेरीभिराक्रुष्टमहागुहामुखो ध्वजांशुकैस्तर्जितकन्दलीवनः।**
**उत्तुङ्गमातङ्गजितालघूपलौ बलैः स पश्चात्क्रियते स्म भूधरः॥**[1]

अत्र पद्ये पश्चात्करणस्याऽऽक्रुष्टादिपदार्थहेतुकत्वात् काव्यलिङ्गम्। तच्च प्रतीयमानाभेदाध्यवसायाद् श्लेषमूलातिशयोक्त्या सङ्कीर्णम्। ततश्च बलानां भूधरौपम्यं व्यज्येतऽत एवालङ्कारेणालङ्कारध्वनिर्मतः।[2]

**शिशुपालवधमहाकाव्यस्य त्रयोदशे सर्गेऽलङ्कारध्वनिः–**

तत्र त्रयोदशे सर्गे श्रीकृष्णस्य हरिप्रस्थगमनं यमुनालङ्घनादिकञ्च वर्णितम्। तत्रालङ्कारध्वनिमण्डिते निम्नलिखिते वाजिपदचालनध्वनिं श्रुतवतां मयूराणां नृत्यमेभिश्शब्दैः प्रकाशितम्–

**अपदान्तरं च परितः क्षितिक्षितामपतन् द्रुतभ्रमितहेमनेमयः।**
**अविमारुताञ्चितपरस्परोपमशिक्षितरेणुकेतनाः पताकिनः॥**[3]

अत्र पद्ये रेणूनां केतूनां च प्रकृतत्वात्केवलप्रकृतास्पदा तुल्ययोगिता तथा च रेणुवत्केतवः केतुवच्च रेणव इत्युपमेयोपमा बोध्यते ततश्च के रेणवः के च केतव इति संशयो व्यज्यतेऽत एवालङ्कारेणालङ्कारध्वनिर्विभाति।[4]

इतोऽनन्तरवर्तिनि पद्ये भ्रान्तिमदलङ्कारध्वनिर्विलसति। तत्पद्यमित्त्थं विद्यते–

**द्रुतमध्वनन्नुपरि पाणिवृत्तयः पणवा इवाश्वचरणक्षताः भुवः।**
**ननृतुश्च वारिधरधोरणध्वनिहृष्टकूजितकलाः कलापिनः॥**[5]

---

1. शि.पा.व.म.का. 10/27
2. शि.पा.व.म.का. तत्रैव मल्लिनाथीयं व्याख्यानम्
3. शि.पा.व.म.का. 13/4
4. तत्रैव मल्लिनाथीयं व्याख्यानम्
5. तत्रैव 13/5

अस्मिन् पद्ये वारिधरशब्देन मेघगर्जनं लक्ष्यते। मेघगर्जनमिव गजगर्जनम् अभूत् ततश्च तेषु गजगर्जितेषु घनगर्जितस्य भ्रान्तिं विधाय कलापिनो ननृतुरित्यर्थो बोध्यतै। अत्र पद्ये गजानामुपमानरूपेण वारिधरशब्दः प्रयुक्तः। अश्वचरणाहतभूमितः समुत्थध्वनेरुपमानरूपेण पणवध्वनिः प्रस्तुतः। एतयोरुपमयोः संसृष्टिस्ततश्च गजगर्जने मेघगर्जनस्य भ्रान्तिर्व्यज्यते तस्याः प्राधान्यञ्च प्रतीयतेऽत एवालङ्कारेणलङ्कारध्वनिः।[1]

शिशुपालवधमहाकाव्यस्य त्रयोदशे सर्गेऽर्थशत्युद्भवध्वनिस्तु बहुत्र शोभते। तथैकत्र शब्दार्थोभयशक्तिमूलोऽलङ्कारध्वनिरपि कविप्रतिभां प्रकाशयन् राजते। तत्पद्यमेतत्–

**हिममुक्तचन्द्ररुचिरः सप्तद्मको**
**मदयन् द्विजाञ्जनितमीनकेतनः।**
**अभवत् प्रसादितसुरो महोत्सवः**
**प्रमदाजनस्य य चिराय माधवः।।**[2]

अत्र पद्ये प्रासङ्गिकवर्णनन्तु वसन्तस्य विद्यते तथा च माधवशब्दस्यानेकार्थतानुसारेण विशेषणपदानाञ्चापि वसन्तेन सहाप्रासङ्गिकस्य श्रीकृष्ण-वर्णनस्य प्रतीतिर्भवति। मल्लिनाथादिमतानुसारेणात्र श्लेषालङ्कार-ध्वनिर्विद्यते। पद्यस्यास्य व्याख्याने मल्लिनाथेन विलिखितम्–

"इहानन्दकरत्वसाम्येन माधवे महोत्सवरूपणाद्रूपकसिद्धिः। श्लेषस्तु हरिवसन्तयोरिह नास्त्येव। प्रकृताप्रकृतश्लेषे विशेष्यश्लेषायोगात्। किन्तु शब्दशक्तिमूलो ध्वनिरेव।[3] वस्तुतो ह्यत्रार्थशक्तिमूलोपमालङ्कारस्य ध्वनित्वं विलसति। यतोहि सपद्मकः, द्विजान्, मीनकेतनः प्रसादितसुरः, एतेषां श्लिष्टतया शब्दव्यञ्जकता परन्तु हिममुक्तचन्द्ररुचिरः, महोत्सवः इत्यत्र त्वर्थव्यञ्जकता विभाति। तेन हेतुनोभयशक्तिमूलोपमालङ्कारध्वनिर्मन्तव्यः।

---

1. तत्रैव मल्लिनाथीयं व्याख्यानम्
2. शि.पा.व.म.का. 13/38
3. तत्रैव मल्लिनाथीयं व्याख्यानम्

एनं विचारमाश्रित्य काव्यप्रकाशे उभयशक्त्युद्भवध्वनेरुदाहरणम्। 'अतन्द्र-चन्द्राभरणा–इत्यादि पद्यं सोमेश्वरेण विवेचितम्।[1]

तत्र महाकाव्यस्यास्य त्रयोदशे सर्गे एकत्र पद्ये वस्तुनाऽलङ्कारध्वनिः प्रकाशते। तत्र श्रीकृष्णदर्शनोत्कण्ठितानां रमणीनां व्यवहारवर्णनं विदधता निम्नलिखितं पद्यं रचितम्–

**वलयार्पितासितमहोपलप्रभाबहुलीकृतप्रतनुरोमराजिना।**
**हरिवीक्षणाक्षणिकचक्षुषाऽन्यया करपल्लवेन गलदम्बरं दधे।।[2]**

अस्य पद्यस्य व्याख्यां विदधता मल्लिनाथेन लिखितम्–अत्रेन्द्रनीलमणिप्रभाणां रोमावलिबहुलीकरणोक्त्या प्रभास्वपि रोमराजित्वप्रतीतेः भ्रान्तिमदलङ्कारो व्यज्यते इति वस्तुनाऽलङ्कारध्वनिः।[3] यतो ह्यत्र वस्तुना व्यञ्जकत्वमत् गुणीभूतव्यङ्ग्यत्वं नैव कल्पनीयमित्यस्मिन् विषये ध्वनिकारेण स्पष्टं निर्दिष्टमस्ति।[4]

**शिशुपालवधमहाकाव्यचतुर्दशसर्गेऽलङ्कारध्वनिः–**

तत्र महाकाव्यस्य चतुर्दशे सर्गे श्रीकृष्णस्य महिमा पितामहेन प्रकाशितः। तस्मिन् प्रसङ्गे कविना भीष्मोक्तिरेभिश्शब्दैर्गुम्फिता–

**केवलं दधति कर्तृवाचिनः प्रत्ययानिह न जातु कर्मणि।**
**धातवः सृजतिसंहृशास्तयः स्तौतिरत्र विपरीतकारकः।।[5]**

श्रीकृष्णेन सर्जकत्वं संहर्तृत्वं शासकत्वञ्च विलसति नतु सृज्यत्वादिकं तथा स्तोतव्यतैव विलसति स न कस्यापि स्तुतिं करोतीति वर्णनेन परिसंख्याऽलङ्कारो विभाति। अनेन वर्णनेन भगवतश्श्रीकृष्णस्य पुरुषान्तराधिक्यप्रतीतिर्व्यञ्जनया जायतेऽत एवालङ्कारध्वनिः।

---

1. द्रष्टव्यम् काव्यप्रकाशे चतुर्थो तासे सोमेश्वरकृता 73 तम पद्यस्य व्याख्या
2. शि.पा.व.म.का. 13/44
3. तत्रैव मल्लिनाथीयं व्याख्यानम्
4. व्यज्यन्ते वस्तुमात्रेण यदालङ्कृतयस्तदा ध्रुवं ध्वन्यङ्गता तासां काव्यवृत्ते सदाश्रयात्। ध्वन्या 13/38
5. शि.पा.व.म.का. 14/66

**शिशुपालवधमहाकाव्यपञ्चदशसर्गेऽलङ्कारध्वनिः–**

तत्र पञ्चदशे सर्गे वाच्यालङ्काराणां बाहुल्यं वर्तते वस्तुध्वनिरपि बहुत्र विलोक्यते परन्तु काव्यस्यास्य टीकाकारैः कस्यापि पञ्चदशसर्गस्थ पद्यस्यालङ्कारध्वनित्वं नैव विवेचितम्।

**शिशुपालवधमहाकाव्यस्य षोडशेसर्गेऽलङ्कारध्वनिः–**

तत्र महाकाव्यस्त्र षोडशे सर्गे श्रीकृष्णविरोधिनः शिशुपालस्य तदीयदूतमुखेन महिमा वर्णितोऽस्ति। तत्रैकस्मिन् निम्नलिखिते पद्येऽलङ्कार-ध्वनेश्चमत्कारो विभावनीयः–

**यामूढवानूढवराहमूर्तिर्मुहुर्तमादौ पुरुषः पुराणः।**
**तेनोह्यते साम्प्रतमक्षतैव क्षतारिणा सम्यगसौ पुनर्भूः॥**[1]

अस्मिन् पद्ये शिशुपालेन क्रियमाणस्य पुराणपुरुषोढायाः पृथिव्याश्चिरेण सततधारणस्य वर्णनन्तु प्रासङ्गिकं वर्तते तेन सह तस्याः पृथिव्याः पुनर्भूत्वं तथा च शिशुपालस्य दिधिषुत्वं पुनर्भूनारीपतित्वमपि प्रतीयते। अभिधायाः प्रासङ्गिकवर्णने एव नियन्त्रणादप्राकृतार्थस्य प्रतीतिस्तु व्यञ्जनयैव भवति तस्याः प्रतीतेश्च मल्लिनाथेन ध्वनित्वं प्रतिपादितम्। अर्थात् पद्येऽस्मिन् श्लेषमूलस्योपमालङ्कारस्य ध्वनिर्विलसति।[2]

**शिशुपालवधमहाकाव्यस्य सप्तदशसर्गेऽलङ्कारध्वनिः–**

तत्र सप्तदशे सर्गे शिशुपालदूतस्योक्तिंश्रुत्वा युधिष्ठिरराजसभा-सदस्यानाम् आक्रोशो वर्णितोऽस्ति। सर्गस्यास्य पद्येषु वस्तुध्वनिस्तु बहुत्र विवेचितष्टीकाकारैः परन्त्वलङ्कारध्वनेश्चर्चा नैव कृता।

**शिशुपालवधमहाकाव्यस्यअष्टादशसर्गेऽलङ्कारध्वनिः–**

तत्राष्टादशे सर्गे शिशुपालसैनिकानां श्रीकृष्णसैनिकानाञ्च तुमुलयुद्धाय वर्णनं माघेन कृतम्। तत्रालङ्कारध्वनिरपि विलोक्यते। एतत्पद्यं विभावनीयम्–

---

1. शि.पा.व.म.का. 16/81
2. तत्रैव मल्लिनाथीयं व्याख्यानम्

**"तूर्यारावैराहितोत्तालतालैर्गायन्तीभिः कलहं काहलाभिः।**
**नृत्ते चक्षुः शून्यहस्तप्रयोगं काये कूजन् कम्बुरुच्चैर्जहास।।"[1]**

अत्र पद्ये मृदङ्गादिध्वनिं श्रुत्वा कबन्धो हस्तप्रयोगमात्रं दृष्टि--विरहितं नृत्तमकरोदिति वर्णयन् कविर्नेत्रविहीनजनेन क्रियमाणं नृत्तं विलोक्य कश्चिद्विज्ञो हासं करोतीति शङ्खध्वनिरभूदिति समुत्प्रेक्षितवान् परन्तूत्प्रेक्षा-व्यञ्जकशब्दप्रयोगाभावो विद्यतेऽतः सा गम्या चमत्कारविशेषवशाच्चेय-मुत्प्रेक्षा ध्वनित्वं भजते।[2]

**शिशुपालवधमहाकाव्यैकोनविंशसर्गेऽलङ्कारध्वनिः–**

तत्रैकोनविंशे सर्गे शिशुपालश्रीकृष्णसैन्यसमूहयोर्युद्धस्य विस्तृतं वर्णनं विद्यते। तत्र बाणाहतस्य करिणो व्यवहारविषये माघेन निम्नलिखितं पद्यं लिखितम्–

**शरक्षते गजे भृङ्गैः सविषादिविषादिनि।**
**रुतव्याजेन रुदितं तत्रासीदतिसीदति।।[3]**

अत्र भृङ्गानां रुतस्य विषये कविनास्वाश्रयभङ्गवशाद् भृङ्गकृतं सादनमुत्प्रेक्षितं तद्विषये व्यञ्जकशब्दस्य प्रयोगो नैव कृतोऽत एव व्यङ्ग्योत्-प्रेक्षाध्वनिः। अत्र मल्लिनाथेन लिखितम्–

**"स्वाश्रयनाशदुःखाद्रोदनं कृतमित्युत्प्रेक्षा व्यञ्जकाप्रयोगाद् गम्या।**
**सा च रुतव्याजेनेत्यपह्नवपूर्वकत्वात् सापह्नवेति सर्वस्वकारः।"[4]**

**शिशुपालमहाकाव्यस्य विंशसर्गेऽलङ्कारध्वनिः–**

विंशसर्गात्मकस्य शिशुपालमहाकाव्यस्यास्यान्तिमे हरिशिशुपालयोर्युद्धं वर्णयितुं कविनाऽलङ्कारध्वनिमण्डितमिदं पद्यं विरचितम्–

---

1. शि.पा.व.म.का. 18/54
2. शि.पा.व.म.का. 19/70
3. तत्रैव मल्लिनाथीयं व्याख्यानम्
4. शि.पा.व.म.का. 20/3

**"सहजाम्बुधरारवानुकारी ध्वनिरापूरितदिङ्मुखो रथस्य।**
**प्रगुणीकृतकेकमूर्ध्वकण्ठैः शितिकण्ठैरुपकर्णयाम्बभूवे।।"**[1]

श्रीकृष्णरथस्य ध्वनिविषये मेघध्वनेर्भ्रान्तिं विदधानैर्मयूरैर्नर्तनं कृतमिति वर्णयता माघकविनोत्प्रेक्षाव्यञ्जकशब्दस्तु नैव प्रयुक्तोऽतएव व्यङ्ग्योत्प्रेक्षा। तेन ह्यत्र वस्तुनाऽलङ्कारध्वनिर्मन्तव्य इति मल्लिनाथोऽपि व्याख्यातवान्। अन्तिमसर्गस्योपान्तेऽलङ्कारध्वनिमण्डितमन्यत्पद्यं विद्यते–

**तपनीयनिकषैराजिगौरस्फुरदुत्तालतडिच्छटाट्टहासम्।**
**अनुबद्धसमुद्धताम्बुवाहध्वनिताडम्बरम्बरं बभूव।।**[2]

अत्र पद्येऽप्युत्प्रेक्षा व्यञ्जकशब्दप्रयोगाभावाद् गम्या।
तस्याः प्राधान्याच्चालङ्कारध्वनिर्मल्लिनाथेनापि प्रतिपादिता।।[3]

इत्थं विशालस्यास्य महाकाव्यस्य प्रायशः सर्वेषु सर्गेष्वलङ्कारध्वनेः प्रसरो विलोक्यते।

मयाऽस्य काव्यस्य पञ्चदशे सप्तदशे च सर्गेऽलङ्कारध्वनिर्नैव विभाविताऽन्यत्र तु सर्वेषु सर्गेषु विभाविता। ध्वनिकारेणालङ्कारध्वनेर्ये भेदाः प्रतिपादितास्तेषां सर्वविधानां भेदानां प्रसारोऽत्र विलोकितः। वस्तुतः इदं काव्यमलङ्कारध्वनिप्रयोगविषयेऽपि स्ववैशिष्ट्यं स्पष्टरूपेण सूचयति।

---

1. तत्रैव मल्लिनाथीयं व्याख्यानम्
2. तत्रैव 20/68
3. तत्रैव मल्लिनाथीयं व्याख्यानम्

# शिशुपालवध महाकाव्य में बिम्ब विधान

प्रो. रमेश कुमार पाण्डेय

**कृत्स्नप्रबोधकृद्वाणी, भा-रवेरिव भारवेः ।**
**माघेनेव च माघेन, कम्पः कस्य न जायते ॥**

'सूर्य की किरणों के समान भारवि की कविता सभी को जगाने वाली है तथा माघ मास के समान माघ कवि से कौन नहीं काँप उठता?'

कविराज राजशेखर की यह उक्ति माघ के काव्य की विशेषता का संकेत करती है । वस्तुतः माघ पूर्णतः अलंकृत काव्य शैली के महाकवि हैं । माघ की अलंकारशास्त्रगत निपुणता अद्भुत है । वे विभिन्न प्रसंगों में अलंकारशास्त्रीय सिद्धांतों को दृष्टान्त के रूप में प्रस्तुत करते हैं । उनकी दृष्टि में सत्कवि शब्द और अर्थ दोनों की निरन्तर अपेक्षा करता है। अर्थात् शब्द चयन में अर्थ की गम्भीरता भी एक महत्त्वपूर्ण उपादान है ।

वर्णनीय वस्तु के विस्तार की अद्भुत क्षमता महाकवि माघ में सहज दिखाई पड़ती है, यह विस्तार उनकी व्यापक कल्पनाशीलता की परिचायिका है । नारद अवतरण, प्रभातवर्णन, यात्रावर्णन, रैवतकपर्वतवर्णन, ऋतु, जलक्रीड़ा, सन्ध्या आदि सभी प्रसंग उनकी उत्प्रेक्षण शक्ति के प्रभाव से अति रोचक हो उठे हैं । रैवतक पर्वत के वर्णन के प्रसंग में एक अद्भुत चाक्षुष विम्बविधान करते हैं जिसके कारण उन्हें समालोचक 'घण्टामाघ' की उपाधि से सम्मानित करते हैं ।

**उदयति विततोर्ध्वरश्मिरज्जा-**
**वहिमरुचौ हिमधाम्नि याति चास्तम्।**

**वहति गिरिरयं विलम्बिघण्टा-**
**द्वयपरिवारितवारणेन्द्रलीलाम्॥**

प्रस्तुत शोधालेख में महाकवि माघ के कुछ प्रमुख सन्दर्भों के माध्यम से उनके बिम्ब विधान की समीक्षा का प्रयास किया जायेगा ।

वस्तुतः बिम्ब वह तत्त्व है जो बुद्धिगत या भावनागत विचार संसार का अविलम्ब प्रकाशन करता है । अभिप्राय यह है कि मौलिकता के बिना भी उसके आंशिक रूप से या वास्तविक रूप से चेतना को साक्षात्कार कराने वाला तत्त्व विम्ब ही है । अतः बिम्बविधान हेतु कल्पनाशीलता की परम आवश्यकता होती है । बिम्ब शब्द अंग्रेजी भाषा साहित्य के इमेज शब्द का प्रायः समानार्थी है । अंग्रेजी-हिन्दी-संस्कृत के शब्दकोश इसके प्रमाण हैं । वस्तुतः काव्य की लोकोत्तरता का प्रमुख साधन बिम्बविधान ही है । बिम्बविधान ही काव्य की भाषा में वर्ण्यविषय की रूपवत्ता के साक्षात्कार को गति प्रदान करता है । परिणामतः पाठक काव्यानुभूति में अज्ञात को ज्ञात से, अगोचर को गोचर से, अप्रत्याशित को प्रत्याशित से, अलौकिक को लौकिक से सम्बद्ध कर मानवीय ज्ञान की सीमा में प्रतिष्ठित करने में समर्थ होता है ।

उत्तम या सफल बिम्बविधान वही होता है जो सहृदय पाठक को वर्णित मूलवस्तु का प्रत्यक्ष दर्शन जैसी अनुभूति करा दे । अर्थात् वर्णनीय वस्तु तन्मयीभवन योग्यता के आधान की क्षमता रखती हो ।

पाश्चात्य समीक्षकों ने बिम्ब का स्वरूप इस प्रकार बताया है:-

"Images are representation or linkness of an animate and imanimate object". The word image will be employed to denote any artificial representation of any person or thing. (Encyclopedia of Britanica - Vol. - 14)

C.D. Lewis **का मत इस प्रकार है :--**

1. शिशु.4/20

"The poetic image is a picture made out of words. It is a picture in the mind. It's an idea, It is releasing a special poetic emotion to the reader.

**प्रो. रहस बिहारी द्विवेदी ने अपनी** 'नव्यकाव्यतत्त्वमीमांसा' **में बिम्ब का स्वरूप इस प्रकार लिखा है :--**

**काव्यसृष्टिक्षणे कर्तुश्चित्ते नानानुभूतयः ।**
**कल्पनामधिरोहन्त्यो वैखरीव्यक्तिबिम्बिताः ॥**

**भावकेन्द्रितसंस्काराात्ता भावावेष्टिताः समाः ।**
**प्रत्यक्षमिव दृश्यन्ते काव्यबिम्बः स कथ्यते ॥**

**स बाह्याभ्यन्तराभ्याञ्च कारणभ्यां द्विधा मतः ।**
**बाह्ये दृश्यं ध्वनिः स्पशो गन्धास्वादौ च पञ्चधा ॥**

**आभ्यन्तरे स्थितो भावः प्रज्ञा चेति द्विधा कृतः ।**
**प्रत्येकं बहवो भेदाः सङ्करैकलभेदतः ॥[1]**

रामायण में 'चिरनिवृत्तमप्येतत्प्रत्यक्षमिव दर्शितम्' । द्वारा बिम्ब योजना का संकेत किया गया है[2] इसी भाव को स्पष्ट करते हुए अभिनवगुप्त रसनिष्पत्ति सूत्र व्याख्यान में कहते हैं:-**'प्रत्यक्षमिवानुभावयन्'** ।

आचार्य रामचन्द्र शुक्ल मूर्त्तिमत्ता को बिम्ब कहते हैं । आचार्य नगेन्द्र का कहना है कि वह मानसी छवि जो मूलभाव की प्रेरक हो, बिम्ब है ।

इस प्रकार अनेक भारतीय आचार्य भी यह मानते हैं कि कवि द्वारा वर्णित वस्तु का प्रत्यक्ष जैसी सहृदय की अनुभूति बिम्ब है ।

स्थूल रूप में विम्बों का विभाजन तीन प्रकार से किया जा सकता है:-

---

1. 13/1-4
2. बाल. 4.16

1. इन्द्रियग्राह्य
2. हृदयग्राह्य
3. प्रज्ञाग्राह्य

## (1) इन्द्रियग्राह्य :

इन्द्रियग्राह्य से ज्ञानेन्द्रियग्राह्य का अभिप्राय है । फलतः इन्हें पाँच प्रकार से समझा जा सकता है :--

1. श्रावण बिम्ब
2. स्पर्शज बिम्ब
3. चाक्षुष बिम्ब
4. रसना विषयक बिम्ब
5. घ्राण विषयक बिम्ब

### 1. श्रावण बिम्ब

कवि के द्वारा ऐसे प्रसंगों का अलौकिक निरूपण जिनका अनुभव कर्णेन्द्रिय द्वारा ही सम्भव होता है, ऐसे बिम्ब विधान श्रावण बिम्ब की कोटि में रखे जाते हैं । महाकवि माघ के शिशुपाल वध महाकाव्य में कई ऐसे प्रसंग हैं, जिनको पढ़ते समय उसकी ध्वनिजन्यविलक्षणता का अनुभव कर्णेन्द्रिय द्वारा होता है । देवर्षि नारद भगवान् श्रीकृष्ण के पास आकाश मार्ग से आ रहे हैं । उनकी महती नामक वीणा वायु के आघात से पृथक्-पृथक् श्रुतियों के समूह वाले स्वरों एवं ग्राम विशेष की मूर्च्छनाओं को पैदा कर रही है ।

**रणद्भिराघट्टनया नभस्वतः**
**पृथग्विभिन्नश्रुतिमण्डलैः स्वरैः ।**
**स्फुटीभवद् ग्रामविशेषमूर्च्छना-**
**मवेक्षमाणं महतीं मुहुर्मुहुः ॥[1]**

प्रस्तुत पद्य में कवि ने नारद की स्वतः बजती हुई, विशिष्ट मूर्च्छनाओं को स्पष्ट रूप से व्यक्त करती हुई वीणा का अद्भुत वर्णन किया है । वीणा का यह स्पष्ट स्वर एवं मूर्च्छनाओं का वैचित्र्य सहृदय की श्रवणेन्द्रिय द्वारा ग्राह्य होने के कारण इसे श्रावण बिम्ब कहा जा सकता है । इसी प्रकार परस्पर वार्तालाप, वेदपाठ, सैनिकों के आने-जाने की पदध्वनि, परस्पर शस्त्रों की टकराहट, पक्षियों का कलरव, कोकिलरव वैतालिकों का गान, सारसों का गुंजार, भ्रमरों की गूँज, शंख-मृदङ्गादि ध्वनि, घोड़ों की हिनहिनाहट आदि अनेक प्रसंग श्रावण बिम्ब विधान से ओतप्रोत हैं । ऊँट का एक मनोहारी पद्य प्रस्तुत है :--

**उत्थातुमिच्छन्विधृतः पुरो बला-**
**न्निधीयमाने भरभाजि यन्त्रके ।**
**अर्धोज्झितोद्‌गारविझर्झरस्वरः**
**स्वनाम निन्ये रवणः स्फुटार्थताम्॥**[2]

भार के पीठ पर रखने पर उठने की इच्छा करता हुआ बलपूर्वक रोका गया ऊँट आधे चबाए हुए नीम आदि के पत्तों के खाने से विषम (विझर्झरस्वरः) शब्द करता हुआ अपने नाम को सार्थक कर दिया । यहाँ पर बलबलाते हुए ऊँट का अनुभव कर्णेन्द्रिय द्वारा किया जा रहा है । मेघगर्जन का एक प्रसंग प्रस्तुत है :--

**जलदपङ्क्तिरनर्तयदुन्मदं कलकलापि कलापिकदम्बकम्।**
**कृतसमार्जनमर्दलमण्डलध्वनिजया निजया स्वनसम्पदा॥**[3]

अपनी ध्वनिरूपी सम्पत्ति से नगाड़े की ध्वनि को जीतने वाली मेघमाला ने ऐसी गर्जना की कि जिसे सुनकर मधुर केका शब्द करते हुए मयूरवृन्द उन्मत्त होकर नाचने लगे । यह पूरा बिम्बविधान श्रावण बिम्ब का उत्तम उदाहरण माना जा सकता है । विशेष रूप से 'मण्डलध्वनि' के संयोगे गुरु के उच्चारण में सर्वाधिक अन्वित है।

---

1. (शिशु. 1/10)
2. (शिशु. 12/9)
3. (शिशु. 6/31)

**2. स्पर्शज बिम्ब विधान :**

स्पर्शज बिम्ब के अन्तर्गत वस्तुत: वे प्रसंग आते हैं, जिनका अनुभव त्वग् इन्द्रिय से सम्भव होता है, जैसे शीतलता, कोमला, कठोरता एवं दाहकता आदि भावों का अनुभव स्पर्शज बिम्ब के अन्तर्गत समाहित होते हैं। बरसाती मादक हवा के प्रभाव का एक मनोहारी बिम्ब उदहरणाार्थ प्रस्तुत है :--

**विगतरागगुणोऽपि जनो न क-**
**श्चलति वाति पयोदनभस्वति।**
**अभिहितेऽलिभिरेवमिवोच्चकै-**
**रननृते ननृते नवपल्लवैः॥[1]**

अर्थात् वर्षा ऋतु की शीतल मन्द वायु जब बहती है तो विरक्त व्यक्ति भी चंचल हो जाता है। यह भौरों का सत्य वचन सुनकर पल्लव नाचने लगे । निम्नलिखित पद्य में वर्णित शीतल वायु का वैशिष्ट्य इस प्रसंग में उद्धृत है :--

**दलितकोमलपाटलकुड्मले निजवधूश्वसितानुविधायिनि।**
**मरुति वाति विलासिभिरुन्मदभ्रमदलौ मदलौल्यमुपाददे॥[2]**

अर्थात् कोमल पाटल कलिकाओं को विकसित करने वाली अपनी अङ्गनाओं के नि:श्वास के समान उष्ण तथा उन्मत्त भ्रमरों से युक्त वायु के बहते रहने पर विलासी लोग मद से चंचल हो उठे। प्रस्तुत पद्य में पाटल कलिकाओं की कोमलता, वायु की उष्णता का बोध स्पर्श के द्वारा ही ग्राह्य है ।

**3. चाक्षुष बिम्ब :**

चाक्षुष बिम्ब में रूप का ग्रहण होता है। कवि किसी भी रूप को अपनी कवित्व शक्ति के माध्यम से पाठकों तक प्रस्तुत करता है जिससे

---

1. शिशु. 6/39
2. शिशु. 6/23

पाठक अयथार्थ होते हुए भी उसका यथार्थ अनुभव करता है। शिशुपालवध महाकाव्य के अनेक पद्य चाक्षुषबिम्ब के उदाहरण के रूप में प्रस्तुत किए जा सकते हैं । देवर्षि के आकाश मार्ग से भगवान् श्रीकृष्ण के पास अवतरित होने के प्रसंग में माघ ने जो बिम्ब प्रस्तुत किया वह चाक्षुष बिम्ब का उत्तम उदाहरण है । इस प्रसंग से कुछ पद्य उद्धृत हैं :--

**नवानधोधो बृहतः पयोधरान् समूढकर्पूरपरागपाण्डुरम् ।**
**क्षणं क्षणोक्षिप्तगजेन्द्रकृत्तिना स्फुटोपमं भूतिसितेन शम्भुना।।**

**दधानमम्भोरुहकेसरद्युतीर्जटाः शरच्चन्द्रमरीचिरोचिषम् ।**
**विपाकपिङ्गास्तुहिनस्थलीरुहो धराधरेन्द्रव्रततीततीरिव ।।**

**पिशङ्गमौञ्जीयुजमर्जुनच्छविं वसानमेणाजिनमञ्जनद्युति ।**
**सुवर्णसूत्राकलिताधराम्बरां विडम्बयन्तं शितिवाससस्तनुम् ।।**

**विहङ्गराजाङ्गरुहैरिवायतैर्हिरण्मयोर्वीरुहवल्लितन्तुभिः ।**
**कृतोपवीतं हिमशुभ्रमुच्चकैर्घनं घनान्ते तडितां गणैरिव ।।**

**निसर्गचित्रोज्ज्वलसूक्ष्मपक्ष्मणा लसद्बिसच्छेदसिताङ्गसङ्गिना।**
**चकासतं चारुचमूरुचर्मणा कुथेन नागेन्द्रमिवेन्द्रवाहनम् ।।**

कवि ने यहाँ उपमाओं और उत्प्रेक्षाओं के माध्यम से रूपवत्ता को प्रत्यक्षात्मक अनुभव के लिए उपायनीकृत किया है ।

### 4. रसना विषयक बिम्ब :

रसना द्वारा ग्राह्य विषयों अर्थात् षड्रसों के प्रसंगों को रसना विषयक बिम्ब के अन्तर्गत रखा गया है । उदाहरणार्थ नारियल का जल पीने तथा कच्ची सोपाड़ी (पूगीफल) खाने का प्रसंग द्रष्टव्य है :-

**लवङ्गमालाकलितावतंसास्ते नारिकेलान्तरपः पिबन्तः ।**
**आस्वादितार्द्रक्रमुकाः समुद्रादभ्यागतस्य प्रतिपत्तिमीयुः।।**[1]

मद्यपान का एक प्रसंग और द्रष्टव्य है :-

---

1. (शिशु. 1/4-8)

**दत्तमिष्टतमया मधु पत्युर्बाढमपि पिबतो रसवत्ताम् ।**
**यत्सुवर्णमुकुटांशुभिरासीच्चेतनाविरहितैरपि पीतम् ॥**

अर्थात् प्रियतमा द्वारा दिया गया मद्य पीते हुए पति को अति-स्वादिष्ट प्रतीत हो रहा है क्योंकि वह अचेतन स्वर्णमुकुट द्वारा पीत है तो सचेतन के लिए क्या कहना था ।

**5. घ्राण विषयक बिम्ब :**

शिशुपालवध महाकाव्य में अनेक ऐसे प्रसंग हैं जिनके वैशिष्ट्य का ग्रहण घ्राणेन्द्रिय मात्र से सम्भव है, विशेष रूप से पुष्प पराग से फैलने वाला सौरभ जिसकी उत्कृष्ट सुगन्ध लोगों को आनन्दित करती है । मदिरापान का एक प्रसंग उद्धृत है :--

**क्रान्तकान्तवदनप्रतिबिम्बे भग्नबालसहकारसुगन्धौ ।**
**स्वादुनि प्रणदितालिनि शीते निर्ववार मधुनीन्द्रियवर्गः ॥**

अर्थात् प्रियतम के प्रतिबिम्ब से युक्त सद्यः तोड़े गए नवीन सौरभ युक्त आम्र पल्लव की सुगन्धि से युक्त, स्वादिष्ट, भ्रमरों के गुंजार से युक्त तथा शीतल मदिरा से इन्द्रियों का समूह तृप्त हो उठा । प्रस्तुत पद्य में चाक्षुष आनन्द, घ्राणेन्द्रिय जन्य आनन्द, रसनाग्राह्य आनन्द, श्रवणेन्द्रिय ग्राह्य आनन्द एवं त्वगिन्द्रिय ग्राह्य आनन्द का मनोहारी वर्णन है । एक साथ सभी इन्द्रियों को तृप्त करने का यह वर्णन वस्तुतः अद्भुत है । इसमें प्रत्येक इन्द्रिय का विषय पृथक्-पृथक् रूप से आनन्द का विषय बनता है।

**( 2 ) हृदय ग्राह्य बिम्ब :**

भारतीय अध्यात्म में परिव्याप्त विराट् की अवधारणा में विश्वास रखने वाले सहृदय में सुख-दुःख, काम-क्रोध, लज्जा-चिन्ता आदि भाव बाह्य इन्द्रिय ग्राह्य नहीं हैं । अतः इन्हें हृदय ग्राह्य बिम्ब विधान के अन्तर्गत रखा जाता है । यथा --

---

1. (शिशु. 3/81)

**युगान्तकालप्रतिसंहृतात्मनो जगन्ति यस्यां सविकासमासत।**
**तनौ ममुस्तत्र न कैटभद्विषस्तपोधनाभ्यागमसंभवा मुदः॥**[1]

अर्थात् युगों के अन्तकाल में सृष्टि का उपसंहार करने वाले कैटभारि भगवान् श्रीकृष्ण के जिस शरीर में चौदह भुवन सम्पूर्ण विस्तार के साथ रहते थे, उसी शरीर में तपस्वी नारद के आने से उत्पन्न हर्ष नहीं समा सका। अद्‌भुत बिम्ब विधान है । वस्तुतः भगवान् के हृदय में उत्पन्न हर्ष का अनुभव हृदय से ही किया जा सकता है। एक अत्यन्त प्रसिद्ध पद्य उदाहरण के रूप में प्रस्तुत है :--

**कुमुदवनमपश्रि श्रीमदम्भोजषण्डं**
**त्यजति मुदमुलूकः प्रीतिमांश्चक्रवाकः ।**
**उदयमहिमरश्मिर्याति शीतांशुरस्तं**
**हतविधिलसितानां हा विचित्रो विपाकः॥**[2]

अर्थात् कुमुदवन श्रीहीन हो रहा है, कमल समूह शोभायुक्त हो रहा है, उल्लू दिन में न देख पाने के कारण दुःखी हो रहा है । चक्रवाक दिन में प्रिया के संग होने के कारण प्रसन्न हो रहा है । सूर्य उदित हो रहे हैं और चन्द्रमा अस्त हो रहे हैं । भाग्यहीन का विचित्र ही परिणाम होता है । ये सारी भावनाएँ हृदय ग्राह्य बिम्ब के माध्यम से सहृदय के आनन्द का कारण बनती हैं ।

**( 3 ) प्रज्ञा ग्राह्य बिम्ब :**

जो भाव उत्कृष्ट बुद्धि के विषय हैं अर्थात् जिन विषयों से इन्द्रियों का साक्षात्सम्बन्ध नहीं होता, अपितु प्रतिभा के माध्यम से ही उनका विश्लेषण और उनके आनन्द की प्राप्ति सम्भव होती है, वे प्रज्ञा ग्राह्य के अन्तर्गत माने जाते हैं । यथा --

**विलोकनेनैव तवामुना मुने**
**कृतः कृतार्थोऽस्मि निबर्हितांहसा ।**

---

1. (शिशु. 1/23)
2. (शिशु. 11/64)

**तथापि शुश्रूषुरहं गरीयसी-**
**र्गिरोऽथवा श्रेयसि केन तृप्यते ।।**[1]

अर्थात् हे मुने ! आपके पाप विनाशक इस दर्शन से मैं कृतार्थ हो गया, तथापि मैं कल्याणपरक वचनों को सुनना चाहता हूँ क्योंकि मंगलकारी कार्यों से कोई भी कभी सन्तुष्ट नहीं होता है । यह नारद के वचनों में निहित मंगलकारिता का अनुभव सहृदय अपनी बुद्धि के द्वारा ग्रहण करता है । इसी प्रकार एक अन्य उदाहरण भी प्रस्तुत है :--

**हरत्यघं सम्प्रति हेतुरेष्यतः**
**शुभस्य पूर्वाचरितैः कृतं शुभैः।**
**शरीरभाजां भवदीयदर्शनं**
**व्यनक्ति कालत्रितयेऽपि योग्यताम्।।**[2]

अर्थात् आपका दर्शन शरीरधारियों के त्रैकालिक योग्यता को व्यक्त करता है क्योंकि वर्तमान काल में पाप को नष्ट करता है, भविष्यत्काल में शुभ का कारण बनता है, तथा भूतकाल में किये गये पुण्यों का परिणाम होता है । इस बिम्ब विधान का आनन्द प्रज्ञा सम्पन्न सहृदय पाठक ही प्राप्त कर सकता है ।

यद्यपि बिम्ब शब्द संस्कृत भाषा में प्रयुक्त और व्युत्पत्ति की दृष्टि से साधु है । यथा **दृष्टान्तस्तु सधर्मस्य वस्तुनः प्रतिबिम्बनम्** जैसे वाक्यों में बिम्ब-प्रतिबिम्ब भावों का अनेकधा उल्लेख हुआ है, किन्तु यह स्वीकार करने में संकोच नहीं होना चाहिए कि यह शब्द (बिम्ब) अंग्रेजी के इमेज शब्द के अनुवाद के रूप में हिन्दी समीक्षकों द्वारा अपनाया गया, जिसे आज संस्कृतकाव्यों के समीक्षण के लिए भी अपनाया गया है । भारतीय काव्यशास्त्रियों द्वारा वर्णित उपमामूलक सभी अलंकार वर्णनीय वस्तु को सहृदय-हृदय संवेद्य बनाकर कविकल्पना से अनुव्याहृत जगत् का साक्षात्कार कराते हैं । कवि अपनी नवनवोन्मेषशालिनी प्रज्ञा से अपने कल्पनाराज्य में विद्यमानजगत् को रमणीय बनाकर लोकोत्तराह्लाद

1. (शिशु. 1/29)
2. (शिशु. 1/26)

और प्रेरणा के लिए प्रस्तुत करता है । राष्ट्रगत परिवेश और संस्कृति के प्रति दृढ़ आस्था रखनेवाला कवि उदात्त मानव मूल्यों और कर्तव्यों की अभिप्रेरणा के लिए श्रुति, स्मृति सदाचार को अपनी रचना में अनुस्यूत करता है, जिसमें वेद के समुपवृंहण के लिए समादृत पुराणों के तथ्यों और कथ्यों को नवीकृत रूप में प्रस्तुत करता है । इस दिशा में महाकवि माघ का **'काव्येषु माघः'** जैसी अभ्युक्तियों से मनीषियों ने आदर किया है।

महाकवि माघ अपनी काव्यसर्जना में **ईशावास्यमिदं सर्वम्** की भारतीय अवधारणा को **'शासितुं जगज्जगन्निवासो'** जैसे विशेषणों में रूपायित कर अपने नायक की विराटता को प्रतिबिम्बत करते हैं। पुनः भारतीय ज्योतिर्विज्ञान द्वारा अभिवर्णित सबकी आत्मा सूर्य की तिर्यक् गति, पौराणिक तथ्य सूर्यसारथी का अनूरु होना और लंगड़े होने से तिरछा चलना, यज्ञाहुति द्रव्य को उर्ध्वज्वलन होने से देवों तक पहुंचाने का हविर्भुक् (अग्नि) का सामर्थ्य और सभी लोकों के अभिज्ञान के आधारस्तम्भ तेजस्वी नारद के सर्वतः विसारी आभा मण्डल को नव्य भव्य बिम्ब विधानों से अनुव्याहृत कर महाकवि माघ सहृदय के समक्ष प्रस्तुत करते हैं। यथा :--**'पतत्यधो धामविसारि सर्वतः किमेतदि-त्याकुलमीक्षितं जनैः ।'**

इस बिम्बविधान में भारतीय जनता की परम अभीप्सा सूर्य, यज्ञ, नारद के प्रति आस्था भी अभिव्यंजित या प्रतिबिम्बत है । निष्कर्ष रूप में यह कहा जा सकता है कि माघ का बिम्बविधान कोरे दृश्यमान जगत् तक सीमित नहीं है । वह पाश्चात्य विचारकों की सीमित अवधारणाओं द्वारा परिभाषित इमेजरी (ब्रिम्ब विधान) की परिभाषाओं से बढ़कर है, जिसे भारतीय संस्कृति में आस्थावान् सहृदय ही समझ सकता है।

# शिशुपालवधे व्यभिचारिभावः

**डॉ. सूर्यमणिरथः**

बृहत्त्रयीमध्ये महाकविना माघेन विरचितं शिशुपालवधम् इति महाकाव्यमन्यतममस्ति। महाकाव्यस्य लक्षणानुसारेण तत्र शृङ्गारो वीर एव वाऽङ्गी रसो भवेत्। एतदनुसारेण शिशुपालवधे वीररसः अङ्गी भवति। रसस्य विषये आचार्यभरतः नाट्यशास्त्रे षष्ठाध्याये वदति–रसः इति कः पदार्थः? अत्रोच्यते आस्वाद्यत्वात्। कथमास्वाद्यो रसः? अत्रोच्यते, यथा हि नानाव्यञ्जनसंस्कृतमन्नं भुञ्जाना रसानास्वादयन्ति सुमनसः पुरुषाः, हर्षादीन् चाप्यधिगच्छन्ति, तथा नानाभावाभिनयव्यञ्जितान् वागङ्गसत्त्वोपेतान् स्थायिभावानास्वादयन्ति सुमनसः प्रेक्षकाः। अत्रानुवंश्यौ श्लोकौ–

**यथा बहुद्रव्ययुतैर्व्यञ्जनैर्बहुभिर्युतम्।**
**आस्वादयन्ति भुञ्जाना भक्तं भक्तविदो जनाः।**
**भावाभिनयसंयुक्तान् स्थायिभावास्ततो बुधाः**
**आस्वादयन्ति मनसा तस्मान्नाट्यरसाः स्मृताः।।**[1]

तात्पर्यमिदं यत् यथा नानाव्यञ्जनयुक्तं खाद्यं भुक्त्वा जनाः आनन्दिता भवन्ति, तथा नानाभिनययुक्तान् स्थायिभावान् सहृदयाः अनुभूय आनन्दमधिगच्छन्ति। अत्र प्रश्नः जागर्ति, किं रसेभ्यो भावानामभिनिर्वृत्तिरुताहो भावेभ्यो रसानामिति। भरतस्याभिप्रायो यत्–भावेभ्यो रसानामभि-निर्वृत्तिरिति न तु रसेभ्यो भावानामभिनिर्वृत्तिरिति। अत्रापि श्लोको यथा[2]--

**नानाभिनयसम्बन्धाद् भावयन्ति रसानिमान्।**
**यस्मात्तस्मादमी भावाः विज्ञेया नाट्ययोक्तृभिः।।**

---

1. (6/32-33)
2. (ना.शा. 6/34-35)

**नानाद्रव्यैर्बहुविधैर्व्यञ्जनं भाव्यते यथा।**
**एवं भावा भावयन्ति रसानभिनयैः सह॥**

रसोत्पत्तये भावाः मुख्या इति एतस्माद् ज्ञायते। तर्हि भावः इति कः पदार्थः इति जिज्ञासायां भरतः कथयति–वागङ्गसत्त्वोपेतान् काव्यार्थान् भावयन्तीति भावाः[1]। विश्वनाथकविराजः साहित्यदर्पणे कथयति– 'निर्विकारात्मके चित्ते भावः प्रथमविक्रिया' इति। भूधातोः घञ् प्रत्यये भावः इति भवति।

रसोत्पत्तये विभावानुभवव्यभिचारिभावानां संयोगः अपेक्षते। एतेषु भावेषु विद्यमानस्य व्यभिचारिभावस्य लक्षणप्रसङ्गे रसगङ्गाधरे जगन्नाथो वक्ति– 'यानि व्यभिचरन्ति तानि व्यभिचारिशब्देन'[2]। विशेषेणाभिमुख्येन चरन्ति ये भावास्ते व्यभिचारिणः। व्यभिचारिणः निर्वेदग्लानिशङ्कादिरूपेण त्रयस्त्रिंशत् भवन्ति। एतदतिरिच्य 'रतिर्देवादिविषया व्यभिचारी तथाञ्जितः भावः प्रोक्तः' इति आचार्यमम्मटः काव्यप्रकाशे[3] कथयति। अत्राचार्याणां मतपरिशीलनेन ज्ञायते यत् निर्वेदादयः व्यभिचारिणः भवन्ति, देवादिविषया रतिः किं वा व्यञ्जितव्यभिचारी अपि भावपदवाच्यः भवति। एते व्यभिचारिभावाः शिशुपालवधमहाकाव्ये कथं महाकविना संयोजिता इति अधुना विचारयिष्यते। तत्र प्रथमसर्गे द्वारकानगर्य्यां वसन् श्रीकृष्णः इन्द्रसन्देशमानीय आगच्छन्तं नारदमम्बरे ददर्श। नारदः श्रीकृष्णस्य पुरतः यदा समागतः तदा श्रीकृष्णः नारदमभिलक्ष्य कथयति[4]–

**हरत्यघं संप्रति हेतुरेष्यतः शुभस्य पूर्वाचरितैः कृतं शुभैः।**
**शरीरभाजां भवदीयदर्शनं व्यनक्ति कालत्रितयेऽपि योग्यताम्॥**

अत्र मुनिं नारदं प्रति श्रीकृष्णस्य रतिः (प्रीतिः) वर्तते। श्रीकृष्णः कथयति हे मुने! अधुना भवतः दर्शनं मम पापं हरति अपि च भविष्यतः शुभस्य कारणम् अपि च पूर्वकृतसुकृतवशात् भवतः दर्शनं जातम्। अतः

---

1. (ना.शा. 7माध्यायः)
2. (प्रथमानने पृ. 148
3. (4/48 सूत्रम्)
4. (शिशु. 1/26)

त्रिकालेऽपि भवदीयदर्शनं शरीरभाजामिष्टसंपादकगुणवत्त्वं व्यनक्ति। अत्र दर्शनयोग्यताव्यञ्जनमुद्दीपनम्। श्रीकृष्णस्य एतादृशी भक्तिरनुभावः। तेन व्यङ्ग्यः हर्षश्च व्यभिचारी। मुनिविषयश्रीकृष्णरतिज्ञे सामाजिके भावनिष्पत्तिरिति बालबोधिनीकारः वामनाचार्यः काव्यप्रकाशस्य टीकायां स्पष्टयति।

नारदं प्रति श्रीकृष्णस्य बहुप्रंशसाकरणानन्तरं प्रत्युत्तरेण सः श्रीकृष्णं कथयति[1]–

**इति ब्रुवन्तं तमुवाच स व्रती न वाच्यमित्थं पुरुषोत्तम त्वया।**
**त्वमेव साक्षात्करणीय इत्यतः किमस्ति कार्यं गुरु योगिनामपि॥**
**उदीर्णरागप्रतिरोधकं जनैरभीक्ष्णमक्षुण्णतयातिदुर्गमम्।**
**उपेयुषो मोक्षपथं मनस्विनस्त्वमग्रभूमिर्निरपायसंश्रया॥**

इत्यादिश्लोककदम्बके वेदान्ततत्त्वं भगवति श्रीकृष्णे नारदः कलयति। सोऽहम्, अहं सः इति श्रुतिवचनम्। 'यद्गत्वा न निवर्तन्ते तद्धाम परमं मम' इति गीतावचनम्। 'तमेव विदित्वाऽतिमृत्युमेति, नान्यः पन्था विद्यतेऽयनाय' इति श्रुतिवचनञ्च प्रमाणयति यत् स्वयं भगवान् मुमुक्षूणामभिसर्तव्यः। अत्र भगवतः माहात्म्यवर्णनात् मोक्षदायित्वादि-गुणप्रशंसनाच्च नारदस्य भगवद्गता रतिः वर्तते। देवादिविषया रतिर्भावः इत्यनुसारेण अत्र भावस्य स्थानं बलवत्तरमस्ति। द्वारकानगरीवर्णनाप्रसङ्गे माघः एकस्मिन् स्थले लिखति–

**रथाङ्गभर्त्रेऽभिनवं वराय यस्याः पितेव प्रतिपादितायाः।**
**प्रेम्णोपकण्ठं मुहुरङ्कभाजो रत्नावलीरम्बुधिराबबन्ध॥**[2]

समुद्रस्य तीरभागे बहूनि रत्नान्यासन्। कविः कल्पयति यत् समुद्रः पिता इव, द्वारकानगरी कन्यातुल्या। द्वारकायाः पति श्रीकृष्णः। अतः समुद्रस्य जामाता श्रीकृष्णः जातः। स जामात्रे श्रीकृष्णाय रत्नावलीरर्पयति। जामातृगतभाववर्णनात् अत्र वात्सल्यभावः।

---

1. (शिशु. 1/31-32)
2. (3/39)

श्रीकृष्णस्य समीपे वार्ताद्वयमागतम्। नारदेन इन्द्रसन्देशः यदा प्रापितः तदा युधिष्ठिरस्य राजसूययज्ञे योगदानाय अपरोऽपि सन्देशः आगतः। किंकर्तव्यविमूढः श्रीकृष्णः भ्रात्रा बलरामेण मन्त्रिणा उद्धवेन च सह द्वितीयसर्गे मन्त्रणां कृतवान्। द्वितीयसर्गप्रारम्भे मन्त्रणाकाले शिशुपालापकर्म श्रुत्वा बलरामोक्तौ अमर्षव्यभिचारिभावः व्यज्यते। यथा–

**ततः सपत्नापनयस्मरणानुशयस्फुरा।**
**ओष्ठेन रामो रामोष्ठविम्बचुम्बनचुञ्चुना।**
**विवक्षितामर्थविदस्तत्क्षणं प्रतिसंहृताम्।**
**प्रापयन् पवनव्याधेर्गिरमुत्तरपक्षताम्।**
**घूर्णयन् मदिरास्वादमदपाटलितद्युती।**
**रेवतीवदनोच्छिष्टपरिपूतपटे दृशौ।**

XXXX XXXX XXXX

**जगाद वदनच्छद्मपद्मपर्यन्तपातिनः।**
**नयन् मधुलिहः श्वैत्यमुदग्रदशनांशुभिः॥[1]**

इति कुलके बलरामस्य उक्तेरुपक्रमः वर्णितः अस्ति। अत्र शत्रोः शिशुपालस्यापनयस्मरणं विभावः। पवनव्याधेरुद्धवस्य उक्तेरुत्तरपक्षे स्थापनम्, मदिरापानजनितमदपाटलितदृशोः घूर्णनम्, उष्णदीर्घनिःश्वासेन वनमालायाः मलिनीकरणम्, स्वेदबिन्दुधारणं च अनुभावः। विभावानुभावसंयोगेन बलरामगतः अमर्षः अत्र व्यज्यते।

पण्डितराजदिशा 'विभावादिव्यज्यमानहर्षाद्यन्यतमत्वं तत्त्वम्' (र. स. व्यभिचारिभावालोचने) पुनरग्रे सः वदति 'विभावानुभावौ चात्र व्यञ्जकौ। न त्वेकस्मिन् व्यभिचारिणि ध्वन्यमाने व्यभिचार्यन्तरं व्यञ्जकतया अवश्यमपेक्षते। तस्यैव प्राधान्यापत्तेः। वस्तुतस्तु प्रकरणवशात् प्राधान्यमनुभवति कस्मिंश्चिद्भावे तदीयसामग्रीव्यङ्ग्यत्वेन नान्तरीयकतया तनिमानमावहतो व्यभिचार्यन्तरस्याङ्गत्वेऽपि न क्षतिः। यथा गर्वादौ अमर्षस्य, अमर्षादौ वा गर्वस्य। एवं चेत् गुणीभूतव्यङ्ग्यं भवत्विति शङ्का न करणीया। पृथग्विभावानु-

---

1. (2/14-21)

भावाभिव्यक्तस्य एव भावस्य गुणीभूतव्यङ्ग्यव्यपदेशहेतुत्वात्। अत एव नान्तरीयकस्य भावस्य ध्वननं भवति। अन्यथा गर्वादिध्वनेरुच्छेद एव भवेत्। विभावस्त्वत्र व्यभिचारिणो निमित्तकारणसामान्यम्। न तु रसस्येव सर्वथैवालम्बनोद्दीपने अपेक्षिते। यदि तु क्वचित् सम्भवः तदा न वार्यते"[1]।

प्रथमसर्गे हिरण्यकशिपोः पराक्रमवर्णनप्रसङ्गे कविः लिखति [2]–

**स सञ्चरिष्णुर्भुवनान्तरेषु यां यदृच्छयाशिश्रियदाश्रयः श्रियः।**
**अकारि तस्यै मुकुटोपलस्खलत्करैस्त्रिसन्ध्यं त्रिदशैर्दिशे नमः॥**

हिरण्यकशिपुः स्वेच्छया यस्यां दिशि व्रजति तस्यै दिशे भयार्ता देवता नमः अर्पयन्तीति कथनेन देवानां दीनता, हिरण्यकशिपुं प्रति शङ्का न व्यज्यते। अत्र हिरण्यकशिपोः यदृच्छया भ्रमणं विभावः। देवानां मुकुटोपलस्खलत्कराणां नमस्करणं चानुभावः। एतत्संयोगेन देवगता शङ्का दीनता च व्यज्यते।

तत्र स्थलान्तरं पुवर्विमृशामः। इन्द्रसन्देशमादाय श्रीकृष्णस्य निकटं नारदः समागतः। नारदमवलोक्य तस्यानन्दः सीमातीतः। तस्य लोचनयुगलं विस्फारितं जातम्, निदाघसूर्यवत् तेजोमयस्य नारदस्य निकटस्थितित्वात् तस्य लोचनयुगलं पुण्डरीकसमानं विकसितम्, अतः सः पुण्डरीकाक्षः इति लोके विश्रुतः कवेरुत्प्रेक्षा। श्लोको यथा[3] –

**निदाघधामानमिवाधिदीधितिं**
**मुदा विकासं मुनिमभ्युपेयुषी।**
**विलोचने विभ्रदधिश्रितश्रिणी**
**स पुण्डरीकाक्ष इति स्फुटोऽभवत्॥**

अत्राधिकप्रियस्य नारदस्य समागमनं विभावः। तदवलोकनेन चक्षुर्विकासः अनुभावः। एतद्विभावानुभावयोगेन श्रीकृष्णगतः हर्षः व्यज्यते। उक्तञ्च रसगङ्गाधरे हर्षभावालोचने–

---

1. (तत्रैव)
2. (1/46)
3. (1/24)

**देवभर्तृगुरुस्वामिप्रसादः प्रियसङ्गमः**
**मनोरथाप्तिरप्राप्यमनोहरधनागमः।**
**तथोत्पत्तिश्च पुत्रादेर्विभावो यत्र जायते**
**नेत्रवक्त्रप्रसादश्च प्रियोक्तिः पुलकोद्‌गमः॥**
**अश्रुस्वेदादयश्चानुभावा हर्षं तमादिशेत्॥ इति।**

सप्तमसर्गे भगवान् श्रीकृष्णः ऋतुभिः वितायमानां वनलक्ष्मी-मवलोकयितुं गतः। ततः यदवः अपि युवतियुताः तत्र गताः। वनविहारकाली युवतयः पुष्पचयनं चक्रुः। पुष्पचयनसमये कस्याश्चित् अवस्थां वर्णयितुकामः कविः लिखति[1]–

**'प्रियमभि कुसुमोद्यतस्य बाहोर्नवनखमण्डनचारु मूलमन्या।**
**मुहुरितरकराहितेन पीनस्तनतटरोधि तिरोदधेंऽशुकेन॥'**

यदा काचिदङ्गना प्रियसम्मुखे एकेन हस्तेन पुष्पचयनं करोति, तदा अपरेण हस्तेन स्व स्तनप्रान्ते वाहुमूले प्रियकृतनखक्षतं वस्त्रेणावृणोति। अत्र नायिकायाः चापलाख्यः व्यभिचारिभावः प्रकाशितः भवति। अपरञ्च व्रीडा व्यभिचारी भावः अपि प्रकाशते। 'आत्मप्रकाशिनी चेष्टा रागादेश्चापलं मतम्' इति व्रीडा चेयमिति मल्लिनाथः सर्वङ्कषायामाह। पुष्पचयनकाले अपरस्याः कस्याश्चित् अवस्थां कविः षड्भिः श्लोकैः कुलकेन वर्णयति।

तत्र– **विततवलिविभाव्य पाण्डुरेखाकृतपरभागविलीनरोमराजिः।**
**कृशमपि कृशतां पुनर्नयन्ती विपुलतरोन्मुखलोचनावलग्नम्॥**
**प्रसकलकुचबन्धुरोद्धुरोरःप्रसभविभिन्नतनूत्तरीयबन्धा।**
**अवनमदुदरोच्छ्वसद्दुकूलस्फुटतरलक्ष्यगभीरनाभिमूला॥**[2]

इत्यादौ पुष्पचयनार्थं नायिकायाः उत्कण्ठा व्यभिचारिभावः सम्यक् प्रतीयते। पुष्पचयनार्थं पादाङ्गुष्ठोपरि दण्डायमानत्वम्, मुखस्योर्ध्वीकरणत्वञ्च विभावः। कृशतनोः पुनः कृशीकरणम्, रोमराजेः विलीनत्वञ्चादिरनुभावः। अपरञ्च तत्रापि[3]–

---

1. (7/32)
2. (7/33-34)
3. (3/37

**कृतभयपरितोषसन्निपातं सचकितसस्मितवक्त्रवारिजश्रीः।**
**मनसिजगुरुतत्क्षणोपदिष्टं किमपि रसेन रसान्तरं भजन्ती।।**

अत्र पुष्पचयने जातविलम्बा काचित् यदा प्रियनिकटमागता तदा तस्याः विलम्बात् भयत्वम्, प्रियनिकटागमने तोषत्वम् (एतेन हर्षः व्यभिचारी कल्प्यते) चकितत्वम्, स्मितत्वं च प्रदर्शितम्। एते खलु व्यभिचारिणः वाच्याः भवन्त्यत्र, तेन नायिकायाः किलकिञ्चितं काव्यसौन्दर्यं पुष्णाति। मल्लिनाथस्य भाषायामत्र क्रोधाश्रुहीर्षभीत्यादेः सङ्करः।

काश्चन नायिकाः किसलयशकलेषु विद्यमानाः सन्ति। नायकैः स्पृष्टेषु तासामङ्गेषु पुलकोद्गमः जातः। वचनेन प्रकाशनायोग्याः केवलं नखक्षतेन दर्शनीयाः लिपयः तासां पुलकितेष्वङ्गेषु नायकैः कामशान्त्यर्थं कृताः। अत्रापि पुलकपदेन रोमाञ्चः प्रकाशितः भवति। अन्यत्र वनविहारवर्णने कविः लिखति[1]–

**व्रततिविततिभिस्तिरोहितायां प्रतियुवतौ वदनं प्रियः प्रियायाः।**
**यदधययदधरावलोपनृत्यत्करवलयस्वनितेन तद् विवव्रे।।**

अत्र तात्पर्यं यद् वनविहारकाले लताततिभिः सपत्न्यां तिरोहितायां (आवृत्तायाम्) सत्यां प्रियः स्वप्रियायाः अधरामृतं पीतवान्। अर्थात् प्रियायाः अधरं चुम्बितवान्। अधरचुम्बनेन जातायाः पीडायाः वशात् उत्पन्नः सीत्कारध्वनिः करमूलवलयध्वनिना आच्छादितः, येन सपत्नी एतत् ज्ञातुं न पारितवती। एतेन एका हृष्टा अपरा त्वीर्ष्या निर्वेदवतीति हर्षनिर्वेदव्यभिचारी अनुसन्धेयः। वनविहारेण तरुण्यः स्वेदप्लुताः जाताः, येन तासां श्रमः व्यज्यते। कविर्लिखति[2]–

**गत्वोद्रेकं जघनपुलिने रुद्धमध्यप्रदेशः**
**क्रामन्नूरुद्रुमभुजलताः पूर्णनाभीह्रदान्तः।**
**उल्लंघ्योच्चैः कुचतटभुवं प्लावयन् रोमकूपान्**
**स्वेदापूरो युवतिसरितां प्राप गण्डस्थलानि।।**

---

1. (7/45)
2. (7/74)

अत्र वनविहारः विभावः, युवतीनां स्वेदाविर्भावः अनुभावः। एतद्योगेन नायिकागतः श्रमः व्यभिचारी ध्वन्यते। दशमसर्गे नायिका-नायकानां मद्यपानशृङ्गारादिः वर्णितः अस्ति। तत्र मद्यपानेन मदः ध्वनिपथमायाति। यथा[1]–

**प्रातिभं त्रिसरकेण गतानां वक्रवाक्यरचनारमणीयः।**
**गूढसूचितरहस्यसहासः सुभ्रुवां प्रववृते परिहासः॥**
**हावहारि हसितं वचनानां कौशलं दृशि विकारविशेषाः।**
**चक्रिरे भृशमृजोरपि वध्वाः कामिनेव तरुणेन मदेन॥**

त्रिवारमद्यपानेन तरुणीनां वक्रवाक्यरचनाविशेषा जाताः। पूर्वं यत्किञ्चित् गूढमासीत्, तदधुना ताभिरुन्मोचितम्। तेन च तासां मध्ये-परस्परं परिहासः जातः। न केवलमेतत् अपि च मद्यपानेन हावहारि (विलासमनोहारि) हसितम्, वचनानां कौशलमर्थात् प्रागल्भ्यम्, नयने कटाक्षादिविकारविशेषा जाताः। नायिकानामेतादृगवस्थाकृते मद्यपानं विभावः। वक्रवाक्यरचना, गूढकथाप्रकाशनम्, मनोहारिहसितम्, कटाक्षपातः वचनानां कौशलञ्च अनुभावः। एतद्योगेन मदो नाम व्यभिचारी प्रकाशते। रसगङ्गाधरे पण्डितराजः अस्मिन् प्रसङ्गे लिखति 'मद्याद्युपयोगजन्मा, उल्लासाख्यः, शयनहसितादिहेतुश्चित्तवृत्तिविशेषो मदः' (प्रथमानने मदध्वनिः)। मदध्वनिप्रसङ्गे प्राचीनैरुक्तम्–'सम्मोहानन्दसन्दोहो मदो मद्योपयोगजः'। मदस्त्रिविधः। तत्रोत्तमे पुरुषे स्वापोऽनुभावः, मध्यमे हसितगाने नीचे तु रोदनपरुषोक्त्यादि। अयञ्च मदस्त्रिविधः। तरुणमध्यमाधमभेदेन। अव्यक्तासङ्गतवाक्यैः सुकुमारस्खलद्गत्या च योऽभिनीयते स आद्यः। भुजाक्षेपस्खलितघूर्णितादिभिः मध्यमः। गतिभङ्ग-स्मृतिनाश-हिक्काच्छर्दादिभिरधमः। अत्रालोचितमदः मध्यमः भवेत्। मद्यपानसमये वनितानाममर्षः असूया च व्यभिचारिभावः ध्वनिरूपेणात्मप्रकाशनं करोति। तथाहि[2]–

**अर्पितं रसितवत्यपि नामग्राहमन्ययुवतेर्दयितेन।**
**उज्झति स्म मदमप्यपिबन्ती वीक्ष्य मद्यमितरा तु ममाद॥**

---

1. (10/12-13)
2. (10/27)

अत्र कश्चिद् दयितः सपत्न्याः नाग्रहणपूर्वकं प्रकृतनायिकाकृते मद्यं पातुं दत्तवान्। तन्मद्यं पीत्वापि प्रकृतनायिका न ममाद, प्रत्युत यस्याः सपत्न्याः नाम दयितेन गृहीतं सा न पीत्वापि ममाद। अत्र मद्यपानकाले सपत्नीनामग्रहणात् प्रकृतनायिकायाः अमर्षासूयोर्ष्याभावः जातः। अत्र सपत्नीनामग्रहणं विभावः, प्रियायाः मद्यपानेनापि मदाभावत्वम् अनुभावः। सपत्न्याः हर्षः अपि व्यज्यते। अन्यत्रापि ईर्ष्यासूयाध्वनिस्थलं वर्तते। यथा–

**अन्यया॑ऽन्यवनितागतचित्तं चित्तनाथमभिशङ्कितवत्या।**
**पीतभूरिसुरयापि न मेदे निर्वृत्तिर्हि मनसो मदहेतुः॥**[1]

अपरा काचित् दयिता शङ्कितवती यत् तद्दयितः अन्यदयिताचित्तो वर्तते इति। अत एव पीतसुरापि सा उन्मादा न जाता। अत्रापि पूर्ववत् नायकस्य अन्यनायिकाचित्तत्वं विभावः सुरां पीत्वापि अनुन्मदत्वमनुभावः। एतद्योगेन अन्यनायिकां प्रति प्रकृतनायिकाया ईर्ष्यासूया च ध्वन्यते।

शिशुपालवधस्य पञ्चदशसर्गे युधिष्ठिरकृतहरिपूजामसहमानस्य शिशुपालस्य अमर्षवर्णनादि कृतमस्ति। तत्र एकस्मिन् श्लोके ईर्ष्यासूयामर्षाः व्यभिचारिभावा व्यक्ताः सन्तः सामाजिकान् तोषयन्ति। यथा[2]–

**अभितर्जयन्निव समस्तनृपगणमसावकम्पयत्।**
**लोलमकुटमणिरश्मि शनैरशनैः प्रकम्पितजगत्त्रयं शिरः॥**

अत्र युधिष्ठिरकृतहरिपूजनं प्रति असहमानः शिशुपालः तत्रत्यनृपान् अतर्जयत् अशनैरतिमात्रं प्रकम्पितजगत्त्रयं चञ्चलमुकुटमणिरश्मि स्वशिरः अकम्पयच्च। अत्र पूर्वानुवृत्तं हरेः कृते युधिष्ठिरेण प्रदत्तसम्मानं विभावः, पार्श्वस्थनृपानुद्दिश्य तर्जनम्, स्वशिरःकम्पनञ्चानुभावः। एतद्योगे हरिकृते शिशुपालगताः ईर्ष्यासूयामर्षाः च व्यज्यन्ते। पुनः स्थलान्तरे[3]–

**करकुड्मलेन निजमूरुमुरुतरनगाशक्ककर्कशम्।**
**त्रस्तचपलचलमानजनश्रुतभीमनादमयमाहतोच्चकैः॥**

1. (10/28)
2. (15/3)
3. (15/10)

अत्र शिशुपालः नगवद्विशालं कर्कशं निजमूरुं स्वकरेण उच्चैः ताडितवान्, येन भीमनादः समजनि, यच्छ्रवणेन जनाः भीता जाताः। अस्मिन् पद्ये पूर्ववत् हरेः कृते दत्तं सम्मानं विभावः। तदसहमानेन शिशुपालेन उच्चैः स्वकरेण स्वजानुताडनमनुभावः। एतद्योगेन शिशुपालगतः अमर्षः ईर्ष्यासूया च व्यज्यते। स्थलान्तरमालोचयामः। तत्र सर्गे शिशुपालसमर्थकानां सैन्यानां तत्पत्नीनाञ्च चेष्टावर्णनं वर्तते यथा[1]–

**न मुमोच लोचनजलानि दयितजयमङ्गलैषिणी।**
**यातमवनिमवसन्नभुजान्न गलद्विवेदवलयं विलासिनी॥**

अत्र युद्धार्थमुद्यते प्रिये प्रिया गलदश्रूणि प्रियस्यामङ्गलशङ्कया न मुमोच, परन्तु तस्याः अवसन्नकरात् वलयं भुवि गलितम्, एतद्वलयगलनं सा न विवेद। अत्र प्रियस्यावश्यं मृत्युर्भविष्यतीति कलनं क्रियते, करात् वलयगलनेन वलयच्युतिः विभावः। अवसन्नकरत्वमनुभावः। एतद्योगेन नायिकागतदैन्यं चिन्ता च व्यभिचारिभावः व्यज्यते। अन्यत्र पश्यामः[2] यथा–

**व्रजतः क्व तात वजसीति परिचयगतार्थस्फुटम्।**
**धैर्यमभिनदुदितं शिशुना जननीनिर्भर्त्सनविवृद्धमन्युना॥**

अत्र श्लोके युद्धार्थं प्रस्तुतस्य कस्यचित् सैनिकस्य पुत्रस्यावस्था वर्णितास्ति। युद्धार्थमुद्यतं पितरं शिशुपुत्रः पृच्छति, हे तात! त्वं क्व वजसि। अत्र शिशुत्वात् अस्पष्टोच्चारणे 'व्र' इत्यस्य रेफः लुप्ता। तथापि वर्णपरिचयत्वात् अस्यार्थः स्पष्टमवगतः। अमङ्गलं भवेदिति भिया गमनकाले एतादृशी पृच्छा न करणीया। अत एव जननी कुपिता सती शिशुपुत्रमतर्जयत्। तर्जनेन शिशुरपि विवृद्धमन्युर्जातः। अत्रास्पष्टस्वरेण शिशुना पितरं प्रति कृता पृच्छा विभावः। शिशुं प्रति जनन्याः तर्जनमनुभावः। एतद्योगेन दम्पत्योः दैन्य-विषाद-चिन्ता-शङ्कादयः व्यभिचारिणः व्यज्यन्ते। अन्यत्र पश्यामः। युद्धार्थमुद्यतम्, मनसा आनन्दमनुभवन्तं कमपि सैनिकं तस्य प्रिया वदति[3]–

1. (15/87)
2. (15/87)
3. (15/88)

**शठ! नाकलोकललनाभिरविरतरतं रिरंससे।**
**तेन वहसि मुदमित्यवदद् रणरागिणं रमणमीर्ष्ययाऽपरा।।**

हे शठ! युद्धार्थं त्वमानन्दितोऽसि। अहं चिन्तयामि त्वं स्वर्गे अप्सरोभिः सहाविरतरतं यथा स्यात् रन्तुमिच्छसि, अत एव मनसि ते महानन्दः। ईर्ष्यया सपत्न्यक्षमया एतादृशं वचनं काचित् उक्तवती। अत्र कण्ठतः उक्ता ईर्ष्या वाच्या। नाकलोकललनाभिः सहाविरतं रमणम् इति कथनेन युद्धे अवश्यं पतिः मरिष्यतीति मरणव्यभिचारी व्यज्यते। अन्यत्र पश्यामः[1]—

**विदुषीव दर्शनममुष्य युवतिरतिदुर्लभं पुनः।**
**यान्तमनिमिषमवितृप्तमनाः पतिमीक्षते स्म भृशमादृशः पथः।।**

अत्रापि विदुषी काचित् नायिका युद्धार्थं गच्छतः कस्यचित् सैनिकस्य अतिदुर्लभं दर्शनं भूयोभूयः पश्यतीति कथनेन सैन्यस्य पुनः गृहं प्रत्यावर्तनं नास्ति, तेन तस्य मरणं ध्वन्यते। अन्यत्र पश्यामः[2]—

**काचित् कीर्णा रजोभिर्दिविमनुवदधे भिन्नवक्त्रेन्दुलक्ष्मी-**
**रश्रीका काचिदन्तर्दिश इव दधिरे दाहमुद्भ्रान्तसत्त्वाः।**
**भ्रेमुर्वात्या इवान्याः प्रतिपदमपरा भूमिवत् कम्पमापुः**
**प्रस्थाने पार्थिवानामशिवमिति पुरोभावि नार्यः शशंसुः।।**[3]

युद्धार्थं यदा पार्थिवाः प्रस्थिताः, तदा तन्नार्यः काश्चित् रजोभिः कीर्णाः। काश्चिद् भिन्नवक्त्रेन्दुलक्ष्म्यो जाताः। काश्चिदन्तःसन्तप्ताः जाताः। काश्चिद् वात्या इव विभ्रेमुः। काश्चिद् भूमिकम्पवत् कम्पमापुः। नार्यः स्वस्वपतीनां भाविमरणं युद्धयात्राकाले कलयामासुः, येन तासामेतादृश्यवस्था जाता। अत्र युद्धप्रस्थानं विभावः, नारीणां रजःकीर्णत्वम्, भिन्नमुखशोभात्वञ्चादि अनुभावः। एतद्योगेन नारीगतः दैन्यविषादादिः व्यभिचारी व्यज्यते।

एवंरूपेण संक्षेपतः निबन्धेऽस्मिन् व्यभिचारिभावविषये आलोचना विहिता इति।

---

1. (15/94)
2. (15/99)
3. (15/96)

# शब्दार्थौ सत्कविरिव द्वयं विद्वानपेक्षते

प्रो. रहसविहारीद्विवेदी

उक्तिरियं शिशुपालवधमहाकाव्यप्रणेतुः ख्रीष्टसप्तमशताब्दोत्तरार्द्ध-जातस्य महाकवेर्माघस्य।

**'उपमा कालिसस्य भारवेरर्थगौरवम्।**
**दण्डिनः पदलालित्यं माघे सन्ति त्रयो गुणाः'॥**

**'काव्येषु माघः'** प्रभृत्यभ्युक्तयोऽस्य कवेः संस्कृतसाहित्यजगति समादरं प्रकाशयन्ति। यथा कालिदासो **'वागर्थाविव सम्पृक्ताविति'** यथा च भारविः[1] **'प्रसन्नगम्भीरपदा सरस्वतीति'**[2] निगदन् शब्दार्थौ निर्दिशति, तथैव माघोऽपि–

**'नालम्बते दैष्टिकतां न निषीदति पौरुषे।**
**शब्दार्थौ सत्कविरिव द्वयं विद्वानपेक्षते'॥**[3]

इति रूपेण काव्याधिकरणं काव्यशरीरं वा व्यनक्ति। माघेन बहुधाा व्यङ्ग्यभङ्ग्योपमादिमाध्यमेन काव्यतत्त्वानि निर्दिष्टानि सन्ति। एतेन तत्समीहितं काव्यस्वरूपं स्फुटीभवति। परिभाषास्वरूपमपि तन्मनसि विद्यते। यथा–

**'परितः प्रमिताक्षराऽपि सर्वं**
**विषयं व्याप्तवती गता प्रतिष्ठाम्।**
**न खलु प्रतिहन्यते कुतश्चित्**
**परिभाषेव गरीयसी यदाज्ञा'॥**[4]

---

1. रघु. 1.1
2. किरा. 14.3
3. शिशु. 02.86
4. शिशु. 16.80

प्रकर्षेण मिताक्षराऽपि सूत्रत्वाच्चाल्पाक्षराऽपि सर्वं विषयं परितो व्याप्तवती प्रतिष्ठां प्रामाण्यस्थितिं गता गरीयसी भूयिष्ठार्था परिभाषा– अनियमनिवारको न्यायविशेषः, न प्रतिहन्यते न बाध्यते। 'परिभाषा ह्येकदेशे स्थित्वाऽपि सर्वशास्त्रमभिज्वलयति दीपवदि'ति भाष्यकारः। एवं प्रमिताक्षराभिरुक्तिभिर्माघः स्वमहाकाव्ये काव्यतत्त्वानि प्रतिपादयति। तद्यथा–

स शुद्धवर्णायाः सरस्वत्या आग्रही। तस्य वाग्विशेषणानि ध्यातव्यानि–

**'द्योतितान्तःसमैः कुन्दकुड्मलाग्रदतः स्मितैः।**
**स्नापितेवाभवत्तस्य शुद्धवर्णा सरस्वती'।।**[1]

**'विभाावैरनुभावैश्च सात्त्विकैर्व्यभिचारिभिः।**
**आनीयमानः स्वादुत्वं स्थायिभावो रसः स्मृतः'।।** इति।

नाटकभोजनयोरुपमानोपमेयमाध्यमेन नाट्यरसस्यावस्थितिं निरूपयन् वक्ति–

**'स्वादयन् रसमनेकसंस्कृत-प्राकृतैरकृतपात्रसङ्करैः।**
**भावशुद्धिसहितैर्मुदं जनो नाटकैरिव बभार भोजनैः'।**[2]

रचनाकर्तुश्चातुर्येण गेयस्येव कतिपयैरेव वर्णैः स्वरैः (निषादादिभिः) गुम्फितवचनस्यानन्ता विचित्रता भवति–

**'वर्णैः कतिपयैरेव ग्रथितस्य स्वरैरिव।**
**अनन्ता वाङ्मयस्याहो गेयस्येव विचित्रता'।।**[3]

स्वप्रतिभानुसारेणासङ्गतं वर्णनं कर्तुं शक्यते, किन्तु पदार्थसङ्गतिमय औचित्यपूर्णः प्रबन्धः कष्टेन निर्मीयते–

**'बह्वपि स्वेच्छया कामं प्रकीर्णमभिधीयते।**
**अनुज्झितार्थसम्बन्धः प्रबन्धो दुरुदाहरः'।।**[4]

कवितन्तुवाययोरुपमानोपमेयमाध्यमेन कविवर्णनचातुर्यं निर्दिशति–

1. शिशु. 2.27
2. शिशु. 14.50
3. शिशु. 2.72
4. शिशु. 2.73

**म्रदीयसीमपि घनामनल्पगुणकल्पिताम्।**
**प्रसारयन्ति कुशलाश्चित्रां वाचं पटीमिव॥**[1]

कुशलाः कवयः म्रदीयसीमतिसुकुमराक्षरां श्लक्ष्णतरां च तथापि घनां गुर्वी (पटपक्षे सान्द्रां) अनल्पैर्बहुभिर्गुणैः श्लेषादिभिः (तन्तुभिश्च) कल्पितां रचितां (निर्मितां च) चित्रां शब्दादिविचित्रां (विचित्ररूपां) च वाचं पटीमिव प्रसारयन्ति।

**'रमणीयार्थप्रतिपादकः शब्दः काव्यं'** भवतीति पण्डितराजः, **वक्राभिधेयशब्दोक्तिरिष्टां वाचामलङ्कृतिरि**ति च भामहो वक्ति। प्रतिभामहत्त्वमुभावपि स्वीकुर्वाते। माघस्य कथनेनैतयोः संवादो दृश्यते तद्यथा–

**'प्रातिमन्त्रिसरकेण गतानां वक्रवाक्यरचनारमणीयः।**
**गूढसूचितरहस्यसहासः सुभ्रुवां प्रववृते परिहासः॥'**[2]

**'रमणीयता च लोकोत्तराह्लादजनकज्ञानगोचरते'**ति रमणीयताया अर्थो व्यधायि पण्डितराजैः, किन्तु माघस्य रमणीयतास्वरूपमेवं वरीवर्ति–

**'क्षणे क्षणे यन्नवतामुपैति तदेव रूपं रमणीयतायाः'।**[3]

**'दृष्टिपूर्वा अपि ह्यर्थाः सर्वे रसपरिग्रहात्।**
**सर्वे नवा इवाभान्ति मधुसाम इव द्रुमाः'॥**

इत्यलङ्कारकवचनेनास्य पद्यस्य संवादः स्फुटरूपेण दृश्यते। पूर्वोक्तस्य[4] क्षणे क्षणे इति) पद्यस्याव्यवहितप्राक्–

**'दृष्टोऽपि शैलः स मुहुर्मुरारेरपूर्ववद्विस्मयमाततान'।**

इति वचनमपि दृष्टपूर्वेत्यनेन संवदति। विरोधिनो रसस्योल्लेखमपि माघः करोति, यथ रौद्रश्रृङ्गारयोर्विरोधस्य वर्णनं विरोधाभासालङ्कारमाध्यमेन

1. शिशु. 2.72
2. शिशु. 10.12
3. शिशु. 4.17
4. शिशु. 4.17

प्रस्तौति–

**'धृतप्रत्यग्रशृङ्गाररसरागैरपि द्विपैः।**
**सरोषसम्भ्रमैर्बभ्रे रौद्र एव रणे रसाः'।।**[1]

सर्वतोभद्र–चक्रबन्ध–गोमूत्रिकाबन्धप्रभृतिकाव्यप्रवृत्तयः शिशुपालवधे दृश्यन्ते। माघसम्मतस्तासां प्रयोगो महाकाव्ये। तदेवम्–

**'विषमं सर्वतोभद्रचक्रगोमूत्रिकादिभिः।**
**श्लोकैरिव महाकाव्यं व्यूहैस्तदभवद्बलम्'।।**[2]

नाटके विहितानां मुखादिसन्धीनामपि सङ्केतं करोति–

**'दधतस्तनिमानमानुपूर्व्या बभुरक्षिश्रवसो मुखे विशालाः।**
**भरतज्ञकविप्रणीतकाव्यग्रथिताङ्का इव नाटकप्रपञ्चः'।।**[3]

पूर्वरङ्गादिनाटकविधानमपि स स्मारयति–

**'भवरिामवसरप्रदानाय वचांसि नः।**
**पूर्वरङ्गप्रसङ्गाय नाटकीयस्य वस्तुनः'।।**[4]

प्रबन्धरचनासु काचिदन्वितिरनिवार्या भवति। तस्य कथावस्तु एकस्मिन् सूत्रे ग्रथितं भवति तत्र नायको मालायामेकार्थतन्तुप्रोतायां यथा सुमेरुर्भवति तथा भवति। **'नायको नेतरि श्रेष्ठे हारमध्यमणावपि'** (विश्वः)। वस्तुतः समग्राऽपि रचना नायके केन्द्रिता भवति। अतो माघो वक्ति–

**'यातव्यपार्ष्णिग्राहादिमालायामधिकद्युतिः।**
**एकार्थतन्तुप्रोतायां नायको नायकायते'।।**[5]

कोमलवर्णप्रयोगललितं गीतं श्रुत्वा पशवोऽप्याकृष्टा भवन्ति। यथा–

---

1. शिशु. 19.37
2. शिशु. 19.41
3. शिशु. 20.44
4. शिशु. 2.8
5. शिशु. 2.92

**'विगतसस्यजिघत्समघट्टयत्कलमगोपवधूर्न मृगव्रजम्।**
**श्रुततदीरितकोमलगीतकध्वनिमिषेऽनिमिषेक्षणमग्रतः'॥**[1]

समेधिमेधया मधुकराङ्गनयाऽपि गम्भीरस्वरेणोच्चैर्गीयते–

**'मधुरया मधुबोधितमाधवी मधुसमृद्धिसमेधितमेधया।**
**मधुकराङ्गनया मुहुरुन्मदध्वनिभृता निभृताक्षरमुज्जगे'॥**[2]

एतेनावर्जकं स्वरमाधुर्यं काव्ये माघसम्मतमिति स्फुटम्। तथ्यमिदं मुहुर्मुहुः प्रतिपादितम्। यथा–

**'गतमनुगतवीणैरेकतां वेणुनादैः**
**कलमविकलतालं गायकैर्बोधहेतोः।**
**असकृदनवगीतं गीतमाकर्णयन्तः**
**सुखमुकुलितनेत्रा यान्ति निद्रां नरेशाः'॥**[3]

महाकविर्माघो न केवलं काव्यतत्त्वाख्यानं करोत्यपि तु राजशेखरादिवत्कविचर्यामपि निरूपयति, यथा–

**'क्षणशयितविबुद्धाः कल्पयन्तः प्रयोगा-**
**नुदधिमहति राज्ये काव्यवद् दुर्विगाहे।**
**गहनमपररात्रप्राप्तबुद्धिप्रसादाः**
**कवय इव महीपाश्चिन्तयन्त्यर्थजातम्'॥**[4]

उक्तेषु सन्दर्भेषु सिद्धमेतद् यन्माघः काव्यतत्त्वविषयेऽपि स्वकीयं गम्भीरं चिन्तनं स्वकीये शिशुपालवधमहाकाव्ये प्रस्तौति।

---

1. शिशु. 6.49
2. शिशु. 10.20
3. शिशु. 11.10
4. शिशु. 1.6

# शिशुपालवधे सौशब्द्यम्

डॉ. व्रजसुन्दरमिश्रः

सुरभारत्याः सर्जनसाम्राज्ये महाकविमाघः आलंकारिकाव्यकारेषु मुर्द्धन्यस्थानमध्यारोहतीति नास्त्यत्र कोऽपि शंकावकाशः। तस्य शिपालवध-महाकाव्यं स्थानकालपात्राणां सीमानमतिक्रम्य कालजयी कीर्त्तिस्तम्भ इव राराज्यते। काव्यस्यास्य गौरवं सौरभं च अतुलनीयमिति हेतोः काव्यमिदं बृहत्त्रयीमध्येऽन्तर्गतमस्ति।

शिशुपालवधस्य उत्कर्षाधायकेषु बहुषूपादानेषु सौशब्द्यं भवत्य-न्यतमम्। अस्य व्युत्पत्तिरेवं कर्त्तुं शक्यते यत् शोभनाः शब्दाः यस्मिन् तत् सुशब्दम्, तस्य भावः सौशब्द्यम्। अनेन पदेन शब्दसौन्दर्यमपि अवगम्यते। शब्दस्य सौन्दर्याधायकानि बहुनि उपादानानि सन्ति। तेषु पदलालित्यं भवति एकतमम्। अपरं भवति उपयुक्तस्थाने उपयुक्तशब्दानां प्रयोगः। अस्मिन् प्रसङ्गे माघो लब्धसिद्धिर्दृश्यते। यत्र यः शब्दः अपेक्षितस्तत्र स एव शब्दस्तेन प्रयुक्तः। प्रसङ्गेऽस्मिन् शिशुपालवधमहाकाव्यस्य प्रथमसर्गस्य प्रथमश्लोकमेवोदाहरणरूपेण विचारयितुं शक्यते। श्रियः पति श्रीमति शासितुं जगत् – इति प्रथमपादे पतिरिति यः शब्दोऽस्ति तस्य धवः प्रियः पतिः भर्त्ता इत्यादयः पयार्यवाचकशब्दाः अपि सन्ति। तद् यथा– धवः प्रियः पतिर्भर्त्ता[1]।

तत्र धव – प्रिय – इति पदयोः प्रयोगेण छन्दोभङ्गो न जायते। किन्तु माघेन तत्र पति-शब्द एव प्रयुक्तः। सौशब्द्याद्धेतोरेव माघेन एवं कृतम्। तत्र श्रीमति, शासितुम् जगत् इत्यादीनि त-युक्तपदानि सन्ति। अतः पति-शब्दस्य प्रयोगफलेन तत्रानुप्रासोऽलंकारः संजायते। एतदेव भवति सौशब्द्यम्, शब्दसौन्दर्यं च। यथार्थशब्दप्रयोगक्षेत्रे माघस्य तुलना नास्ति। 'नवसर्गे गते माघे नवशब्दो न विद्यते – इति यदुच्यते तत्तु माघस्य शब्दविषयकं पाण्डित्यमेव सूचयति। माघोऽतीव कुशलतया काव्योचितशब्दानां

चयनं करोति। तस्य शाब्दिक-पाण्डित्यं शिशुपालवध- महाकाव्ये यत्र तत्रोपलभ्यते। स कथयति यत् सत्कविः शब्दमर्थं च द्वयमेव अपेक्षते। यथा– शब्दार्थौ सत्कविरिव द्वयं विद्वानपेक्षते।[2]

अत्र प्रश्नः समुदेति यत् शब्दार्थौ कीदृशौ स्याताम्। प्रसङ्गेऽस्मिन् निम्नश्लोको विचारणीयः। तद् यथा–

**'क्षणशयितविबुद्धाः कल्पयन्तः प्रयोगा-**
**नुदधिमहति राज्ये काव्यवद्दुर्विगाहे।**
**गहनमपररात्रप्राप्तबुद्धिप्रसादाः**
**कवय इव महीपश्चिन्तयन्त्यर्थजातम्।।**[3]

अस्मिन् श्लोके माघः पदचतुष्टयं प्रति विदुषां ध्यानाकर्षणं करोति। तानि पदानि भवन्ति - कल्पयन्तः प्रयोगान्, काव्यवद्दुर्विगाहे, प्राप्तबुद्धिप्रसादाः, अर्थजातम् च। अत्र माघो विवक्षति यद् निर्मलबुद्धिसंपन्नः सत्कविः काव्यवत्कठिनकृत्याय अर्थगुणसमन्वितस्य रमणीयपदसमुदायस्य तथा अभिधा - लक्षणा - व्यञ्जनायुक्तस्य अर्थसमुदायस्य चोपरि गभीरचिन्तनं कुर्यात्। अस्मात् श्लोकात् माघस्याशयः एवं भवति–

(क) अर्थानामुपरि गम्भीररूपेण चिन्तयित्वा शब्दप्रयोगः।

(ख) शान्तवातावरणे बुद्धौ निर्मलतां प्राप्तायामेव काव्यरचनं करणीयम्।

(ग) काव्यस्य वर्ण्यविषयानुकूलस्य पदप्रयोगस्य कल्पना तथा रीतिगुणादिसमन्विता रसभावप्रधाना रचना।

(घ) विविधार्थप्रकाशनाय वाचक - लक्षक - व्यञ्जक - शब्दानामनुसन्धानम्।

महाकविर्माघः शब्दप्रवृत्तेः व्याकरणसम्मतं निरूपणं करोति। प्रसङ्गेऽस्मिन् निम्नलिखितः श्लोको विचारणीयः।

**'असम्पादयतः कञ्चिदर्थं जातिक्रियागुणैः।**
**यदृच्छाशब्दवत्पुंसः संज्ञायै जन्म केवलम्।।**[4]

अत्र माघः कथयति यत् जाति-क्रिया-गुणैः (गोत्व-पाचकत्व-शुक्लत्वादिभिः) कमप्यर्थविशेषमसंपादयत् डित्थ-डवित्थादि-यदृच्छाशब्दतुल्यं जाति-क्रिया-गुणैः (ब्राह्मणत्व- अध्ययनादि-शौर्यादिभिः) किमपि प्रयोजनं न साधयतः पुरुषस्य जन्म निरर्थकं भूत्वा केवलं संज्ञायै एव कल्पते। अस्मात् ज्ञायते यद् यथा जात्यादिप्रवृत्तिशून्याः स्वेच्छाकल्पिताः डित्थडवित्थादयः पारिभाषिकशब्दाः कस्यापि नाममात्रस्य बोधनाय अथवा ज्ञानसङ्केताय उद्दिष्टाः, तथा ब्राह्मणत्वादि-जात्यादि-प्रवृत्तिशून्यस्य कमप्यर्थविशेषं न बोधयतः पुरुषस्य निरर्थकं जन्मापि केवलं संज्ञायै एव भवति।

रुद्रटादयः आचार्याः शब्दस्य इदं प्रवृत्तिचतुष्टयमाधारीकृत्य अर्थालंकारान् निरूपयन्ति। तद् यथा–

**'अर्थः पुनरभिधावान् प्रवर्त्तते यस्य वाचकः शब्दः।**
**तस्य भवन्ति द्रव्यं गुणः क्रिया जातिरिति भेदाः॥[5]**

रुद्रटस्य मतानुसारेण शब्दानां प्रवृत्तिनिमित्तं भिन्नं व्युत्पत्तिनिमित्तं च भिन्नं भवति[6]। प्रसङ्गेऽस्मिन् शिशपालवधस्य एकः श्लोकोऽवश्यमेव विचारणीयः। यथा–

**'उद्धतान् द्विषतस्तस्य निघ्नतो द्वितयं ययुः।**
**पानार्थे रुधिरं धातौ रक्षार्थे भुवनं शराः॥[7]**

अत्रोक्तमस्ति यद् भगवतः श्रीकृष्णस्य शराः पानार्थे पा-पाने इति धातोः रक्तम्, पालनार्थे रक्षणार्थे च पा-रक्षणे इति धातोः भुवनं विषयीचक्रुः। एतदेव भवति सौशब्द्यं शब्दसौन्दर्यं च यत्तु माघेन सफलतया प्रतिपादितम्। अस्य श्लोकस्य व्याख्यानावसरे मल्लिनाथो माघस्याशयमनेन प्रकारेण स्पष्टीकरोति–

'पानार्थे धातौ' पा-पाने इति धातौ सति रुधिरं, रक्षार्थे धातौ 'पा-रक्षणे इति भुवनं जगच्चेति द्वितयं ययुः। रुधिरमपिबन् भुवनमरक्षन् चेति श्लेषार्थः। अत्र पानरक्षणयोरभेदाध्यवसायेन रुधिरभुवनयोस्तुल्ययोगितालंकारः। तत्र 'पानार्थे इत्यादिवाक्यस्य शत्रुवधेन भुवनमरक्षन्निति सूक्ष्मार्थगर्भत्वात् सौक्ष्म्यं नाम गुणः। 'अतः सङ्कल्परूपत्वं शब्दानां सौक्ष्म्यमुच्यते

इति लक्षणात्। प्रसङ्गेऽस्मिन्नपर एकः श्लोकोऽपि विचारणीयः। यथा–

**'छन्नेष्वपि स्पष्टतरेषु यत्र स्वच्छानि नारीकुचमण्डलेषु।**
**आकाशसाम्यं दधुरम्बराणि न नामतः केवलमर्थतोऽपि।।'**[8]

अत्र अम्बर-शब्दः आकाशं वस्त्रं चेति अर्थद्वयं द्योतयति। तत्र स्वच्छ-अम्बरेण (सूक्ष्म-वस्त्रेण) आच्छादितान्यपि नारीणां कुचमण्डलानि स्पष्टरूपेण दृश्यमानान्यासन्। अत एव तदम्बरं (वस्त्रम्) न केवलं नामत एव आकाशवाचकमासीत्, अपि तु अर्थतोऽपि तदाकाशसाम्यं उवाह। अर्थात् सूक्ष्मवस्त्रेण आच्छदितान्यपि कुचमण्डलानि निरावरणानीव आसन्। एतदेव भवति सौशब्द्यं यत्तु माघेनैव परिकल्पयितुं शक्यते।

शिशुपालवधस्य एकस्मिन् श्लोके माघो वर्णयति यद् यदा भगवतः श्रीकृष्णस्य अङ्गनाः स्वहस्तेषु पुष्पधारणं कृतवत्यः तदैव पुष्पस्य सुमनस्– इति नाम सार्थकं जातम्। यथा–

**'रथचरणधराङ्गनाकराब्ज-**
**व्यतिकरसंपदुपात्तसौमनस्याः।**
**जगति सुमनसस्तदादि नूनं**
**दधति परिस्फुटमर्थतोऽभिधानम्।।'**[9]

अत्र माघस्य आशयो भवति यद् आदौ पुष्पं केवलं संज्ञामात्रेण सुमनस् आसीत्। अर्थात् पुष्पस्य मनः शोभनमथवा प्रसन्नं नासीत्। किन्तु यादवाङ्गनानां करसंस्पर्शेण समागत्य पुष्पाणां मनः प्रसन्नं जातम्। अतस्तेषां सुमनस्– इति नामकरणं सार्थकं जातम्।

शब्दप्रयोगक्षेत्रे शब्दचयनक्षेत्रे च माघो बहु सतर्कतामवलम्बते। सौशब्द्यमेवासीत्तस्य ध्येयम्। अतः स स्वकाव्ये भिन्नार्थकानामपि स्पष्टार्थप्रतिपादकानां शब्दानां प्रयोगविषये सङ्केतं प्रयच्छति। यथा–

**'दमघोषसुतेन कश्चन प्रतिशिष्टः प्रतिभानवानथ।**
**उपगम्य हरिं सदस्यदः स्फुटभिन्नार्थमुदाहरद्वचः।।'**[10]

शिशुपालवधे माघस्य प्रतिभाचितशब्दाः सर्वथा सहृदयानां हृदयग्राहिणो दृश्यन्ते। शब्दानां माधुर्यं माघस्य अभीष्टमासीत्। यतो हि श्रोतारः मधुरशब्दान्

प्रति तत्क्षणमेव आकृष्टाः भवन्तिः। अप्रियरहितवाणीनामर्थात् प्रियशब्दानां प्रयोगोऽपि माघस्य अभीष्ट आसीत्। तद् यथा–

**'इत्थं गिरः प्रियतमा इव सोऽव्यलीकाः**
**शुश्राव सूततनयस्य तदाव्यलीकाः।**
**रन्तुं निरन्तरमियेष ततोऽवसाने**
**तासां गिरौ च वनराजिपटं वसाने॥**[11]

सौशब्द्याधाने अथवा शब्दसौन्दर्यप्रतिपादने बहून्युपादानानि उल्लेखनीयानि सन्ति। तेषु चित्रबन्धाः, एकाक्षरश्लोकाः, द्विअक्षरश्लोकाः, एकाक्षरपादश्लोकाः, असंयोगश्लोकाः, अतालव्यश्लोकाः, पदलालित्यम्, अलंकारप्रभृतयश्च प्रमुखभूमिकां निर्वाहयन्ति। एतेषु चित्रबन्धाः स्वतन्त्र-विचारमपेक्षन्ते। ततस्तेषामालोचनमत्र न क्रियते। अन्येषामुपादानानां विवेचनमत्र प्रस्तूयते।

**असंयोगश्लोकः–** शिशुपालवधे एकस्मिन् श्लोके कोऽपि संयुक्तवर्णो नास्ति। तद्यथा–

**निपीडनादिव मिथो दानतोयमनारतम्।**
**वपुषामदयापातादिभानामभितोऽगलत्॥** (शिशु. 19.68)

**एकाक्षरपादश्लोकः–** शिशुपालवधमहाकाव्ये एकःश्लाकोऽस्ति यत्र एकस्मिन् पादे एक एव वर्णः प्रयुक्तोऽस्ति। तद्यथा–

**जजौजोजाजिजिज्जाजी तं ततोऽतितताततुत्।**
**भाभोऽभीभाभिभूभाभूरारारिररिरीररः॥** (शिशु. 19.3)

**पदलालित्यम्–** सौशब्द्यस्य एकं प्रमुखमङ्गं भवति पदलालित्यम्। माघस्य पदलालित्यं यद्यपि सर्वजनविदितं तथापि दिङ्मात्रमत्रोदाहरणरूपेण प्रस्तूयते। यथा–

**'नवपलाश-पलाशवनं पुरः**
**स्फुटपराग-परागत-पङ्कजम्।**
**मृदूल-तान्त-लतान्तमलोकयत्**
**स सुरभिं सुरभिं सुमनोभरैः॥**[12]

पुनश्च–

**'मधुरया मधुबोधितमाधवी-**
**मधुसमृद्धिसमेधितमेधया।**
**मधुकराङ्गनया मुहुरुन्मद-**
**ध्वनिभृता निभृताक्षरमुज्जगे।।**[13]

अत्र स्थितं पदलालित्यं कस्य वा चित्ते आनन्दकन्दं न सृजति?

**अलंकाराः**– शब्दार्थौ एव काव्यस्य शरीरम्। अत एव यदि शब्दः सौन्दर्यान्वितो भवति तर्हि काव्यमपि सुन्दरं भवति। अर्थात् शब्दसौन्दर्यं परोक्षरूपेण काव्यसौन्दर्यमेव द्योतयति। काव्यसौन्दर्यप्रसङ्गे यद्यपि कथावस्तु-वर्णनशैली-रीति-गुण-छन्दः-रस-अलंकार-प्रभृतयः सर्वे विषयाः विचारणीयाः तथापि अलंकारा एव तत्र प्राधान्यमर्हन्ति। तदर्थमेव आचार्यवामनेनोक्तम्–

**'काव्यं ग्राह्यमलंकारात्, सौन्दर्यमलंकारः।**

काव्यसौन्दर्यप्रतिपादने यद्यपि उभयशब्दार्थालंकाराणां भूमिका स्वीक्रियते तथापि शब्दालंकारा एव भवन्ति मुख्याः। यतो हि अर्थालंकाराणां चमत्कारित्वं तु अर्थावबोधनात् परमेव प्रतीयते। किन्तु शब्दालंकाराः अर्थावबोधनं विनापि केवलं ध्वनिमाध्यमेन एव सहृदयहृदयं मोदयन्ति। अतः शब्दसौन्दर्यविचारप्रसङ्गे शब्दालंकाराः एव प्रमुखभूमिकां निर्वाहयन्तीति कथनं नातिवचनं भवति। शिशुपालवधे प्रयुक्ताः अलंकाराः अतुलनीयाः सन्ति। ततः काव्यमिदमपि उत्कर्षस्य चरमस्थानमधिरोहति। काव्यस्यास्य आलंकारिकोत्कर्षस्य विचारणात् प्राक् अपरे केचन बिन्दवोऽपि स्पर्शमपेक्षन्ते। कवयति वर्णयति कवते कौतीति वा कविः। प्रसङ्गेऽस्मिन् उक्तमस्ति यत्–'नानृषिर्भविता कविः, ऋषिस्तु किल दर्शनात्।' अतः क्रान्तदर्शनप्रसूतं सफलवर्णनमेव भवति कवेः सार्थकत्वम्। काव्ये वर्णनविधौ यस्य प्रज्ञान्वितः कल्पनाविलासो यावान् महान् स तावानेव सफलकविरिति वक्तुं शक्यते। अनेन क्रमेण महाकविर्माघः संस्कृतसाहित्ये सफलतमः स्रष्टास्ति। माघस्य कल्पनाविलासः सर्वानतिशेते। प्रसङ्गेऽस्मिन् एकमेवोदाहरणम् उक्तेरस्याः यथार्थतां प्रतिपादयिष्यति। एकादशसर्गे प्रभातवर्णनावसरे सूर्योदयमभिलक्ष्य माघो लिखति–

**विततपृथुवरत्रातुल्यरूपैर्मयूखैः**
**कलश इव गरीयान् दिग्भिराकृष्यमाणः।**
**कृतचपलविहङ्गालापकोलाहलाभि-**
**र्जलनिधिजलमध्यादेष उत्तार्यतेऽर्कः॥** (शिशु. 11.44)

अर्थात् यथा रमणी रज्जुद्वारा कूपमध्यात् घटं बहिरानयति तथा दिगङ्गनाः चतुर्दिक्षु विस्तृतैः किरणरूपपृथुलरज्जुभिः सागररूपकूपमध्यात् कलशतुल्यबालसूर्यं बहिरानयन्ति। एतदेव भवति कल्पनाविलासस्य चमत्कारित्वं यत् स्रष्टुं माघ एव क्षमः। पुनश्च चतुर्थसर्गे प्रभातर्णनावसरे रैवतकपर्वतस्योभयपार्श्वे उदीयमानसूर्यस्य अस्तगामिचन्द्रस्य च शोभां वर्णय माघो यन्निर्दिशति तत्र कस्य वा सहृदयस्य मनो न मोमुद्यते? तत्र कविर्लिखति-

**उदयति विततोर्ध्वरश्मिरज्जा-**
**वहिमरुचौ हिमधाम्नि याति चास्तम्।**
**वहति गिरिरयं विलम्बिघण्टा-**
**द्वयपरिवारितवारणेन्द्रलीलाम्॥** (शिशु. 4.20)

अर्थात् रैवतकपर्वतस्य एकस्मिन् पार्श्वे उदीयमानसूर्यः अपरस्मिन् पार्श्वे अस्ताचलगामी चन्द्रश्च रैवतकरूपगजस्य स्कन्धदेशे प्रलम्बमानं घण्टाद्वयमिव आभातः। एषा एव वर्णना महाकविं माघं **घण्टामाघ** - उपाधिना विभूषयति इत्यत्र किं वा न वैचित्र्यम्?

अलंकारप्रयोगे माघस्य पाटवमसाधारणमस्ति। विशेषतः माघस्य यमकालंकारः सहृदयहृदयं निःसन्देहं द्रावयति। शिशुपालवधस्य षष्ठसर्गे वसन्तवर्णनावसरे माघेन लिखितः 'नवपलाश-पलाशवनम्---इति श्लोकः कस्य वा चित्ते आनन्दस्य स्रोतः न प्रवाहयति। अर्थावबोधनं विना संस्कृतेतरविषयपाकाः अपि अस्मिन् श्लोके मज्जमानाः दृश्यन्ते। श्लोकस्य पदलालित्यं तथैवास्ति।

अस्य श्लोकस्य शब्दसौन्दर्यविषये किं वा वक्तव्यम्? अत्र सम्प्रति विविधचित्रबन्धविलसिते काव्यस्य ऊनविंशतिसर्गे माघप्रयुक्तेषु

विविधेषु यमकेषु कानिचिदुदाहरणानि प्रस्तूयन्ते। यतो हि सौशब्द्याधाने शब्दसौन्दर्यप्रतिपादने च यमकालंकार एव प्रमुखभूमिकां निर्वाहयति।

शिशुपालवधस्य ऊनविंशतिसर्गस्य एकस्मिन् स्थाने माघः श्लोकप्रतिलोमयमकं प्रयुङ्क्ते। अस्मिन् यमके एकस्य श्लोकस्य शेषवर्णतः आरभ्य प्रतिलोमतया पठनेन परवर्त्ती श्लोकः निर्मीयते[14]। तद् यथा–

**वाहनाजनि मानासे साराजावनमा ततः।**
**मत्तसारगराजेभे भारीहावज्जनध्वनि।।** (शिशु. 19.33)

**निध्वनज्जवहारीभा भेजेरागरसात्तमः।**
**ततमानवजारासा सेना मानिजनाहवा।।** (शिशु. 19.34)

सौशब्द्यस्य एतादृशं चमत्कार्युदाहरणं संस्कृतवाङ्मयेऽन्यत्र कुत्रापि नोपलभ्यते। माघस्तत्र स्थानद्वये अर्द्धपादप्रतिलोमयमकस्य प्रयोगं करोति। अस्मिन् यमके प्रत्येकं पादस्य प्रथमार्धस्य प्रतिलोमपठनेन तस्य पादस्य द्वितीयार्धं सम्भवति। उदाहरणं यथा–

**नानाजाववजानाना सा जनौघघनौजसा।**
**परानिहाऽहानिराप तान्वियाततयाऽन्विता।।** (शिशु. 19.40)

**वारणागगभीरा सा साराऽभीगगणारवा।**
**कारितारिवधा सेना नासेधा वरितारिका।।** (शिशु. 19.44)

शिशुपालवधस्य ऊनविंशतिसर्गस्य एकस्मिन् श्लोके गतप्रत्यागत-यमकस्य अथवा अर्धप्रतिलोमयमकस्य प्रयोगः दृश्यते। अस्मिन् यमके श्लोकस्य शेषवर्णतः आरभ्य प्रतिलोमतया पठनेन स एव श्लोकः संजायते। उदाहरणं यथा–

**तं श्रिया घनयाऽनस्तरुचा सारतया तया।**
**यातया तरसा चारुस्तनयाऽनघया श्रितम्।।** (शिशु. 19.88)

तत्र श्लोकद्वये माघः समुद्गयमकं दर्शयति। अस्मिन् यमके श्लोकस्य प्रथमपादेन सह तृतीयपादः, द्वितीयपादेन सह चतुर्थपादश्च सम्पूर्णरूपेण साम्यमावहतः[15]। उदाहरणं यथा–

**अयशोभिदुरालोके कोपधाम रणादृते।**
**अयशोभिदुरा लोके कोपधा मरणादृते।।** (शिशु. 19.58)

पुनश्च अपरस्मिन् समुद्गयमके प्रथमपादेन सह द्वितीयपादस्य, तृतीयपादेन सह चतुर्थपादस्य च सम्पूर्णं साम्यं विद्यते। तद् यथा–

**सदैव संपन्नवपू रणेषु**
**स दैवसंपन्नवपूरणेषु।**
**महो दधे स्तारि महानितान्तं**
**महोदधेऽस्तारिमहा नितान्तम्।।** (शिशु. 19.118)

पुनश्च तत्र श्लोकद्वये आद्यन्तयमकस्य प्रयोगोऽस्ति। अस्मिन् यमके श्लोकस्य प्रथमपादस्य प्रथमांशेन सह द्वितीयपादस्य शेषांशस्य, तृतीयपादस्य प्रथमांशेन सह चतुर्थपादस्य शेषांशस्य च साम्यं लक्ष्यते। उदाहरणं यथा–

**वाजिनः शत्रुसैन्यस्य समारब्धनवाजिनः।**
**वाजिनश्च शरा मध्यमविशन् द्रुतवाजिनः।।** (शिशु. 19.62)

**सादरं युध्यमानापि तेनान्यनरसादरम्।**
**सा दरं पृतना निन्ये हीयमाना रसादरम्।।** (शिशु. 19.23)

माघेन तत्र एकस्मिन् श्लोके आद्ययमकस्य प्रयोगः कृतः। अस्मिन् यमके श्लोकस्य प्रथमपादस्य प्रथमपदेन सह तृतीयपादस्य प्रथमपदस्य, द्वितीयपादस्य प्रथमपदेन सह चतुर्थपादस्य प्रथमपदस्य च साम्यं वर्त्तते। उदाहरणं यथा–

**करेणुः प्रस्थितोऽनेको रेणुर्घण्टाः सहस्त्रशः।**
**करेऽणुः शीकरो जज्ञे रेणुस्तेन शमं ययौ।।** (शिशु. 19.36)

एतैः सह माघः शिशुपालवधस्य ऊनविंशतिसर्गस्य एकविंशतिश्लोकेषु अन्त्यपादयमकस्य प्रयोगं करोति। अस्मिन् यमके श्लोकस्य द्वितीयपादेन सह चतुर्थपादः वर्णावृत्तिदृष्ट्या सम्पूर्णं साम्यमावहति। तद् यथा–

**कृत्वा शिनेः शाल्वचमूं सप्रभावा चमूर्जिताम्।**
**ससर्ज वक्त्रैः फुल्लाब्जसप्रभा वाचमूर्जिताम्।।** (शिशु. 19.7)

पृथोरध्यक्षिपद्रुक्मी यया चापमुदायुधः।
तयैव वाचापगमं ययाचापमुदा युधः।। (शिशु. 19.9)

या बभार कृतानेकमाया सेना ससारताम्।
धनुः स कर्षन् रहितमायासेनाससार ताम्।। (शिशु. 19.15)

दूरादेव चमूर्भल्लैः कुमारो हन्ति स स्म याः।
न पुनः सांयुगीं ताः स्म कुमारो हन्ति सस्मयाः।। (शिशु. 19.17)

तस्यावदानैः समरे सहसा रोमहर्षिभिः।
सुरैरशंसि व्योमस्थैः सह सारो महर्षिभिः।। (शिशु. 19.19)

सोढुं तस्य द्विषो नालमयोधरवा रणम्।
ऊर्णुनाव यशश्च द्यामपयोधरवारणम्।। (शिशु. 19.21)

अहितानभि वाहिन्या स मानी चतुरङ्गया।
चचाल वल्गत्कलभसमानीचतुरङ्गया।। (शिशु. 19.25)

दिवमिच्छन्युधा गन्तुं कोमलामलसंपदम्।
दधौ दधानोऽसिलतां कोऽमलामलसं पदम्।। (शिशु. 19.31)

न तस्थौ भर्तृतः प्राप्तमानसंप्रतिपत्तिषु।
रणैकसर्गेषु भयं मानसं प्रति पत्तिषु।। (शिशु. 19.38)

संहत्या सात्वतां चैद्यं प्रति भास्वरसेनया।
ववले योद्धुमुत्पन्नप्रतिभा स्वरसेन या।। (शिशु. 19.42)

केनचित्स्वासिनान्येषां मण्डलाग्रानवद्यता।
प्रापे कीर्तिप्लुतमहीमण्डलाग्राऽनवद्यता।। (शिशु. 19.48)

अन्येन विदधेऽरीणामतिमात्रा विलासिना।
उद्गूर्णेन चमूस्तूर्णमतिमात्राविलाऽसिना।। (शिशु. 19.50)

शस्त्रव्रणमयश्रीमदलंकरणभूषितः।
ददृशेऽन्यो रावणवदलङ्करणभूषितः।। (शिशु. 19.52)

भीमतामपरोऽम्भोधिसमेऽधित महाहवे।
दाक्षे कोपः शिवस्येव समेधितमहा हवे।। (शिशु. 19.54)

**रणे रभसनिर्भिन्नद्विपपाटविकासिनि।**
**न तत्र गतभीः कश्चिद्विपपाट विकासिनि॥** (शिशु. 19.56)

**रक्तस्त्रुतिं जपासूनसमरागामिषुव्यधात्**
**कश्चित्पुरः सपत्नेषु समरागामिषु व्यधात्॥** (शिशु. 19.64)

**येनाङ्गमूहे व्रणवत्सरुचा परतोमरैः।**
**समत्वं स ययौ खड्गत्सरुचापरतोऽमरैः॥** (शिशु. 19.74)

**अभावि सिन्ध्वा संध्याभ्रसदृग्रुधिरतोयया।**
**हृते योद्धुं जनः पांशौ स दृग्नुधि रतो यया॥** (शिशु. 19.76)

**असृग्जनोऽस्त्रक्षतिमानवमज्जवसादनम्।**
**रक्षःपिशाचं मुमुदे नवमज्जवसादनम्॥** (शिशु. 19.78)

**बन्धौ विपन्नेऽनेकेन नरेणेह तदन्तिके।**
**अशोचि सैन्ये घण्टाभिर्न रेणे हतदन्तिके॥** (शिशु. 19.80)

**युद्धमित्थं विधूतान्यमानवानभियो गतः।**
**चैद्यः परान् पराजिग्ये मानवानभियोगतः॥** (शिशु. 19.82)

एतदतिरिच्य तस्मिन् ऊनविंशतिसर्गे अपरे त्रयः श्लोकाः सन्ति यत्र अन्त्ययमकं विद्यते। तेषु श्लोकेषु तृतीयपादेन सह चतुर्थपादस्य सम्पूर्णं साम्यं न भूत्वा केवलं शेषांशेन सह शेषांशस्य साम्यं वर्त्तते। उदाहरणं यथा–

**तत्र बाणाः सुपुरुषः समधीयन्त चारवः।**
**द्विषामभूत्सुपरुषस्तस्याकृष्टस्य चारवः॥** (शिशु. 19.92)

**प्रापे रूपी पुराऽरेपाः परिपूरी परः परैः।**
**रोपैरपारैरुपरि पुपूरेऽपि परोऽपरैः॥** (शिशु. 19.94)

**भीमास्त्रराजिनस्तस्य बलस्य ध्वजराजिनः।**
**कृतघोराजिनश्चक्रे भुवः सरुधिरा जिनः॥** (शिशु. 19.112)

यमकेन सह अनुप्रासालंकारा अपि सौशब्द्यप्रतिपादनक्षेत्रे उल्लेखनीयभूमिकां निर्वाहयन्ति। शिशुपालवधे माघः एकाक्षरसाहाय्येन अक्षरद्वयसाहाय्येन च यान् श्लोकान् लिखति ते सन्ति सौशब्द्यस्य रमणीयनिं

निदर्शनानि।

**एकाक्षरश्लोकः–** समग्रे काव्ये एकः एकाक्षरश्लोकः अस्ति। तद् यथा–

**दाददो दुद्ददुद्दादी दादादो दूददीददोः।**
**दुद्दादं दददे दुद्दे ददाददददोऽददः॥** (शिशु. 19.114)

**द्वि-अक्षरश्लोकाः–** समग्रे काव्ये अक्षरद्वयसाहाय्येन रचिता दशश्लोकाः सन्ति। एते श्लोका अपि सौशब्द्यस्य चमत्कारसाम्राज्यं समुद्वहन्ति। तेषामुदाहरणं क्रमेणात्र प्रस्तूयते–

**भूरिभिर्भारिभिर्भीरैर्भूभारैरभिरेभिरे।**
**भेरीरेभिभिरभ्राभैरभीरुभिरिभैरिभाः॥** (शिशु. 19.66)

**नीलेनानालनलिननिलीनोल्ललनालिना।**
**ललनालालनेनालं लीलालोलेन लालिना॥** (शिशु. 19.84)

**विभावी विभवी भाभो विभाभावी विवो विभीः।**
**भवाभिभावी भावावो बवाभावो भुवो विभुः॥** (शिशु. 19.86)

**प्रापे रूपी पुराऽरेपाः परिपूरी परः परैः।**
**रोपैरपारैरुपरि पुपूरेऽपि परोऽपरैः॥** (शिशु. 19.94)

**लोकालोकी कलोऽकल्ककलिलोऽलिकुलालकः।**
**कालोऽकलोऽकलिः काले कोलकेलिकिलः किल॥**
(शिशु. 19.98)

**वररोऽविवरो वैरिविवारी वारिरारवः।**
**विववार वरो वैरं वीरो रविरिवौर्वरः॥** (शिशु. 19.100)

**राजराजी रुरोजाजेरजिरेऽजोऽजरोऽरजाः।**
**रेजारिजूरजोर्जार्जी रराजर्जुरजर्जरः॥** (शिशु. 19.102)

**क्रूरारिकारी कोरेककारकः कारिकाकरः।**
**कोरकाकारकरकः करीरः कर्करोऽर्करुक्॥** (शिशु. 19.104)

**दारी दरदरिद्रोऽरिदारूदारोऽद्रिदूरदः।**

**दूरादरौद्रोऽददरद्रोदोरुद्धारुरादरी।।** (शिशु. 19.106)

**शूरः शौरिरशिशिरैराशाशैराशु राशिशः।**
**शरारुः श्रीशरीरेशः शुशूरेऽरिशिरः शरैः।।** (शिशु. 19.108)

**अतालव्यश्लोकः–** समग्रे महाकाव्ये एकः श्लोकोऽस्ति यत्र तालव्यवर्णो नास्ति। तद्यथा–

**नामाक्षराणां मलना मा भूद्भर्तुरतः स्फुटम्।**
**अगृह्णत पराङ्गानामसूनस्त्रं न मार्गणाः।।** (शिशु. 19.110)

श्लोकोऽयं भवति सौशब्द्यस्य एकं चारुतरं निदर्शनम्।

अनेन प्रकारेण यमकालंकारस्य अन्येषामुपादानानां च सफलप्रयोग-फलेन शिशुपालवधमहाकाव्यं सौशब्द्यस्य परां काष्ठामाधत्ते। माघो भवति तादृशः शिल्पी यो वर्णरूप-पाषाणखण्डानां प्रयोगेण शिशुपालवधरूपं काव्य-कोणार्कं निर्माति यत्तु अतुलनीयमासीत् अस्ति स्थास्यति च।

1. अमरकोषः, 2.6.35
2. शिशुपालवधम्, 4.65
3. तत्रैव, 11.6
4. तत्रैव, 6.6
5. काव्यालंकारः,
6. अन्यद्धि शब्दानां प्रवृत्तिनिमित्तमन्यच्च व्युत्पत्तिनिमित्तम्, तत्रैव,
7. शिशुपालवधम्, 6.8
8. तत्रैव, 3.56
9. तत्रैव, 7.28
10. तत्रैव, 16.1
11. तत्रैव, 5.1
12. तत्रैव, 6.2
13. तत्रैव, 6.20
14. आवृत्तिः प्रातिलोम्येन पादार्धश्लोकगोचरा।
    यमकं प्रतिलोमत्वात् प्रतिलोममिति स्मृतम्।। काव्यादर्शः
15. अर्धाभ्यासः समुद्रः स्यादस्य भेदास्त्रयो मताः,

# शिशुपालवधमहाकाव्य में औचित्य चर्चा

डॉ. अरविन्द कुमार

**"कवेर्भावः काव्यम्"** अर्थात् कवि का भाव काव्य है, काव्यनिर्माण में वह स्वतन्त्र है, कवि की सृष्टि ब्रह्मा की सृष्टि से भिन्न है। जिसमें कवि के इतर किसी का नियन्त्रण नहीं रहता है। ऐसी स्थिति में काव्यशास्त्रियों ने **"वाक्यं रसात्मकं काव्यम्"**[1], **रीतिरात्मा काव्यस्य**[2], **शब्दार्थौ सहितौ काव्यम्**[3], **तददोषौ शब्दार्थौ सगुणावनलंकृती पुनः क्वापि**[4], **रमणीयार्थप्रतिपादकः शब्दः काव्यम्"**[5] ऐसे ही काव्य के लक्षण प्रदर्शित किए है। उस काव्य-परिधि में प्रायः छह सम्प्रदाय दिखाई पड़ते हैं, जिसमें भरत ने काव्य की आत्मा रस को, वामन ने रीति को, भामहवामनादि ने अलंकार को, आनन्दवर्धन ने ध्वनि को, क्षेमेन्द्र ने औचित्य को, कुन्तक ने वक्रोक्ति को काव्य की आत्मा के रूप में स्वीकार किया है। दृश्यकाव्य में नाटकादि श्रव्यकाव्य के रूप में महाकाव्य, चम्पूकाव्य, खण्डकाव्य आदि प्रसिद्ध है। महाकाव्यों में भारवि के किरातार्जुनीयम्, माघ में शिशुपालवधम् और श्रीहर्ष के नैषधीयचरितम् इन तीनों महाकाव्यों को बृहत्त्रयी कहा जाता है। तथा कालिदास के तीनों काव्यों को लघुत्रयी की संज्ञा दी गई है। बृहत्त्रयी काव्य-परम्परा में महाकवि माघ द्वारा लिखित शिशुपालवध महाकाव्य में औचित्य का कैसा विन्यास है, इस विषय पर मेरा यह शोधपत्र आधारित है।

---

1. साहित्यदर्पणकारः।
2. वामनः।
3. भामहः।
4. मम्मटः।
5. पण्डितराजजगन्नाथः।

शिशुपालवध महाकाव्य में औचित्य की चर्चा करने से पहले औचित्य क्या है? इस पर कुछ चर्चा करनी आवश्यक है। संस्कृतकाव्यधारा का एक महत्वपूर्ण तत्त्व **"औचित्य"** है। औचित्य का साम्राज्य बड़ा ही व्यापक एवं विस्तृत है। औचित्य का अर्थ **"उचित का भाव"**। अर्थात् जो वस्तु जिसके अनुकूल होती है उसे हम उचित कहते हैं और उचित का भाव ही औचित्य कहलाता है। किसी वस्तु के साथ सम्बद्ध या जुड़ी हुई वस्तु को अनुरूप अनूकूल या उचित कहना चाहिए चूँकि अपस्वरूप वस्तु के लिए साहित्य का क्षेत्र नहीं होता, व्यवहार में भी यही वस्तु देखी जाती है जैसे मोतियों का हार गले में पहना जाता है तथा नूपुर बाँधे जाते हैं पैर में, इत्यादि। यदि मोतियों का हार गले को छोड़कर दूसरी जगह हाथ में पहना जाए तो बड़ा ही अनुचित लगता है। उससे यह अंग का सौन्दर्य कभी नहीं बढ़ता, इससे यह सिद्ध होता है कि जिसका जहाँ उचित स्थान है वहाँ पर ही उसका व्यवहार होना चाहिए। इसीलिए आचार्य क्षेमेन्द्र की सम्मति में रससिद्ध काव्य का स्थिर जीवन औचित्य ही होता है।

**औचित्य रससिद्धस्य स्थिरं काव्यस्य जीवितम्**[1]

आचार्य क्षेमेन्द्र ने औचित्य की परिभाषा इस प्रकार की है–

**उचितं प्राहुराचार्याः सदृशं किल यस्य यत्।**
**उचितस्य च यो भावः तदौचित्यं प्रचक्षते।।** इति।।

अर्थात् जो वस्तु जिसके अनुरूप होती है उसे हम **'उचित'** कहते हैं। उचित का भाव ही औचित्य कहलाता है। रस तथा औचित्य के पारस्परिक सम्बन्ध का प्रतिपादन **"औचित्यविचारचर्चा"** में नितरां स्फुट है। क्षेमेन्द्र ने प्रथमतः रस को काव्य की आत्मा माना है, पश्चात् औचित्य को इसका **"जीवित"** जीवन स्वीकार किया है। इस प्रसंग में जीवित शब्द का प्रयोग अभिनवगुप्त ने भी किया है। वे औचित्य से संवलित रसध्वनि को काव्य का जीवित कहते हैं। अभिनव ने इस प्रकार

---

1. औ.वि.च.का.–5

**"आत्मा"** और **"जीवित"** पदों को एक दूसरे का पर्यायवाची माना है। दोनों का एक ही समान तात्पर्य है– सारभूत अर्थ, परन्तु क्षेमेन्द्र ने इन पदों के सूक्ष्म तात्पर्य की भिन्नता की ओर संकेत किया है, काव्य का प्राणरूप है रस और जीवभूत है औचित्य, जैसा कि कहा गया है--

**औचित्यस्य चमत्कार-कारिणश्चारु चर्वणे।**
**रसजीवितभूतस्य विचारं कुरुतेऽधुना।।**[1]

काव्य में चमत्कार का उदय औचित्य से सम्पन्न होता है। औचित्य के अभाव में काव्य में उस मनोज्ञता का जन्म ही नहीं हो सकता जिसमें वह सहृदयों को अपनी ओर आकृष्ट कर सके, यही तथ्य रस का जीवित भी है। काव्य में इसकी सत्ता मानकर ही क्षेमेन्द्र ने यह अपनी मौलिक कल्पना की है। इस तत्त्व को यथार्थतः समझाने के लिए ही इनका यह नवीन उद्योग है। औचित्य के दृष्टान्त रूप में यह कहा जा सकता है कि सीता के सौन्दर्य से मुग्ध होकर रावण का व्याकुल हृदय अचेत पड़ा हुआ हैं। उसी समय ब्रह्मा, बृहस्पति तथा नारद जैसे देवतागण और महर्षिगण रावण के प्रताप से आक्रान्त होकर उसकी प्रशस्ति के लिए रावण के चौखट पर उपस्थित होते हैं, इस पर द्वारपाल लम्बी फटकार लगाता है–

**ब्रह्मन्नध्ययनस्य नैष समयः, तूष्णीं बहिः स्थीयताम्,**
**स्वल्पं जल्प बृहस्पते! जडमते नैषा सभा वज्रिणः।**
**वीणां संहर नारद! स्तुतिकथालापैरलं तुम्बरो,**
**सीतारल्लकभल्लभग्नहृदयः स्वस्थो न लंकेश्वरः।।**

यह श्लोक अत्यन्त मनोरम है तथा औचित्य के कारण इसकी रुचिरता विवेचकों की दृष्टि में बढी-चढी है। इस पद्य में विशिष्ट अर्थों क़ी अभिव्यक्ति के लिए शब्दों का चुनाव बहुत ही समीचीन तथा उचित है। बृहस्पति के लिए जडमति का प्रयोग अनुरूप ही है। इसीलिए उनके कथन को जल्पना कहा गया है। इसी प्रकार सीता के सिन्दूर से चर्चित

---

1. औ.वि.च. श्लो. 3

माँग की उपमा रक्तरञ्जित भालों से देना कितना औचित्य है, इसको तो सहृदय ही समझ सकते हैं, इस प्रकार यह उपमा सर्वथा अनुरूप और उचित है। उचित पदों का प्रयोग न होने से काव्य का समग्र आनन्द जाता रहता है। उसका सारा मजा किर किरा हो जाता है। कोई भी वाक्य अलंकारों से कितना भी अलंकृत क्यों न हो, परन्तु यदि उसमें औचित्य का अभाव हो चाहे वह पद का हो या अर्थ का, तो उसकी सुन्दरता जाती रहती है, और वह कथमपि हृदय को आकृष्ट नहीं करता।

औचित्य के प्रभेद सन्दर्भ में चर्चा करते हैं तो औचित्य का भेद साधारणतः अनन्त है। काव्य के प्रत्येक अंग और उपांग पर इस तथ्य का व्यापक प्रभाव है। औचित्यविचारचर्चा में क्षेमेन्द्र ने 27 प्रकार के औचित्यों का वर्णन किया है।

**1. पद 2. वाक्य 3. प्रबन्ध 4. गुण 5. अलंकार 6. रस 7. क्रिया 8. कारक 9. लिंग 10. वचन 11. विशेषण 12. उपसर्ग 13. निपात 14. काल 15. देश 16. कुल 17. व्रत 18. तत्त्व 19. सत्त्व 20. अभिप्राय 21. स्वभाव 22. सारसंग्रह 23. प्रतिभा 24. अवस्था 25. विचार 26. नाम 27. आशीर्वाद।**

इसी प्रकार औचित्य के 27 भेद क्षेमेन्द्र ने प्रतिपादन किया है। जिसको ध्यान में रखते हुए शिशुपालवध में माघ ने कैसा औचित्य का प्रतिपादन किय है, क्षेमेन्द्र का औचित्य का विन्यास माघ काव्य में कैसा है इसकी चर्चा करते हुए शिशुपालवध के प्रथम श्लोक पर यदि ध्यान देते हैं तो यह प्रतीत होता है कि– महाकवि माघ ने जो क्रिया एवं कारक पद का प्रयोग किया है उसमें समुचित काल का निदर्शन है। जैसा कि–

**श्रियः पतिः श्रीमति शासितुं जगज्जगन्निवासो वसुदेवसद्मनि।**
**वसन् ददर्शावतरन्तमम्बराद् हिरण्यगर्भाङ्गभुवं मुनिं हरिः॥**[1]

---

1. शिशुपालवधम् 1.1

यहाँ पर **"ददर्श"** जो क्रिया पद का प्रयोग किया है वह "दृश् धातु के लिट् लकार" **"परोक्षे लिट्"** इस पाणिनीय सूत्र से सम्पन्न है। जो कि अतीत का बोधक है। अतः यहाँ पर यह प्रयोग उचित है क्योंकि ऐसे सन्दर्भ को किसी ने देखा नहीं ऐसी दृष्टि में यह प्रयोग समुचित है। और भी **"वसुदेवसद्मनि वसन् हरिः अम्बरात् अवतरन्तं हिरण्यगर्भाङ्गभुवं मुनिं ददर्श"** इस प्रकार के वाक्य का प्रयोग एवं उसमें भी "वसन्" यहाँ पर "वस्+शतृ" प्रत्यय-युक्त कारक का प्रयोग भी उचित प्रतीत होता है। वृत्त की दृष्टि में शिशुपालवध महाकाव्य के प्रथम सर्ग में माघ ने वंशस्थ छन्द का प्रयोग किया है। **"जतौ तु वंशस्थमुदीरितं जरौ"** इति। श्लोक में उपयुक्त छन्द का प्रयोग वृत्तौचित्य कहलाता है। प्रत्येक भाषा के छन्दों की एक विशिष्ट प्रकृति होती है। अपना एक निजी स्वभाव होता है, वृत्तों में लघु तथा गुरु का चुनाव संगीत के तत्त्व पर आश्रित रहता है, सच्चा कवि वही होता है जो विषय के अनुरूप छन्दों का चुनाव करता है। उसके अनुरूप पदों का चयन करता है यह भी औचित्य का परिचायक है।

औचित्य में अलंकार का भी एक महत्त्वपूर्ण स्थान है। अलंकार का औचित्य वहाँ होता है जहाँ वह प्रकृति रस, सन्दर्भ या प्रकरण को सर्वथा पुष्ट करें। तभी वह भूषण का काम कर सकता है, अलंकार का अलंकारत्व इसी में है कि वह प्रकृत अर्थ तथा प्रस्तुत रस का पोषक हो। माघ कवि ने भी अपने काव्य में-

**चयस्त्विषामित्यवधारितं पुरा ततः शरीरीति विभाविताकृतिम्।**
**विभुर्विभक्तावयवं पुमानिति क्रमादमुं नारद इत्यबोधि सः।।**[1]

यहाँ पर कवि ने **"विभाविताकृतिं विभक्तावयवम्"** से कोई शरीरधारी है, इसके बाद अत्यधिक समीप आने पर मुखादि अंगों को देखकर यह कोई पुरुष है इस प्रकार कारण के प्रदर्शन से काव्यलिंग अलंकार **"हेतोर्वाक्यपदार्थत्वे काव्यलिंगमुदाहृतम्"** प्रतीत होता है।

---

1. शिशुपालवधम् 1.3

**"कृतोपवीतं हिमशुभ्रमुच्चकैर्घनं घनान्ते तडितां गणैरिवं।"**[1]

यहाँ पर **"मेघम्-इव"** यहाँ पर इव शब्द के प्रयोग होने से वाच्योत्प्रेक्षा अलंकार प्रतीत होता है। जैसा कि–

**भवेत् सम्भावनोत्प्रेक्षा प्रकृतस्य परात्मना।**
**वाच्या प्रतीयमाना सा प्रथमं द्विविधा मता।।**
**वाच्येवादि प्रयोगे स्यादप्रयोगे परा पुनः।।**[2]

**"चकासतं चारुचमूरुचर्मणा कुथेन नागेन्द्रमिवेन्द्रवाहनम्"** यहाँ पर भी **"इन्द्रवाहनं नागेन्द्रमिव"** यहाँ इव के प्रयोग से वाच्योत्प्रेक्षालंकार ध्वनित होता है।

**रणद्भिराघट्टनया नभस्वतः पृथग्विभिन्नश्रुतिमण्डलैः स्वरैः।**
**स्फुटीभवद् ग्रामविशेषमूर्च्छनामवेक्षमाणं महतीं मुहुर्मुहुः।।**[3]

अर्थात् वायु के आघात से स्पष्टध्वनि करते हुए तथा व्यवस्थित स्वर समूह, सात स्वरों से तीन ग्रामों के स्वरों का आरोह तथा अवरोह क्रम से स्पष्ट हो रहा था ऐसी महती नाम की वीणा को बारम्थर देखते हुए नारद जी को भगवान् ने पहचाना। यहाँ पर वीणा को जानने के लिए जो तरह तरह का विशेषण प्रस्तुत किया है, एवं तदनुरूप जो शब्द चयन किया है उससे यह प्रतीत होता है कि कवि की विशेषण मूलक प्रतिभा अत्यन्त औचित्यपूर्ण है। स्वर का लक्षण है– **श्रुत्यारब्धमनुरमणनम् स्वरः**। जैसा कि रत्नाकर में–

**श्रुत्यानन्तरभावी यः स्निग्धोऽनरणनात्मकः।**
**सा श्रुतिः सम्परिज्ञेया स्वरावयवलक्षणा।।**

उक्त श्लोक में अतिशयोक्ति अलंकार बोधित है। यह भी एक औचित्य का द्योतक है। क्रिया की दृष्टि में **"स्फुटीभवत्" "समासदत्"**

---

1. शिशुपालवधमहाकाव्यम् 1.7
2. साहित्यदर्पणम्।
3. शिशुपालवधमहाकाव्यम् 1.10

**"उदतिष्ठत्" "पर्यपूपुजत्" "अभिन्यवीविशत्"** आदि लुङ्, लङ् लकार का प्रयोग बहुत कवि ने किया। लिट् लकार में **ददर्श, व्यलीयत** आदि क्रिया का भी प्रयोग किया जिससे यह प्रतीत होता है कि माघ ने कितने औचित्य का समर्थन किया है। कवि ने उपमा अलंकार को प्रदर्शित करते हुए कहा है कि–

> **स तप्तकार्तस्वरभास्वराम्बरः कठोरताराधिपलञ्छनच्छविः।**
> **विदिद्युते वाडवजातवेदसः शिखाभिराश्लिष्ट इवाम्भसां निधिः॥**[1]

अर्थात् तप्तकाञ्चन के समान देदीप्यमान पीले वस्त्र वाले तथा स्वयं पूर्णचन्द्र के कलंक के समान कान्ति वाले श्रीकृष्ण भगवान वाड़वानल की लपटों से व्याप्त समुद्र की तरह सुशोभित हुए।

यहाँ पर उपमालंकार, अन्यत्र अनुप्रास, अतिशयोक्ति आदि अलंकार का प्रयोग होने से यह कहा जा सकता है कि कवि ने औचित्य का समर्थन किया है।

औचित्य से समन्वित काव्य सहृदयों के मन को उसी प्रकार अंकुरित करता है जिस प्रकार वसन्त अशोक के वृक्ष को। रस काव्य का प्राण अवश्य ठहरा, परन्तु जब तक वह औचित्य से रुचिर नहीं होता तब तक वह सहृयों के चित्त को आकृष्ट नहीं कर सकता। इसलिए रस का औचित्य सतत आवश्यक है। जिस प्रकार नारद जी का धरती पर आगमन होने पर शान्त स्वभाव से भगवान् देख रहे हैं। कवि ने वहाँ पर देवर्षि वेशोचित विभिन्न औचित्यसमन्वित उत्प्रेक्षाओं से अनिवर्णित पुरुष को अन्ततो गत्वा नारद के रूप में पहचान करवाया, एवं शिशुपाल के अत्याचार से पृथ्वी को उन्मुक्त कराने के लिए नारद से भगवान् को प्रेरित करवाया। धरती पर शिशुपाल के अत्याचार को भयानक एवं बीभत्स रस, तथा उसके वध के प्रसंग में माघ ने जो वर्णन किया है वहाँ वीर रस के औचित्य का निर्वाह किया। इस प्रकार कवि ने अपने काव्य

---

1. शिशुपालवधमहाकाव्यम् 1.20

में रसों का औचित्यपूर्ण विन्यास किया है। जहाँ जिस रस का औचित्य है वहाँ पर उस रस का ही विवेचन किया है। अतः महाकवि माघ ने श्लोकों की संरचना में वृत्त, पद, वाक्य, क्रिया, कारक, काल, विशेषण, उपसर्ग, अलंकार, प्रतिभा, रस आदि औचित्य का निरन्तर निर्वहण किया है। इस प्रकार महाकवि माघ कालिदास की उपमा, भारवि के अर्थगौरव और दण्डी के पदलालित्य के समवाय के साथ अपनी महाकाव्यकृति में औचित्यनिर्वाह में भी सफल रहे हैं।

# शिशुपालवधे गुणोत्कर्षः

अनिलकुमारः

काव्यकाव्यशास्त्रयोः सम्बन्धोऽन्वयव्यतिरेकेण तिष्ठति, कुत्रचित् काव्यशास्त्रस्य यानि तत्त्वानि तानि व्याजेन कविः स्वकाव्ये प्रतिपादयति, कुत्रचिच्च काव्यशास्त्रे शास्त्रकारो लक्षणानि प्रतिपादयन् तत्र स्वकाव्येन प्रमाणयति। परञ्चोभयोरुद्देश्यं सहृदयस्यान्दायैवावलोक्यते यतोहि रस एवात्र जीवितमिति भणन्त्याचार्याः। तेनैव रसेन सह नित्यत्वेन ये काव्ये तिष्ठन्ति ते गुणाः, यथोक्तमाचार्यान्दवर्धनेन-'तमर्थमवलम्बन्ते येऽङ्गिनं ते गुणाः स्मृताः।[1]' इति। मम्मटस्याप्ययमेवाभिप्रायः-'ये रसस्याङ्गिनो धर्माः शौर्यादय इवात्मनः। उत्कर्षहेतवस्ते स्युरचलस्थितयो गुणाः।।[2]' यद्यपि - गुणवृत्त्या पुनस्तेषां वृत्तिः शब्दार्थयोर्मता[3]' वर्तते तथापि माघेन तेषां गुणानां काव्ये कथं स्थितिः स्यादिति सङ्केतितम्। तत्राद्य माधुर्यगुणस्य विषये -

**अतिकोमलमकतोऽन्यतः सरसाम्भोरुहवृन्तकर्कशम्।**
**वहति स्फुटमेकमेव ते वचनं शाकपलाशदेश्यताम्।।[4]**

अत्रातिकोमलशब्देन माधुर्यस्य, कर्कशमित्यनेन चौजगुणोपेता रचना सङ्केतिता । अपि च 'मधुरं बहिरन्तरप्रियम्, प्रकटं मृदुनाम जल्पत इत्यनयोः पद्ययोरपि माधुर्यगुणस्य विषये सङ्केतः कृतः। ओजप्रसादयोर्विषये च-

**तेजः क्षमा वा नैकान्तं कालज्ञस्य महीपतेः।**
**नैकमोजः प्रसादो वा रसभावविदः कवेः ।।[5]**

---

1. ध्वन्यालोकः 2.6
2. काव्यप्रकाशः 8.1
3. तत्रैव 8.5
4. शिशुपालवधम्-16.18
5. तत्रैव 2.83

किञ्च-

**ओजस्विवर्णोज्ज्वलवृत्तशालिनः,**
**प्रसादिनोऽनुज्झितगोत्रसंविदः।**
**श्लोकानुप्रेन्द्रस्य पुरः स्म भूयसो**
**गुणान्समुद्दिश्य पठन्ति बन्दिनः॥**[6]

अर्थात् कविना नैकस्य गुणस्य समावेशः स्वकाव्ये कर्त्तव्यः, अपितु सर्वेषामोजप्रसादमाधुर्यादीनां समावेशेनैव काव्यस्योत्कर्षो भवति परञ्च यदि कविना सर्वेषां प्रसङ्गानुकूलरसानां प्रयोगो विहितस्तदा ते गुणास्तस्मिन् काव्ये स्वयमेव परापतन्ति। माघेन स्वकाव्यस्य रचना यथा कृता तया रचनया न केवलं काव्योत्कर्षका गुणा अपितु उपमायाः सौन्दर्यम्, अर्थगौरवस्य गाम्भीर्यम्, पदानां लालित्यञ्च बृहत्त्रय्यां तस्य स्थानं प्रकटयति। यद्यपि सन्ति काव्यशात्रे प्रसिद्धास्त्रयो गुणास्तथापि काव्ये यावदुपमायाः चारुत्वम्, अर्थस्य वैशिष्ट्यम्, पदानामभिव्यञ्जकता न स्यात्तावत्पर्यन्तं काव्यस्य काव्यत्वं नैव सिद्ध्यति। सिद्धान्तानामनुगमनेन केवलं काव्यं न शोभते, कवेः कल्पनापि तत्रावश्यकी लोकव्यवहारोऽपि च। यतोहि काव्यशास्त्रे लक्ष्यं दृष्ट्वा लक्षणं क्रियते तस्मात् सत्काव्ये तानि सर्वाणि काव्यशास्त्रीय-तत्त्वानि स्वयमेवान्वेषणात् प्राप्यन्त एव यथोक्तं मया पूर्वम्। शिशुपालवधे यद्यपि वीररसप्रधानत्वादोजगुणस्य प्राधान्यं तिष्ठति तथाप्यङ्गत्वेन सर्वेषां रसानां समावेशात्सर्वेषामोजप्रसादमाधुर्यादीनामभिव्यञ्जना भवति। प्रथमसर्गे नारदस्यागमनवृतान्तेन प्रसादगुणो यदि लक्ष्यते तदा रावणहिरण्यकश्यपु-प्रसङ्गकथनेनौजगुणस्यापि समावेशो दृश्यते। रेवतीरमणस्य वाक्येषु ओजगुणो यदि शोभते तदा उद्धवस्य मुखेन प्रसादोऽपि । तृतीयसर्गात् एकादशसर्गपर्यन्तं समुद्रवर्णन-रैवतकपर्वतवर्णन-षड्ऋतूवर्णन-वनविहार-जलविहार-सूर्यास्त-मद्यपान-प्रभातवर्णनमित्यादिषु शृङ्गाररस-प्राधान्यान्माधुर्यगुणः, यतोहि 'शृङ्गार एव मधुरः'। किञ्च चतुर्दशसर्गपर्यन्तं तथैव माधुर्यप्रसादयोः प्रवाहो दृश्यते। पञ्चदशसर्गे शिशुपालस्य कथनात् वीररौद्रयोः समाप्तिर्यावदोजगुणस्य बाहुल्यमवलोक्यते तत्र रौद्रादय एव परां दीप्तिमुज्ज्वलतां च जनयन्ति अपि चोक्तम्-

---

6. तत्रैव 12.35

**रौद्रादयो रसा दीप्त्या लक्ष्यन्ते काव्यवर्तिनः।**
**तद्व्यक्तिहेतू शब्दार्थावाश्रित्यौजो व्यवस्थितम्॥**[7] इति।

ग्रन्थस्य नाम्नापि अस्यैव गुणस्य सार्थकता भवति तथापि सर्वेषां प्रसङ्गानां रसानुकूल्येन, वर्णाभिव्यञ्जकेन च गुणानामुत्कर्षो दिङ्मात्रमत्र प्रस्तूयते। स्वमुखेन कविः माधुर्य प्रशंसति-

**मधुकरैरपवादकरैरिव स्मृतिभुवः पथिका हरिणा इव।**
**कलतया वचसः परिवादिनीस्वरजिता रजिता वशमाययुः॥**[8]

अपि च-

**मधुरया मधुबोधितमाधवी मधुसमृद्धिसमेधितमेधया।**
**मधुकराङ्गनया मुहुरुन्मदध्वनिभृता निभृताक्षरमुज्जगे॥**[9]

एवम्भूतस्य माधुर्यगुणस्य प्रसारो माघेन स्वकाव्ये न केवलं षष्ठे सर्गे, अपित्वन्येष्वपि कृतः। यथा द्वारिकापुरीप्रसङ्गे -

**छन्नेष्वपि स्पष्टतरेषु यत्र स्वच्छानि नारीकुचमण्डलेषु।**
**आकाशसाम्यं दधुरम्बराणि न नामतः केवलमर्थतोऽपि॥**[10]

**मध्येसमुद्रं ककुभपिशङ्गीर्या कुर्वती काञ्चनवप्रभासा।**
**तुरङ्गकान्तामुखहव्यवाहज्वालेव भित्त्वा जलमुल्ललासः॥**[11]

तथैव रैवतकपर्वतवर्णने -

**रुचिरचित्रतनूरुहशालिभिर्विचलितैः परितः प्रियकव्रजैः।**
**विविधरत्नमयैरभिभात्यसाववयवैरिव जङ्गमतां गतैः॥**[12]

---

7. ध्वन्यालोकः 2.9
8. शिशुपालवधम् 6.9
9. तत्रैव 6.20
10. तत्रैव 3.56
11. तत्रैव 3.33
12. तत्रैव 4.32

अपि च ऋतुवर्णने-

**इदमपास्य विरागि परागिणीरलिकदम्बकसम्बुरुहां ततीः।**
**स्तनभरेण जितस्तबकानमन्नवलते वलतेऽभिमुखं तव।।**[13]

किञ्च-

**रवितुरङ्गतनुरुहतुल्यतां दधति यत्र शिरीषरजोरुचः।**
**उपययौ विदधन्नवमल्लिकाः शुचिरसौ चिरसौरभसम्पदः।।**[14]

वनविहारजलविहारयोर्यथा साक्षाच्छृङ्गाररसस्यानुभूतिर्जायते तथैव दशमसर्गे मद्यपानस्य प्रसङ्गे प्रतिभाति-

**चारुता वपुरभूषयदासां तामनूननवयौवनयोगः।**
**तं पुनर्मकरकेतनलक्ष्मीस्तां मदो दयितसङ्गमभूषः।।**[15]

एवमेवान्येष्वपि शृङ्गारयुक्तस्थलेषु माधुर्यगुणस्य स्थितिर्दृश्यत एव। शब्दश्रुतिमात्रेणार्थस्य प्रतीतिः सर्वेषु रसेषु सर्वासु रचनासु च यस्य भवति, स प्रसादो गुणः। यस्मिन् विषये ध्वन्यालोककारो भणति-

**सर्म्पकत्वं काव्यस्य यत्तु सर्वरसान् प्रति।**
**स प्रसादो गुणो ज्ञेयः सर्वसाधारणक्रियः।।**[16]

शिशुपालवधेऽस्य गुणस्याभिव्यक्तिः प्रथमसर्गादेव जायते तद्यथा-

**स काञ्चने यत्र मुनेरनुज्ञयानवाम्बुदश्यामवपुर्न्यविक्षत।**
**जिगाय जम्बूजनितश्रियः श्रियं सुमेरुशृङ्गस्य तदा तदासनम्।।**[17]

तथैव द्वितीयसर्गे-

---

13. तत्रैव 6.11
14. तत्रैव 6.22
15. तत्रैव 10.33
16. ध्वन्यालोकः 2.10
17. शिशुपालवधम् 1.19

**यावदर्थपदां वाचमेवादाय माधवः।**
**विरराम महीयांसः प्रकृत्या मितभाषिणः॥**[18]

अत्र यथा शब्दानां स्पष्टता तथैवार्थस्यापि, परं च महीयांसः प्रकृत्या मितभाषिण इत्यनेन प्रसादेन सह उत्तमजनानां गुणस्यापि सौन्दर्यं स्पष्टमेव। काव्यरसास्वादने यथा त्रयो गुणाः काव्यस्य शोभामातनोति तथैव श्रेष्ठनृपस्य शोभा षाड्गुण्येन भवतीति माघस्तत्रैव द्वितीयसर्गे प्रतिपादयति-

**षाड्गुण्यमुपयुञ्जीत शक्त्यपेक्षो रसायनम्।**
**भवन्त्यस्यैवमङ्गानि स्थास्नूनि बलवन्ति च॥**[19]

षष्ठे सर्गे प्रसादगुणस्य दिङ्मात्रमुदाहरणम्-

**शिशिरमासमपास्य गुणोऽस्य नः क इव शीतहरस्य कुचोष्मणः।**
**इति धियास्तरुषः परिरेभिरे घनमतो नमतोऽनुमतान् प्रियाः॥**[20]

युद्धे पतिगमनसमये रमण्यस्तान् दृष्टुमौसुक्यं कथं सञ्जायते यतोहि पुन एव जन्म दुर्लभं तदेव वर्णयति कविः-

**विदुषीव दर्शनममुष्य युवतिरतिदुर्लभं पुनः।**
**यान्तमनिमिषमतृप्तमनाः पतिमीक्षते स्म भृशमा दृशः पथः॥**[21]

वीररौद्रबीभत्सभयानकरसानामपि ग्रन्थेऽस्मिन् तथैव वर्णनं यथा शृङ्गारस्य। यतोहि एतेषु रसेष्वोजस्य बाहुल्यम्भवति तत्रापि गाढबन्धत्वमोजः, ओजसमासभूय इति सिद्धान्तानुशीलनेन समासबाहुल्यरचनायाः सौन्दर्यं मनोहारि। नारदमुखेन रावणस्य पराक्रममेवं प्रदर्शयति श्रीमाघः-

**प्रभुर्बुभूषुर्भुवनत्रयस्य यः शिरोऽतिरागाद्दशमं चिकर्तिषुः।**
**अतर्कयद्विघ्नमिवेष्टसाहसः प्रसादमिच्छासदृशं पिनाकिनः॥**[22]

---

18. तत्रैव 2.13
19. तत्रैव 2.93
20. तत्रैव 6.65
21. तत्रैव 15.94
22. तत्रैव 1.49

एवमेव भगवतो वासुदेवस्य महिमा तत्रैव वीररसेन समायुक्तः स्वसौन्दर्य बिभर्ति तद्यथा-

**सटाच्छटाभिन्नघनेन बिभ्रता नृसिंह! सैंहीमतुनुं तनु त्वया।**
**स मुग्धकान्तास्तनसङ्गभङ्गुरैरुरोविदारं प्रतिचस्करे नखैः।।**[23]

युद्धस्य प्रसङ्गे भयानकरसेन परिपुष्टोऽयमोजगुणः स्ववर्णानपि तथैवाभिव्यनक्ति-

**द्रुतद्रवद्रथचरणखतखमातलोल्लसद्बहुलरजोवगुण्ठितम्।**
**युगक्षयक्षणनिरवग्रहे जगत्पयोनिधेर्जल इव मग्नमाबभौ।।**[24]

अपि च-

**भित्वा घ्राणामायसेनाधिवक्षः स्थूरीपृष्ठो गार्ध्रपक्षेण विद्धः।**
**शिक्षाहेतोर्गाढरज्ज्वेव बद्धो हर्तुं वक्त्रं नाशकद् दुर्मुखोऽपि।।**[25]

एतेषु पद्येषु ओजगुणस्याभिव्यञ्जका वर्णाः- टधरभादयः साक्षान्न केवलं रसस्य परिपोषकतामपितु प्रसङ्गानुकूलतामपि धत्ते।

वस्तुतस्तु शिशुपालवधस्य महाकाव्यपरम्परायां तथैव स्थानं वर्तते यथा अलङ्कारेषूपमायाः, गुणेषु माधुर्यस्य, रचनायां पदलालित्यस्य च। तस्मादेव कारणात्सर्वे आचार्या मुग्धभावेन कविं प्रशंसन्ति-'माघे सन्ति त्रयो गुणाः' 'नव सर्गगते माघे नवशब्दो न विद्यते' 'मेघे माघे गतं वयः' 'काव्येषु माघः' 'तावद् भा भारवेर्भाति यावन्माघस्य नोदय इत्यलम्।

23. तत्रैव 1.47
24. तत्रैव 17.60
25. तत्रैव 18.22

# शिशुपालवधमहाकाव्ये वक्रोक्तिविचार:

सतीशकुमार:

भारतीयकाव्यशास्त्रे षड्सम्प्रदाया: प्रसद्धि: सन्ति। तेषु षड्सिद्धान्तेषु वक्रोक्तिसम्प्रदाय: विशिष्टं स्थानं बिभर्ति। अस्य सम्प्रदायस्य प्रवर्त्तक: कुन्तकाचार्य:। स्वयं कुन्तकोऽपि स्वकीये 'वक्रोक्तिजीविते' ग्रन्थे पुन: पुन: शिशुपालवधमहाकाव्यस्योदाहरणानि ददाति। इत्थं शिशुपालवधमहाकाव्ये आचार्यकुन्तकसिद्धान्तस्य प्रत्येकभेदा: सम्प्राप्यन्ते। समीक्षणपूर्वं वक्रोक्ते: सामान्यपरिचय: प्रस्तूयते। का नाम वक्रोक्ति:? वक्रोक्ते: सामान्यार्थ:-वक्रा + उक्ति: इति वक्रोक्ति:। परन्त्वत्र वक्रोक्तिशब्दस्यार्थ: व्यापको वर्तते अर्थात् कविचातुर्यपूर्णकथनं वक्रोक्ति:। कुन्तकाचार्यात् पूर्वमपि वक्रोक्ते: सामान्य: परिचय: प्राप्यते। संस्कृतवाङ्मये वक्रोक्तिशब्दस्य प्रयोग: दृश्यते। अथर्ववेदे वक्रशब्दस्य प्रयोग: कुटिलार्थे एवास्ति-

**'अयं यो वक्रोविपरुर्व्यङ्गे मुखानि वक्र वृजिना कृणोषि'[1]**

कालिदासस्य 'वक्र: पन्था:' प्रयोगेऽस्मिन् वक्रस्यार्थ: कुटिलो यथा-

**'वक्र: पन्था यदपि भवत: प्रस्थितस्योत्तराशम्'[2]**

बाणभट्टेन कादम्बरीगद्यकाव्ये वक्रोक्ते: प्रयोगो वाक्छल-क्रीडालापपरिहासजल्पितचमत्कारपूर्णशैलीवचनप्रभृतिविदग्धतार्थेषु अकारि-

**'एषाऽपि बुध्यते एतावतीवक्रोक्ति:'[3]**

काव्यशास्त्रीयग्रन्थे भामहेन वक्रोक्ते: कल्पना सर्वप्रथमं कृता।

---

1. अथर्ववेद: 7.58.4
2. मेघदूतम्, पृ. 29
3. कादम्बरी पूर्वभाग: पृ. 296

**सैषा सर्वत्र वक्रोक्तिरनयाऽर्थो विभाव्यते।**
**यत्नोऽस्यां कविना कार्यः कोऽलङ्कारोऽनया विना।।**[4]

कुन्तकात् पूर्वमपि वक्रोक्तेः सर्वालङ्कारमूलत्वं निरूपितमेव। एवं पूर्ववर्तिनां वक्रोक्तिनिरूपणानां सारांशं स्वीकृत्यैव कुन्तकाचार्येण विस्तृतरूपेण वक्रोक्तिनिरूपणं कृतम्। कुन्तकात् परवर्तिनः प्रमुखाचार्याः मम्मट-विश्वनाथप्रभृतयः वक्रोक्तिं केवलाङ्करत्वेनैवाङ्गीकृतवन्तः। परञ्च आचार्यकुन्तको वक्रोक्तेः सूक्ष्मादपि सूक्ष्मरूपं वर्णयति। वक्रोक्तेर्लक्षणम्-

**उभावेतावलङ्कार्यौ तयोः पुनरलङ्कृतिः।**
**वक्रोक्तिरेव वैदग्ध्यभङ्गीभणितिरुच्यते।।**[5]

अर्थात् शब्दार्थौ द्वावपि अलङ्कार्यौ स्तः पुनः तयोरलङ्कृतिः चातुर्यपूर्णकथनमेव वक्रोक्तिः कथ्यते।

**वक्रोक्तेः भेदाः**

आचार्यकुन्तकाचार्येण विपुलवक्रोक्तिसिद्धान्तस्य निरूपणं कृतम्। अपि च वक्रोक्तेः षड्भेदाः कृताः। प्रत्येकभेदस्य बहवो भेदाः सन्ति। प्रमुखाभेदाः वर्णविन्यासवक्रता-पदपूर्वार्द्धवक्रता-पदपरार्द्धवक्रता-वाक्यवक्रता-प्रकरणवक्रता-प्रबन्धवक्रताश्चेति। तद्यथा-

**वर्णविन्यासवक्रत्वं पदपूर्वार्धवक्रता।**
**वक्रतायाः परोऽप्यस्ति प्रकारः प्रत्ययाश्रयः।।**

**वाक्यस्य वक्रभावोऽन्यो भिद्यते यः सहस्रधा।**
**यत्रालङ्कारवर्गोऽसौ सर्वोऽप्यन्तर्भविष्यति।।**

**वक्रभावः प्रकरणे प्रबन्धे वाऽस्ति यादृशः।**
**उच्यते सहजाहार्य-सौकुमार्य-मनोहरः।।**[6]

---

4. काव्यालङ्कार 2/85
5. व. जी. 1/10
6. व्र. जी. 1/19-21

इत्थं वक्रोक्तिसिद्धान्तस्य काव्यशास्त्रीयसिद्धान्तेषु विशिष्टं स्थानं वर्तते। संस्कृतमहाकाव्येषु महाकविमाघकृतं शिशुपालवधं विशिष्टमस्ति। महाकाव्येऽस्मिन् पदे-पदे वक्रता दरीदृश्यते। अत्र वक्रोक्तेः तेषां पूर्वोक्तानां भेदानां सक्रमेण विवेचनं क्रियते।

**वर्णविन्यासवक्रता**

वक्रतायाः प्रथमो भेदस्तु वर्णविन्यासवक्रता। एषा वक्रताऽक्षराणां वर्णानां वा विन्यासे निवसति। अलङ्कारशास्त्रस्य अन्यैः विद्वद्भिः अनुप्रासयमकालङ्कारयोर्मध्ये येषां विषयाणां समावेशं कृतमस्ति, तेषां विवेचनं वर्णविन्यासवक्रतान्तर्गतमागच्छति।

**वर्णविन्यासवक्रतायाः प्रभेदाः -**

**एको द्वौ बहवो वर्णा बध्यमानाः पुनः पुनः।**
**स्वल्पान्तरस्त्रिया सोक्ता वर्णविन्यासवक्रता।।**[7]

**वर्णान्तयोगिनः स्पर्शा द्विरुक्तास्त-ल-नादयः।**
**शिष्टाश्च रादिसंयुक्ताः प्रस्तुतौचित्यशोभिनः।।**[8]

अर्थात् अत्र एकवर्णस्य पुनरावृत्तिः, द्वयोर्वर्णयोः पुनरावृत्तिः, बहुवर्णानां पुनरावृत्तिः स्वाल्पान्तरे मिलति। अपि च वर्णान्तयोगिनः स्पर्शवर्णस्य, द्विरुक्तास्त-ल-नादयः वर्णवक्रता, रादिसंयुक्तवर्ण- विन्यासवक्रतेति। एतेषां सर्वेषां भेदानामन्तर्भावः वर्णविन्यासवक्रताऽन्तर्गतेऽऽगच्छति।

वक्रोक्तिसिद्धान्तस्य प्रथमभेदस्य वर्णविन्यासवक्रोक्तेः शिशुपालवधे बहून्युदाहरणानि दृष्टिगोचराणि भवन्ति। यथा-

**अमानवं जातमजं कुले मनोः प्रभविनं भाविनमन्नमात्मनः।**
**मुमोच जानन्नपि जानकीं न यः सदाभिमानैकधना हि मानवः।।**[9]

---

7. व. जी. 2/1
8. व. जी. 2/2
9. शि. व. 1/67

श्लोकेऽस्मिन् 'न्न' वर्णस्यावृत्तिः चमत्करोति। द्विरुक्तास्त-ल-नादयः विन्यासवक्रतायाः उदाहरणमस्ति अयमेव श्लोकः। एवञ्च -

**नवपलाशपलाशवनं पुरः स्फुटपरागपरागतपङ्कजम्।**
**मृदुलतान्तलतान्तमलोकयत्स सुरभिं सुरभिं सुमनोभरैः।।**[10]

श्लोकेऽस्मिन् बहुवर्णानां पुनरुक्तिः दरीदृश्यते। अतः वर्णविन्यासवक्रताऽन्तर्गते बहुवर्णयुक्तविन्यासवक्रता वर्तते।

**पदपूर्वार्द्धवक्रता**

वक्रोक्तेः द्वितीयभेदः पदपूर्वार्द्धवक्रताऽस्ति। वर्णानां समूहः शब्दः भवति। सुबन्ततिङन्तशब्दः पदं कथ्यते। पदस्य पूर्वार्धस्य अपरनाम प्रकृतिः वर्तते। अत्र पदपूर्वार्द्धवक्रतायाः बहवः भेदाः सन्ति तत्र च रूढि-पर्याय-उपचार-विशेषण-संवृत्ति-वृत्ति-भाव-लिङ्ग-क्रियाणां विस्तृतप्रयोगानां विवेचनमस्ति। आचार्यकुन्तकः पदपूर्वार्द्धवक्रताया अष्टभेदाः इति स्वीकरोति। अष्टभेदातिरिक्तमागमवक्रता-प्रत्ययवक्रता-भाववक्रताअपि सन्ति। शिशुपालवधे वक्रोक्तेः बहून्युदाहरणानि दृष्टिगोचराणि जायन्ते। परन्तु विस्तारभयकारणात् तेषां सर्वेषामुदाहरणानां विवेचनं कर्तुं समर्थो नास्मि। अत्र केवलं मुख्योदाहरणानां प्रयोगं कृतं मया। यथा-

**श्रियः पतिः श्रीमति शासितुं जगज्जगन्निवासो वसुदेवसद्मनि।**
**वसन्ददर्शावतरन्तमम्बराद्धिरण्यगर्भाङ्गभुवं मुनिं हरिः।।**[11]

अत्र मुनेः 'हिरण्यगर्भाङ्गभुवः' इति पर्यायशब्द अतः पदपूर्वार्द्धव-क्रताऽन्तर्गते पर्यायवक्रता वर्तते। एवञ्च -

**निवर्त्य सोऽनुव्रजतः कृतानतीनतीन्द्रियज्ञाननिधिर्नभः सदः।**
**समासदत्सादितदैत्यसम्पदः पदं महेन्द्रालयचारुचक्रिणः।।**[12]

10. शि. व. 6/2
11. शि. व. 1/1
12. शि. व. 1/11

श्लोकेऽस्मिन् 'कृष्ण:' शब्दस्य पर्यायशब्द: 'चक्रिण:' वर्तते। अत: पदपूर्वार्द्धवक्रताऽन्तर्गते पर्यायवक्रता दृष्टिगोचरं भवति।

## पदपरार्द्धवक्रता

वक्रोक्ते: तृतीयभेद: पदपरार्द्धवक्रताऽस्ति। पदपरार्द्धवक्रताया अपरनाम प्रत्ययवक्रताऽपि वर्तते। पदस्य द्वयो: भागयो: परार्द्धभाग: प्रत्यय: कथ्यते। प्रत्ययवक्रताया: बहव: भेदा: सन्ति। ते च कालवैचित्र्यवक्रता-कारकवक्रता-संख्यावक्रता-पुरुषवक्रता-उपग्रहवक्रता-प्रत्ययवक्रता-उपसर्गवक्रता-निपातवक्रतेति। यथा-

**स्मरत्यधो दाशरथिर्भवन्भवानमुं वानान्ताद्वनितापहरिणम्।**
**पयोधिमाबद्धचलज्जलाविलं विलङ्घ्य लङ्का निकषा हानिष्यति॥**[13]

श्लोकेऽस्मिन् 'हानिष्यति' पदप्रयोग: लृट्लकारे भवति परन्तु कविना भूतकालिकघटनायै भविष्यकालिकधातु: प्रयुज्यते। एवञ्च -

**कलासमग्रेण ग्रहानमुञ्चता मनस्विनीरुत्कयितु पटीयसा।**
**विलासिनस्तस्य वितन्वता रतिं न नर्मसाचिव्यमकारि नेन्दुना॥**[14]

श्लोकेऽस्मिन् 'गृहं' शब्दस्थाने 'गृहान्' शब्दस्य प्रयोग संख्यावक्रतऽन्तर्गतेऽऽगच्छति अर्थात् एकवचनस्थाने बहुवचनस्य प्रयोग: दरीदृश्यते।

## वाक्यवक्रता

वाक्यवक्रताया अपरनाम वस्तुवक्रताऽस्ति। वक्रोक्ते: चतुर्थभेद: वाक्यवक्रता वर्तते। वाक्यवक्रताया: विविधभेदा: सन्ति। तृतीयोन्मेषे राजानककुन्तकाचार्येण वक्रोक्तिजीवितग्रन्थस्य वाक्यवक्रताया: भेदानां व्याख्या कृताऽस्ति।

---

13. शि. व. 1/68
14. शि. व. 1/59




वाक्यवक्रताऽन्तर्गतेऽलङ्काराणां समावेशोऽस्ति। आचार्यकुन्तकानुसारेण वक्रोक्तिजीवितग्रन्थे विंशतिअलङ्कराणां पुनः स्वमेधया लक्षणं कृतमस्ति। अपि च पूर्वोक्तालङ्काराणां खण्डनं विधाय विंशतिअलङ्कारान् स्वीकरोति। ते च रूपक-अप्रस्तुतप्रशंसा-पर्यायोक्ति-व्याजस्तुति-उत्प्रेक्षा-अतिशयोक्ति-उपमा-श्लेष-व्यतिरेक-दृष्टान्त-अर्थान्तरन्यास-आक्षेप-ससन्देह-अपह्नुति-संसृष्टि-संकर-रसवत्-दीपक-सहोक्तिरिति। शिशुपालवधे वाक्यवक्रतायाः नैकानि उदाहरणानि परिलक्ष्यन्ते। यथा-

**जाज्वल्यमाना जगतः शान्तये समुपेयुषी।**
**व्यद्यौतिष्ठ सभावेद्यामसौ नरशिखित्रयी॥**[15]

अत्र 'नरशिखित्रयी' पदे रूपकालङ्कारः वर्तते। अतः रूपकालङ्कारः वाक्यवक्रताऽन्तर्गतेऽऽगच्छति। एवञ्च -

**अमानवं जातमजं कुले मनोः प्रभाविनं भाविनमन्तमात्मनः।**
**मुमोच जाननपि जानकीं न यः सदाभिमानैकधना हि मानिन॥**[16]

श्लोकेऽस्मिन् विशेषस्य सामान्येन सह समर्थनकारणात् अर्थान्तरन्यासालङ्कारः वृर्तते। अतः अर्थान्तरन्यासालङ्कारः वाक्यवक्रताऽन्तर्गतेऽऽगच्छति।

**प्रकरणवक्रता**

वक्रोक्तेः पञ्चमो भेदः प्रकरणवक्रता वर्तते। यस्यार्थः-प्रबन्धस्य एकदेश अर्थात् सम्पूर्णग्रन्थस्यान्तर्गतमेकविशिष्टवाक्यसमूहाश्रितः वर्ण्यविषयः प्रकरणवक्रता वर्तते। प्रकरणवक्रतायाः नवभेदाः। ते च सन्ति-

पात्रप्रवृत्तिवक्रता-उत्पाद्यलावण्यवक्रता-उपकार्योपकारवक्रता-आवृत्तिवक्रता-प्रासङ्गिकप्रकरण-वक्रता-प्रकरणरसवक्रता-अवान्तरवस्तुवक्रता-गर्भाङ्कवक्रता-सन्ध्यङ्गविनिवेशवक्रतेति। प्रकरणवक्रतायाः शिशुपालवधे नैकानि उदाहरणानि सम्प्राप्यन्ते। विस्तारभयकारणात् तेषां सर्वेषामुदाहरणानां विवेचनं कर्तुं न शक्यते। अत्र केवल प्रमुखोदाहरणान्येव प्रस्तौमि। यथा-

**जगत्पर्याप्तसहस्रभानुना न यन्नियन्तुं समभावि भानुना।**
**प्रसह्य तेजोभिरसंख्यतां गतैरदस्त्वया नुन्मनुत्तमं तमः॥**[17]

अत्र कविः प्रतिभया इतिहासप्रसिद्धकथापात्रस्य चरित्रोत्कर्षं करोति। अर्थात् प्रमुखपात्रेण गौणपात्रस्य चरित्रोत्कर्षं मुख्यकारणमस्ति। अतः प्रकरणवक्रताऽन्तर्गते पात्रप्रवृत्तिवकताऽऽगच्छति। एवञ्च-

**नवानधोऽधो बृहतः पयोधरान् समूढकर्पूरपरागपाण्डुरम्।**
**क्षणं क्षणोत्क्षिप्तगजेन्द्रकृतिना स्पुटोपमं भूतिसितेन शम्भुना॥**[18]

अत्र शिशुपालवधमहाकाव्यख्यातवृत्ते कल्पितकथांशस्य सन्निवेशः एव उत्पाद्यलावण्यवक्रतायाः उदाहरणमस्ति। शिशुपालवधे प्रथमसर्गे नारदस्य वर्णनं कविकल्पितमस्ति। अतः प्रकरणवक्रताऽन्तर्गते उत्पाद्यलावण्य-वक्रताऽऽगच्छति।

**प्रबन्धवक्रता**

वक्रोक्तेः षष्ठः भेदः प्रबन्धवक्रताऽस्ति। प्रबन्धस्य अर्थ अस्ति समस्तग्रन्थः। प्रबन्धवक्रताङ्गीरूपे वर्तते। पूर्वोक्ता पञ्चविधवक्रता एतत्

15. शि. व. 2/3
16. शि. व. 1/67
17. शि. व. 1/27
18. शि. व. 1/4

प्रबन्धवक्रतायाः अङ्गमात्रमस्ति। प्रबन्धवक्रतायाः षड्भेदाः ते च सन्ति- मूलरसपरिवर्तनवक्रता-समापनवक्रता-कथाविच्छेदवक्रता आनुषङ्गिक-फलवक्रता-नामकरणवक्रता-कथासाम्यवक्रतेति। शिशुपालवधे प्रबन्धवक्रतायाः बहून्युदाहरणानि सन्ति। अत्र केवल अहं सामान्यपरिचयम् एव ददामि। यथा-

**करोति कंसादिमहीभृतां वधाद् जनो मृगाणामिव यद्तवस्तवम्।**
**हरे! हिरण्याक्षपुरः रसासुरद्विपद्विषः प्रत्युत सा तिरस्क्रिया॥**[19]

श्लोकेऽस्मिन् वीररसः दृष्टिगोचरं भवति। यतोहि महाभारत-महाकाव्यस्य अङ्गीरसः शान्तः मन्यते। शिशुपालवधमहाकाव्यस्योपजीव्यं महाभारतेतिहासप्रसिद्धमहाकाव्यमस्ति। आचार्यकुन्तकोऽपि वक्रेक्तिजीवितग्रन्थे उक्तम्-

**'रामायणमहाभारतयोश्च शान्ताङ्गित्व पूर्वसूरिभिरेव निरूपि-तम्'**[20] परन्तु माघेन मूलरसं (शान्तरसं) त्यक्त्वा शिशुपालवधे वीररसस्य प्रयोगं कृतम्। कविना स्वकीयशिशुपालवधमहाकाव्ये श्रीकृष्णशिशुपालयोः युद्धवर्णनं शिशुपालवधं च मुख्यविषयत्वेन स्वीकृतमित्यतः वीररसः एव काव्येऽस्मिन् अङ्गीरसत्वेन स्वीकृतः। रसपरिवर्तनवक्रता प्रबन्धवक्रताऽन्त-र्गतेऽऽगच्छति। एवञ्च-

यत्र नाममात्रादेव काव्यस्य कथावस्तुनः ज्ञानं भवति तत्र नामकरणवक्रता विद्यते। कुन्तकस्याभिप्रायोऽयं वर्तते यद् ग्रन्थस्य नामकरणेऽपि वैचित्र्यमपेक्षितमिति। यथा-शिशुपालवधमहाकाव्ये नाममात्रादेव शिशुपालवधस्य ज्ञानं भवति। अतः प्रबन्धवक्रताऽन्तर्गते नामकरणवक्रताऽऽगच्छति।

## उपसंहारः

शिशुपालवधमहाकाव्यं संस्कृतसाहित्यस्य महत्त्वपूर्णं काव्यमस्ति। ग्रन्थेऽस्मिन् वीररसः अङ्गीरसः वर्तते। शिशुपालवधे पदे-पदे वक्रता दरीदृश्यते। अत्र वक्रोक्तेः भेदप्रभेदानां विवेचनमस्ति। इत्थं निष्कर्षरूपेण कथयितुं समर्थोऽस्मि यत् महाकाव्यमिदं वक्रोक्तिदृशा सफलतामधिगच्छति।

---

19. शि. व. 1/39
20. व. जी. चतुर्थोन्मेषः पृ. 441

# शिशुपालवधे पदशय्या

**प्रेमप्रकाश नैनवालः**

सर्वविध-शास्त्रीय-वैदुष्य-समन्वितस्य माघस्य शब्दशास्त्रीयं ज्ञानं सर्वान् कविवरान् अतिशेते। बृहत्त्रय्याम् अन्यतमं 'शिशुपालवधमहाकाव्यम्' महाकविमाघस्य एकैव कृतिरस्ति। एषा अद्भुता कृतिर्महाकविमाघस्य प्रतिभया काव्यकौशलेन च समन्विता, सा च उपजीव्यत्वेन महाभारतं स्वीकरोति।

महाकविर्माघः महाभारतस्य लघुकथानकं स्वस्य प्रतिभया समुचितेन विन्यासेन महाकाव्यफलके प्रणीतवान्, काव्यस्यास्य कथावस्तुपल्लवने अनेकानि काव्यतत्त्वानि निहितानि वर्तन्ते। प्रायः माघकविविषये एका प्रसिद्धा अभ्युक्तिः साहित्यजगति श्रूयते। साचैवम् -

**उपमा कालिदासस्य भारवेरर्थगौरवम्।**
**दण्डिनः पदलालित्यं माघे सन्ति त्रयो गुणाः।**

एतदत्रावधेयं यन्माघः स्वमहाकाव्ये त्रयाणामपि गुणानां समाहारं विधत्ते, तत्र तत्र च वैशिष्ट्यं सौन्दर्यं माधुर्यं चापि धत्ते, तथापि उपमाप्रयोगे स कालिदाससमानः, अर्थगौरवे भारविसदृशः, पदलालित्ये च दण्डिसदृशः। एवमुक्तानां त्रयाणामपि गुणानां संकलने नितरां साफल्यम् अधिगतवान्। तस्य च तादृशं प्रावीण्यं यथा नानाविधवर्णने तस्याप्रतिहता प्रतिभा।

महाकविमाघः पदविन्याससाम्राज्यस्य सम्राट् आसीत्। तस्य न केवलं पदानाम् अपितु पद्यानां ललितविन्यासेऽपि नैपुण्यमासीत्। स न्नित्यनूतनश्रुति-मधुरपदावलीनां श्लाघनीयः शिल्पी। नूतनपदानां प्रयोगवशाद् तस्य विषये उक्तिरेषा प्रसिद्धा जाता-

**"नवसर्गगते माघे नवशब्दो न विद्यते"।**

अस्मिन् कथने न तु अर्थवादः अपितु तथ्यवादोऽस्ति। महाकविमाघस्य पदप्रयोगे सङ्गीतात्मकता, एकरसता च दरीदृश्येते। अर्थावबोधप्रतीक्षां विनैव वीणाझङ्कारझङ्कृतमिव सहृदयानां हृदये रसानन्दः प्रवहति।

संक्षेपेण वक्तुं शक्यते यत् कालिदासस्योपमा, भारवेरर्थगौरवं, दण्डिनः पदलालित्यमित्येतैर्गुणैः सज्जितमेतत्काव्योद्यानम्। इदमलङ्कृतविशालोद्यानं वर्तते, यत्र उपमावल्लरी-अर्थगरिमस्तवक-पदलालित्यसहकारस्य कलिकानां मञ्जरीणाञ्च स्वालोकसामान्यपुष्परससुरभिणा सहृदयमधुपान् आप्यायति। अतः महाकविमाघस्य कवित्वं सर्वाङ्गि वर्तते न तु एकाङ्गि।

अतः कथयितुं शक्यते यत्-

**'माघे सन्ति त्रयो गुणाः'** इति नास्ति संशयकरं वचः। माघे त्रयाणां गुणानां समन्वयो विशिष्टत्वेन वर्तत एव।

सम्प्रति अत्र विशिष्टत्वेन माघविरचितमहाकाव्ये शिशुपालवधे पदशय्या विचार्यते।

**महाकविमाघविरचितशिशुपालवधे पदशय्या** - पदशय्या श्रवणेनेव मनसि प्रश्नोऽयम् उदेति यत् का नाम पदशय्या? पदानां शय्या पदशय्येति। पदशय्या इति पदे द्वौ शब्दौ वर्तेते पदं शय्या च। वर्णानां समूहः पदमित्युच्यते। व्याकरणशास्त्रे पदविषयकं सूत्रमेकं वर्तते-

**'सुप्तिङन्तं पदम्'** 2.1.11

अर्थात् सुबन्तं तिङन्तं च पदसंज्ञं स्यात्। अपि च कविराजविश्वनाथेन स्वस्य साहित्यदर्पणे नवमपरिच्छेदे रीतिविचारे पदस्य स्थितिरेवं प्रतिपादिता-

**'पदसंघटना रीतिरङ्गसंस्थाविशेषवत्। उपकर्त्री रसादीनाम्'।**

सा.द. 9.1

अर्थात् पदानां मेलनं संगठनं वा रीतिनाम्नाऽभिधीयते।

आचार्यराजशेखरेण स्वस्य काव्यमीमांसायां 'पदशय्या' इति पदस्य

कृते 'शब्दपाक' इति प्रयोगः विहितः। स च-

**'यत्पदानि त्यजन्त्येव परिवृत्तिसहिष्णुताम्।**
**तं शब्दन्यासनिष्णाताः शब्दपाकः प्रचक्षते'॥**

इयमशक्तिर्न पुनः पाकः' इत्यवन्तिसुन्दरी! यदेकस्मिन्वस्तुनि महाकवीनामनेकोऽपि पाठः परिपाकवान्भवति, तस्माद्रसोचितशब्दार्थ-सूक्तिनिबन्धनः पाकः। यदाह-

**'गुणालङ्काररीत्युक्तिशब्दार्थग्रथनक्रमः।**
**स्वदते सुधियां येन वाक्यपाकः स मां प्रति'।**

तदुक्तम्-

**सति वक्तरि सत्यर्थे शब्दे सति रसे सति।**
**अस्ति तन्न बिना येन परिस्त्रवति वाङ्मधु'॥**

**'काव्यानुमेयतया यत्तच्छब्दनिवेद्यः परं पाकोऽभिधाविषयस्तत् सहृदयप्रसिद्धिसिद्ध एव व्यवहाराङ्गमसौ' इति यायावरीयः।** (का.मी. 5.3)

'शय्या' इति पदस्य शाब्दिकार्थः 'आधारः', 'पर्यङ्कः' वा भवति। अमरकोशे शय्या इत्यस्य कृते-

**'शय्यायां शयनीयवत्। शयनम्'** (अ.को. 02.06.137,138)

इति प्रयुक्तमस्ति। अतः ज्ञातुं शक्यते यत् पदशय्या नाम पदानां पर्यङ्कः, पदानामाधारः। अर्थात् पदानां यत्र नैरन्तर्य भवति, इत्युक्ते पदानामवली, पदलालित्यं, वर्णविन्यासः, पदगुम्फनं वा। यथा मालाकरः विभिन्नप्रकारकैः कुसुमैः मालां निर्माति येन तत्र सौन्दर्य चरमोत्कर्ष गच्छन् नयनयोः आनन्दयति, तद्वदैव कविरपि विभिन्न प्रकारकैः वर्णविन्यासैः स्वकाव्यम् आरचयति, येन पाठकाः प्रेक्षकाश्च समुचितवर्णविन्यासेन आनन्दमनुभवन्ति।

माघे पदलालित्यं पदे-पदे प्राप्यते। पदसौकुमार्यम्, वर्ण-माधुर्यम्, भाषायाः संगीतात्मकत्वम्, भावानुसारि भाषाश्रयणम्, भाषायाम् आरोहा-वरोहक्रमश्च पदलालित्यं समेधयति। शिशुपालवधमहाकाव्ये प्रायः

पदलालित्यम् अस्त्येव, कानिचिदेव पद्यानि वर्तन्ते येषु पदलालित्यं न दृश्यते।

पद्येषु पदलालित्यं पदशय्या वा माघकाव्ये दरीदृश्यते-

**निसर्गचित्रोज्ज्वलसूक्ष्मपक्ष्मणा**
**लसद्बिसच्छेदसिताङ्ग सङ्गिना।**
**चकासतं चारुचमूरुचर्मणा**
**कुथेन नागेन्द्रमिवेन्द्रवाहनम्।।** शिशु. 1/8

पद्येऽस्मिन् महाकविना शब्दानां भावानुसारि पदविन्यासोऽकारि। यतोहि अत्र भगवताश्रीकृष्णेन कीदृशः नारदमुनिः दृष्टः इति प्रतिपादनमस्ति। अत्र विशिष्टपदानां विन्यासेन रमणीयता प्रतिपादितास्ति। यथा- सूक्ष्मपक्ष्मणा, 'अत्र' लोम शब्दोऽपि भवितुं शक्यते परञ्च लोमशब्देन अत्र तावत् सौन्दर्यम् अवलोकयितुं न शक्यते। तद्वदेव- चकासतं,चारुचमूरुचर्मणादय अपि वर्तन्ते। येषां विन्यासैः पद्येऽस्मिन् विशिष्टरमणीयतावलोकयितुं शक्यते।

**रणद्भिराघट्टनया नभस्वतः**
**पृथग्विभिन्नश्रुतिमण्डलैः स्वरैः।**
**स्फुटीभवद्ग्रामविशेषमूर्च्छना-**
**मवेक्षमाणं महतीं मुहुर्मुहुः।।** शिशु. 1/10

अस्मिन् श्लोके महाकविमाघेन पदानां रमणीयता आरोहावरोहक्रमेण प्रतिपादितम्। यथा- रणद्भिराघट्टनया, मण्डलैः स्वरैः, महतीं मुहुर्मुहुः इति। अत्र पदानां क्रमः स्पष्टमेव परिलक्ष्यते।

**पुराणि दुर्गाणि निशातमायुधं**
**बलानि सूराणि घनाश्च कञ्चुकाः।**
**स्वरूपशोभैकफलानि नाकिनां**
**गणैर्यमाशङ्क्य तदादि चक्रिरे।।** शिशु. 1/44

श्लोकेऽस्मिन् पदानां गुम्फनम् एतादृशं वर्तते येन वर्णमाधुर्य स्पष्टमेव दृश्यते। यतोह्यत्र- पुराणि दुर्गाणि, बलानि सूराणि, फलानि इत्यादयः शब्दाः वर्तन्ते येषां माध्यमेन महाकविर्माघस्य पदरचनासौष्ठवं

सहृदयहृदयसंवेद्यं वरीवर्ति।

**तपेन वर्षाः शरदा हिमागमो**
**वसन्त लक्ष्म्या शिशिरः समेत्य च।**
**प्रसूनक्लृप्तिं दधतः सदर्तवः**
**पुरेस्य वास्तव्यकुटुम्बितां ययुः।।** शिशु. 1/66

पद्येऽस्मिन् षड्ऋतूणाम् अतिशयोक्ति-अलङ्कारमाध्यमेन लङ्कापुर्यया साकम् कुटुम्बिसम्बन्धाः प्रतिपादिताः। अत्र समवेतरूपेण षड्ऋतूणां निवासोपस्थापनेन भावसौन्दर्यं समुत्पद्यते।

**तस्योल्लसत्काञ्चनकुण्डला-**
**ग्रप्रत्युप्तगारुत्मतरत्नभासा।**
**अवाप वाल्योचितनीलकण्ठ-**
**पिच्छानचूडाकलनामिवोरः।।** शिशु. 3/5

**'समासबहुला गौडी'** (सा.द. 9.4) इति कथनानुसारेण अत्र दीर्घसमासितपदानि प्रयुक्तानि महाकविना। अतोऽत्र गौडीरीत्यां वर्णविन्यासः स्पष्टमेव परिलक्ष्यते।

दृष्टोऽपि शैलः स मुहुर्मुरारे-
रपूर्ववद्विस्मयमाततान।
क्षणे-क्षणे यन्नवतामुपैति
तदेव रूपं रमणीयतायाः।। शिशु. 4/17

श्लोकेऽस्मिन् साहित्यजगति ख्यातिलब्धा सूक्तिर्निहिता वर्तते। अत्र पदशय्या स्पष्टमेव दृश्यते। अत्र क्षणे-क्षणे यन्नवतामुपैतीत्यादिना रमणीयतायाः स्वरूपमपि महाकविना प्रत्यपादि। शब्दालङ्कारचमत्कारोऽवलोकनीयः-

**नवपलाशपलाशवनं पुरः**
**स्फुटपरागपरागतपङ्कजम्।**
**मृदुलतान्तलतान्तमलोकयत्**
**स सुरभिं सुरभिं सुमनोभरैः।।** शिशु.6.02

श्लोकोऽयं वसन्तविषकं वर्तते, अत्र महाकविना यमकालङ्कारालङ्कृतभाषाश्रयणेन माधुर्यं प्रतिपादितम्।

**वदनसौरभलोभपरिभ्रमद्-**
**भ्रमरसंभ्रमसंभृतशोभया।**
**चलितया विदधे कलमेखला-**
**कलकलोऽलकलोलदृशान्यया।।** (शिशु. 6/14)

पद्येऽस्मिन् भावानुसारि-भाषाश्रयेण सौकुमार्यं प्रतिपादितमस्ति। अत्र निहितभावा: कामिन्या: सौन्दर्यं प्रतिपादयन्ति तथा च भाषाऽपि अतीव मनोहरा अस्ति।

**कुसुमकार्मुककार्मुकसंहित-**
**द्रुतशिलीमुखखण्डितविग्रहा:।**
**मरणमप्यपरा: प्रतिपेदिरे**
**किमु मुहुर्मुमुहुर्गतभर्तृका:।।** (शिशु. 6/16)

पद्योऽयं दीर्घसमासयुक्तं तथा अनुप्रासालङ्कारसहितञ्च वर्तते। यथा-कुसुमकार्मुककार्मुक तथा च मुहुर्मुमुहुर्गतभर्तृका: इति।

**मधुरया मधुबोधितमाधवी-**
**मधुसमृद्धिसमेधितमेधया।**
**मधुकराङ्गनया मुहुरुन्मद-**
**ध्वनिभृता निभृताक्षरमुज्जगे।** (शिशु. 6.20)

श्लोकेऽस्मिन् भाषाया: सङ्गीतात्मकत्वेन सौन्दर्यं विशेषतयावधेयमस्ति। अत्र पदानां गुम्फनं, वर्णविन्यास:, पदेषु परस्परमैत्रीसम्बन्ध: तथा च पदानां सहर्षम् अर्थप्रकाशनं सुकुमारवर्णनञ्च कृतमस्ति। प्राय: एतादृशपद्येषु एकमपि पदं निष्कासनीयं न भवति। अर्थात् सर्वेऽपि शब्दा: अत्र औचित्यसमन्विता: तथा सौन्दर्याधायकाश्च वर्तन्ते।

**उपसंहार:**-पूर्वोक्त विवेचनेन महाकविमाघस्य भाषाप्रयोगपाटवं स्पष्टमेवानुभूयते। तस्य काव्यसर्जनचातुर्यं शिशुपालवधपद्यानाम् अवलोकनेन स्फुटी भवति, अस्य प्रतिभा सीमन्तिनी यथा छन्दोगुम्फन एव राराज्यते.

तथैव काव्ये विविधशास्त्रसन्निवेशोऽपि भाति। 'शिशुपालवधे पदशय्या' इति पर्यालोचनेन प्रतीयते यत् कविरयं शब्दशास्त्रस्य, राजनीतेः, सांख्य-योग-बौद्ध-नयानां पुराणप्रचयस्य, संगीतस्य, नाट्यशास्त्रस्य, चित्रकाव्यस्य, आयुर्वेद-विज्ञानस्य-कामशास्त्रस्य, अश्व-मातङ्गादि-लक्षणादेः किम्बहुना समेषामेव शास्त्राणां तलस्पर्शभाक् विद्वान्नसौ बभूव।

अलङ्कारविषये तु शब्दालङ्कारवर्गे श्लेष-यमकानुप्रास प्रदर्शनेन चित्रकाव्यस्य एकाक्षरी-श्लोकादिनिर्माणेन चास्य महिमा महीयते। एकाक्षरी श्लोकः यथा-

**दाददो दुद्ददुद्दादी दादादो दूददीददोः।**
**दुद्दादं दददे दुद्दे ददाददददोऽददः॥ (शिशु.19.114)**

एकाक्षरीश्लोकोऽयम् अर्थसहितं वर्तते न तु अर्थरहितम्। अनेनैव माघमहाकवेः पाण्डित्यम् अनुभवितुं शक्यते। अतः महाकवेरस्य सर्वविध पाण्डित्यम् अवलोक्य डॉ. पारसनाथद्विवेदिनाप्युक्तम्-

**'भारवि राजनीतिज्ञः कालिदासो महाकविः।**
**भट्टिः व्याकरणज्ञाता माघे सन्ति बहुज्ञता॥'**

अनेनप्रकारेण महाकविमाघस्य पाण्डित्यं स्पष्टमेव दृश्यते।

# नैषधीयचरिते वस्तुध्वनिः

डॉ. रामकुमार शर्मा

व्यङ्ग्यरूपो ध्वनिर्वस्त्वलङ्काररसरूपत्वेन त्रिधा। काव्यरूपस्तु शुद्धोऽसावेकपञ्चाशत्। तत्र वस्तुध्वनिरेकविंशतिधा। शब्दशक्तिमूलो ध्वनिरेकः, स्वतःसंभविभ्यां कविप्रौढोक्तिसिद्धाभ्यां कविनिबद्धवक्तृप्रौढोक्तिसिद्धाभ्यां च व्यञ्जकाभ्यां वस्त्वलङ्काराभ्यां वस्त्वलङ्कारयोर्व्यज्यमानत्वाद् अर्थशक्तिमूलः षडिति संकलनया सप्त वस्तुध्वनयः। पुनः पदवाक्यप्रबन्धरूपाणां व्यञ्जकानां त्रैविध्येनैकविंशतिर्वस्तुध्वनयः। महाकविना श्रीहर्षेण प्रणीते विद्वदौषधे शृङ्गाररसध्वनिप्रधाने नैषधीयचरिते प्रायेण प्रतिपद्यं वस्तुध्वनेः साम्राज्यम्। तत्र केषाञ्चिद् वस्तुध्वनीनां रामणीयकमधस्तात् प्रदर्श्यते–

## (क) शब्दशक्तिमूलो वस्तुध्वनिः

नानार्थशब्दस्थले ध्वनिरेष स्वीकृतः। नानार्थशब्दस्याऽभिधायां प्रकरणादिवशेन नियमितायां प्राधान्येन व्यञ्जनया बोध्यमाने वस्तुनि ध्वनिरयं दृश्यते। यथा, 'नलं वरय' इति हंसेनोक्ताया दमयन्त्या उत्तरे–

**"मनस्तु यं नोज्झति जातु यातु मनोरथः कण्ठपथं कथं सः।**
**का नाम बाला द्विजराजपाणिग्रहाभिलाषं कथयेदलज्जा॥"[1]**

अत्र परिवृत्त्यसहिष्णुना द्विजराजपाणिग्रहशब्देन 'प्रौढैव नलेन सह स्वविवाहं कथयेत्, अहं नलं कामये' इति वस्तु ध्वन्यते। एवं हंसस्य–

**"पर्यङ्कतापन्नसरस्वदङ्कां लङ्कापुरीमप्यभिलाषि चित्तम्।**
**कुत्रापि चेद्वस्तुनि ते प्रयाति तदप्यवेहि स्वशये शयालु॥"[2]**

इति कथनस्योत्तरे दमयन्त्याः–

---

1. नैषधीयचरितम् 3.59
2. नैषधीयचरितम् 3.66

**'चेतो नलं कामयते मदीयं नान्यत्र कुत्रापि च साभिलाषम्।'**[1]

इति श्लोके 'नलङ्कामयते' इति तथाविधेन शब्देन लङ्काकामना-निषेधरूपे वाच्यार्थे निष्पन्ने 'मम मनो राजानं नलं कामयते, तस्याऽप्राप्तौ मरणायाऽनलं कामयते।' इति च वस्तु ध्वन्यते। न चैतस्य वस्तुनः **"इतीरिता पत्ररथेन तेन ह्रीणा च हृष्टा च बभाण भैमी"** इति पूर्वार्द्धेनाभिहितस्य लज्जाहर्षरूपस्य वाच्यस्य साधकत्वेन गुणीभाव इत्याशङ्कनीयम्, लज्जाहर्षयोः प्रकारान्तरेणापि साधयितुं शक्यत्वात्। वस्तुनोऽत्र प्रकारान्तरेण सिद्धस्य तादृशवाच्यस्य साधकत्वेऽपि न ध्वनित्वस्य क्षतिः। प्रकारान्तरसिद्धवाच्यसाधकस्यापि व्यङ्ग्यस्य स्थले ध्वनिरेवेत्यालङ्कारिकाणां समयः। उक्तं रसगङ्गाधरे–

**"यादृशव्यङ्ग्यप्रतिपत्तिं विना यत्र वाच्यस्य सर्वथाप्यनुप-पत्तिस्तत्र तद् वाच्यसिद्ध्यङ्गम्।** यत्र च प्रकारान्तरेणापि तस्योपपत्तिः शक्या कर्तुं न तत्र तथा। अन्यथा हि 'निःशेषच्युतचन्दनं स्तनतटम्' इत्यत्राधमत्वसिद्ध्यङ्गत्वाद् दूतीरमणस्य वाच्यसिद्ध्यङ्गगुणीभूतव्यङ्ग्यत्वापत्तेः।"[2]

अत्र लज्जाहर्षरूपस्य वाच्यस्य परपुरुषवर्णनश्रवणलङ्कागमनौ-त्सुक्यादिप्रकारान्तरेणापि सिद्धिः। तेन ध्वनित्वमेवेह। अथवा गुणीभावेऽपि व्यङ्ग्यरूपध्वनिपदार्थताऽक्षुण्णा। एतद्वस्तुध्वनिद्वयं हंसेनैव–

**"नृपेण पाणिग्रहणे स्पृहेति**
**नलं मनः कामयते ममेति।**
**आश्लेषि न श्लेषकवेर्भवत्याः**
**श्लोकद्वयार्थः सुधिया मया किम्॥"**[3]

इति श्लोकेन प्रतिपादितम्। इदं वस्तुप्रकाश्यवस्तुध्वनेरुदाहरणद्वयम्। अथ शब्दशक्तिमूलाऽलङ्कारव्यङ्ग्यं वस्तु यथा–

---

1. नैषधीयचरितम् 3.67
2. रसगङ्गाधरः, 2 आननम्-168.
3. नैषधीयचरितम् 3.69

**"अधीतिबोधाचरणप्रचारणै-**
**र्दशाश्चतस्त्रः प्रणयन्नुपाधिभिः।**
**चतुर्दशत्वं कृतवान् कुतः स्वयं**
**न वेद्मि विद्यासु चतुर्दशस्वयम्।।"**[1]

अत्र चतुर्दशसु विद्यासु चतुर्दशत्वस्य स्वतः सिद्धत्वेन पुनस्तत्त्वस्य साधने पिष्टपेषणवन्निरर्थकत्वेन षट्पञ्चाशत्त्वसाधनस्य समुचितत्वेन च विरोधः। चतुर्दशत्वशब्दस्य चतुरवस्थत्वरूपस्यार्थस्य करणेन विरोधस्य पहिारः। अतो विरोधाभासोऽलङ्कारो वाच्यः। 'कृतवान् कुतः स्वयम्' इति प्रश्नेन तस्य वाच्यता। अनेनाऽलङ्कारेण काव्यनायकनलचरिते विरोधिनोऽप्यविरोधतायाः साधनं ध्वन्यते। अत एवाऽधर्मेऽपि तपस्विताया आधानं दारिद्र्यापाकरणेऽपि दरिद्रतासूचकवैधसलिपेः समर्थनं सत्यपि भैम्यभिलाषे देवार्थं दौत्याङ्गीकरणं चेत्यादि महाकाव्ये वक्ष्यमाणं संगच्छते। चतुर्दशत्वशब्दस्य पर्यायपरिवृत्त्यसहत्वेन वस्तुध्वनेरत्र शब्दशक्तिमूलत्वम्।

## (ख) अर्थशक्तिमूलो वस्तुध्वनिः

पर्यायपरिवृत्तिसहशब्दस्थलेऽयं ध्वनिः। तत्र स्वतःसंभविना वस्तुनाऽर्थ-शक्तिमूलो वस्तुध्वनिर्यथा-

**"वयोवशस्तोकविकस्वरस्तनीं तिरस्तिरश्चुम्बति सुन्दरे दृशा।**
**स्वयं किल स्त्रस्तमुरःस्थमम्बरं गुरुस्तनी ह्रीणतराऽपराऽऽददे।।"**[2]

अत्र वयःसन्धौ वर्तमानां स्वल्पस्तनीं बालां तिरः पश्यन्तं सुन्दरं युवानं विलोक्य पीनपयोधरया लज्जितया प्रौढया स्वयं स्त्रस्तस्योरस्थल-वस्त्राञ्चलस्य पुनरादानरूपेण स्वतःसंभविना वाच्येन वस्तुना 'अल्पस्तनीं संभोगाऽसहनां मुग्धां किं पश्यसि, मां संभोगक्षमां प्रौढां पश्य' इति वस्तु ध्वन्यते। वारयात्रिकभोजनावसरे प्रौढां मुग्धां पश्यतः, कस्यचन सुन्दरस्य मन आत्मानं प्रति समाक्रष्टुं वक्षःस्थाम्बरादानद्वारा स्वपीनजघनस्तनयुगं प्रादर्शयदिति भावोऽत्र। शब्दानां पर्यायपरिवृत्तिसहततयाऽर्थशक्तिमूलत्वम्। एवम्-

---

1. नैषधीयचरितम् 1.54
2. नैषधीयचरितम् 16.69

**'मध्येसभं साऽवततार बाला गन्धर्वविद्याधरकण्ठनाला।**
**त्रयीमयीभूतवलीविभङ्गा साहित्यनिर्वर्तितदृक्तरङ्गा।'**[1]

इत्यत्र सरस्वत्याः कण्ठे गन्धर्वविद्याया धारणस्य कटाक्षविक्षेपेषु साहित्योपादानकत्वस्य च वस्तुभूतस्य कथनेन क्रमशः कण्ठस्वरे माधुर्य-सर्वाकर्षणादिशक्तेः कटाक्षविक्षेपेषु च शुक्लरक्तनीलवर्णादीनां रसभावादीनां सम्मेलनेन हृद्यत्वरमणीयत्वरूपस्य वस्तुनो ध्वननात् परिवृत्तिसहशब्द-सत्त्वाच्चार्थशक्तिमूलो ध्वनिः।

एवं स्वतःसंभविनाऽलङ्कारेणाऽर्थशक्तिमूलो वस्तुध्वनिर्यथा–

**'साप्तुं प्रयच्छति न पक्षचतुष्टये तां**
**तल्लाभशंसिनि न पञ्चमकोटिमात्रे।**
**श्रद्धां दधे निषधराड्विमतौ मतानाम्-**
**अद्वैततत्त्व इव सत्यतरेऽपि लोकः॥'**[2]

अत्राऽद्वैततत्त्वब्रह्मोपमालङ्कारेण स्वतःसंभविना नल आनन्दमयत्वं वरणीयत्वं कृत्रिमनलविवर्ताधिष्ठानत्वं दुर्लभत्वं चेत्यादि वस्तु ध्वन्यते। यथा नानात्मवादिनां सांख्यनैयायिकबौद्धजैनानां मतचतुष्टयं सत्यतरेऽप्यद्वैततत्त्वे श्रद्धोत्पादने बाधकं तथा देवनलचतुष्टयं भैम्यां सत्यतरे नले। भैमी सत्यासत्यनलमिथुनीभावेन सत्येऽपि नले श्रद्धां न दधौ, काक्वा हंसविवेकवत्तया सत्यं नलं परिचिकायैवेति वा पद्यस्यास्य भावः।

प्रौढोक्तिसिद्धवस्तुना वस्तुध्वनिर्यथा–

**"ईशाणिमैश्वर्यविवर्तमध्ये लोकेशलोककेशचलोकमध्ये।**
**तिर्यञ्चमप्यञ्च मृषानभिज्ञरसज्ञतोपज्ञसमज्ञमज्ञम्॥"**[3]

दमयन्त्याः कटिप्रदेश ईशस्याणिमैश्वर्यस्य विर्वत इतिलक्षणेन कविनिबद्धहंसरूपवक्तृप्रौढोक्तिसिद्धेन वस्तुना मध्यभागे कार्श्यातिशयरूपं

---

1. नैषधीयचरितम् 10.74
2. नैषधीयचरितम् 13.36
3. नैषधीयचरितम् 3.64

वस्तु ध्वन्यते। कटिप्रदेशस्य तादृगणिमैश्वर्यविवर्तताया बहिरौचत्येनाऽसंभाव्यमानतया प्रौढोक्तिमात्रनिष्पन्नत्वम्।

प्रौढोक्तिसिद्धाऽलङ्कारेण वस्तुध्वनिर्यथा–

**"वैदर्भीकेलिशैले मरकतशिखरादुत्थितैरंशुदर्भै-**
**र्ब्रह्माण्डाघातभग्नस्यदजमदतया ह्रीधृतावाङ्मुखत्वैः।**
**कस्या नोत्तानगाया दिवि सुरसुरभेरास्यदेशं गताग्रै-**
**र्यद्गोग्रासप्रदानव्रतसुकृतमविश्रान्तमुज्जृम्भते स्म॥"**[1]

अत्र वैदर्भीकेलिपर्वतान्मरकतशिखरकिरणानां वेगगर्वेण ब्रह्माण्डपर्यन्तं गमनम्, आघातेनाऽधःपतनम्, उत्तानगायाः कामधेनोर्मुखाग्रे समागमनं तेन कुण्डिननगर्या गोग्रासप्रदानजन्यपुण्यवर्धनं चेति वाच्यम्। इदं प्रौढोक्तिमात्रनिष्पन्नम्, बहिरौचित्येन संभावनाऽविषयत्वाभावात्। मरकतकिरणानां वेगजमदादिना सम्बन्धाभावेऽपि सम्बन्धस्य वर्णनादतिशयोक्त्यलङ्कारेण वाच्येन प्रतीयमानयोत्प्रेक्षया वा मरकतानां प्राचुर्यवैशद्यं गोग्रासप्रदानवर्धमानपुण्यशालिन्याः कुण्डिनपुर्याः सम्बन्धेन दमयन्त्याः सौभाग्यशालित्वं तेन पुण्यश्लोकेन नलेन वरणीयत्वं चेत्यादि वस्तु ध्वन्यते। यद्यपीह मरकतकिरणेषु तृणत्वारोपस्य प्रतीयमानत्वात् 'मरकतकिरणा गोग्रासभूतानि तृणानि' इति रूपकालङ्कारोऽपि व्यज्यते तथापि स गोग्रासप्रदानजन्यसुकृतवृद्धिरूपवाच्यस्य साधकत्वेन गुणीभूत इति न ध्वनिव्यपदेशार्हः।

एवमिह नैषधीयचरिते लभ्यमाना वस्तुध्वनयः स्थालीपुलाकन्यायेन प्रदर्शिताः। विशेषतस्तु ग्रन्थ एव द्रष्टुं शक्यन्ते। अत्र काव्ये हि प्रतिपदं प्रतिपद्यं प्रतिप्रकरणं च नैके चमत्कारिणो वस्तुध्वनयः। "धर्माविरुद्धः कामः सेव्यः" इति प्रबन्धव्यङ्ग्यो वस्तुध्वनिरत्रेति शम्।

1. नैषधीयचरितम् 2.105

## शिशुपालवधमहाकाव्ये उपमानवस्तुसन्निवेशपाटवम्

प्रो. प्रभुनाथ द्विवेदी

साहित्यसौन्दर्यनवावतारं बृहत्त्रयीरत्नमनिन्द्यशोभम्।
क्षणे क्षणे यन्नवतामुपैति तन्मञ्जुस्निग्धं भुवि माघकाव्यम्।।1।।

यद्भारते कृष्णकथा मनोज्ञा तथा कृता सत्यवतीसुतेन।
तच्चेदिराजस्य वधं विशोध्य ततान माघः प्रतिभावितानम्।।2।।

शिशुपालवधं नाम महाकाव्यं मनोरमम्।
कान्तकाव्यगुणोपेतं विबुधैश्च प्रशंसितम्।।3।।

उपमा पदलालित्यं रम्यं चाप्यर्थगौरवम्।
कृत्स्नमेकत्र राजन्ते माघकाव्ये न संशयः।।4।।

उपमानवस्तुनस्तस्मिन् सन्निवेशस्य पाटवम्।
कवेस्तदनुसन्धाय किञ्चिदत्र निरूप्यते।।5।।

'सर्वं वेदात्प्रसिद्ध्यति' इति न्यायं सा 'उपमा' अप्यनुसरति यस्या महिमा काव्येशास्त्रे च प्रथितो विराजते। एकतः काव्ये सौन्दर्यविधायक-तत्त्वेष्वनन्यतमाऽपरतः काव्यशास्त्रेऽलङ्कारनिरूपणप्रसङ्गे प्राथम्यं भजते। वैदिक-सूक्तेषु न केवलमुपमालङ्कारस्य चारुनिबन्धनं दृश्यतेऽपितूपमाशब्दस्य नैकशः प्रयोगा विहिताः। वेदगोमुखप्रवर्तितोपमागङ्गाधारा लौकिकसाहित्यपयोधिपूरणाय प्रसरन्ती निरन्तरं वितता बृहदाकारा कविप्रजापतिभिरवगाहिता। उपमां शरणं गता ये कृतिनः कवयस्तेषां तूपमैव नास्ति। कालिदासस्तेष्वेक-तमोऽस्ति, माघस्त्वपरः। अस्य महाकवेः नितान्तकान्तकीर्तिभूतं शिशुपालवधं नाम महाकाव्यं बृहत्त्रय्यां परिगण्यते। पण्डितप्रिया खलु बृहत्त्रयी। न केवलं साहित्यमपि तु तत्र बहुमुखं पाण्डित्यं विराजते। माघस्तु पण्डितकविरेव विश्रुतः—

---

* पूर्वाचार्यः, संस्कृतविभागः, महात्मागांधीकाशीविद्यापीठम्, वाराणसी-221002।

**'माघं वा माघकाव्यं वा को न जानाति पण्डितः?।**
**यस्य नामश्रवेणैव कस्य कम्पो न जायते?॥'**

माघकाव्ये येऽलङ्कारा: प्रयुक्तास्तेषूपमा प्रामुख्यं भजते। साधारणधर्मं वाचकशब्दञ्च विहायोपमायां प्रधाने तत्त्वे उपमेयमुपमानञ्च भवतः। 'उपमातुं योग्यमुपमेयम्' तथा च, 'उपमीयतेऽनेनेत्युपमानम्' इति व्युत्पत्तिरेव द्वयोरर्थं प्रतिपादयति। एवं हि यस्य वस्तुनः उपमा दीयते तदुपमेयं भवति; येन वस्तुना उपमा दीयते तदुपमानं कथ्यते। उपमानमुपमेयादुत्कृष्टतरं स्यादिति प्रायशः सर्वेषामालङ्कारिकाणां मतम्। आचार्यो वामनः स्पष्टमेव स्वीकरोति–'उपमीयते सादृश्यमानीयते येनोत्कृष्टगुणेनान्यत् तदुपमानम्॥

**यदुपमीयते न्यूनगुणं तदुपमेयम्॥**[1]

उपमाचारुत्वमुपमानमेवाश्रयते। वस्तुतः उपमेयस्य रूपं भावं वा सादृश्यबलात्स्पष्टं साक्षात्कर्तुमेवोपमानं प्रयुज्यते। अत उपमानमुपमेयाद् भिन्नमिष्यते। अस्यालङ्कारयोजनायां कविदृष्टस्योपमानस्य प्रामुख्यं सर्वथा प्रयतनीयम्। एतदेव काव्यस्य चारुत्वकल्पनं, काव्यकलायाः निदर्शनं कविप्रतिभायाश्च निकषः प्रतिभाति। अनेनैव काव्ये प्रभावोत्पादकतायाःसन्धानं भवति। प्रेषणीयत्वाऽऽदाने भावनाञ्च विशदीकरणे साधनमपीदं भवितुमर्हति। लोकशास्त्राणां मर्मग्रहणप्रवणः सहृदयः कविरेव हृद्यमनिन्द्यमुपमानं परिकल्पयति। स्वरूपबोधकं भावोत्तेजकं वोपमानसादृश्यं तस्याऽऽयोजनस्य याथार्थ्यं विद्योतयति। रुचिराणि चेतोहराणि चोपमानानि वस्तुतो भावव्यञ्जनार्थमेव विधीयन्ते। अपि च तेषामपूर्वनावीन्यमद्भुतं च वैलक्षण्यं सहृदयहृदयानधिक-तरमावर्जयति। एवं हि, उपमानस्य भावव्यञ्जनपरा योजना कस्यचिदपि केवरभिव्यक्तिनैपुण्यस्य निकष इति निश्चप्रचम्।[2]

प्रकृतविषयानुरोधतो यदा वयं शिशुपालवधमहाकाव्ये उपमानाऽ-ऽयोजनानि निपुणमवलोकयामस्तदा नैराश्यं मनागपि हृदयं न स्पृशति। तत्र

---

1. काव्यालङ्कारसूत्रवृत्तिः, 4.2
2. संस्कृत काव्यशास्त्र में अलङ्कारों का विकास : प्रो. दशरथ द्विवेदी, राधा पब्लिकेशन्स, दिल्ली, प्रथम खण्ड, पृ. 233।

कवे:प्रतिभावैशिष्ट्यं कल्पनाचमत्कारं चानुभवाम:। शिशुपालवधमहाकाव्यस्य सर्वेष्वेव सर्गेषु यथावसरमौपम्यविधानं दृश्यते। क्वचित्परम्परागतानि, कुत्रचित्प्रसिद्धानि पौराणिकानि, क्वचिच्चान्यकविभि: पूर्वत: प्रयुक्ता-न्यप्युपमानानि तत्र तत्र दृष्टिपथमायान्ति। किन्तु तादृशान्यपि बहूनि उपमानानि सन्ति यत्र कवे: कल्पनाचारुत्वं नूतनवस्तुसन्निवेशपाटवं च निर्मलादर्शे आत्मबिम्बमिव प्रसीदति। माघकाव्यमालोड्य साधु सञ्चिन्त्य तत्त्वं ततस्तत: सञ्चित्य च तानि उपमेयोपमानानि यथाध्यवसायमेकैकमाहृत्यास्य निबन्धस्यान्ते परिशिष्टपृष्ठेषु सूचीबद्धतां नीतानि। तत्सर्वं तत्रैव द्रष्टव्यम्। अत्र केवलं तान्येव प्रदर्शयितुं युक्तं यत्रोपमानेषु किमपि वैलक्षण्यं वैशिष्ट्यं वा नैपुण्यं वा प्रतिभाति।

शिशुपालवधमहाकाव्यस्यादिसर्गे आरम्भ एव भगवान् कृष्ण: वसुदेवसद्मनि वसन् तत्राम्बरादवतरन्तं देवर्षिं नारदं ददर्श। प्रथमं तावदुपमेयस्य नारदधाम्न: सूर्याग्निभ्यामुपमानाभ्यां व्यतिरेकवृत्त्याऽध:प्रसरणधर्मेणाधिक्यं वर्णयति कवि:। अत:परं क्रमशोऽवतीर्यमाणोऽवबुद्धो नारदोऽनेकैरुपमानैर्योजित:। उपमेयस्य देवर्षेर्नारदस्याऽव्यक्तमुपमानं 'त्विषां चय:'[1] (तेज:पुञ्जम्) इत्यस्ति। यतो हि सुदूराद् व्यक्तिर्न विभाति। सामीप्यात् स्पष्टता जायते। अत: सुष्ठु प्रयुक्तमुपमानमिदम्।

अत: परं सप्तभि: पद्यैर्महाकविर्देवर्षिं नारदं विशिनष्टि। अधोऽवतरतो नारदस्य तां तां स्थितिं शोभां च विभाव्य तैस्तैर्विशिष्टैरुपमानैस्तमलङ्करोति। नवपयोधरानध: कर्पूरचूर्णराशिपाण्डुर: स देवर्षि: गजेन्द्रचर्मधारिणा भूतिसितेन शम्भुनोपमित:।[2] अत: परं वस्त्रविन्यासच्छविबलात्स बलरामेणोपमित:।[3] अतोऽपि पूर्वं सदृशविशेषकाभ्यां हिमालयोऽपि तस्योपमानत्वं प्रापित:।[4]

---

1. 'चयस्त्विषामित्यवधारितं पुरा.....।।' –शिशुपालवधम्, 1.3।
2. नवानधोऽधो बृहत: पयोधरान् समूहकर्पूरपरागपाण्डुरम्।
   क्षणं क्षणोक्षिप्तगजेन्द्रकृत्तिना स्फुटोपमं भूतिसितेन शम्भुना।। –तत्रैव, 1.4।
3. पिशङ्गमौञ्जीयुजमर्जुनच्छविं वसानमेणाजिनमञ्जनद्युति।
   सुवर्णसूत्राकलिता धराम्बरां विडम्बयन्तं शितिवाससस्तनुम्।। –तत्रैव, 1.6।
4. दधानमम्भोरुहकेसरद्युतिर्जरा: शरच्चन्द्रमरीचिरोचिषम्।
   विपाकपिङ्गास्तुहिनस्थलीरुहो धराधरेन्द्रं व्रततीततीरिव।। –तत्रैव, 1.5।

तस्यान्यदुपमानमस्ति उन्नतः शरन्मेघः।[1] पुनश्चैरावतस्तस्यावेपमानत्वे स्थितो दृश्यते।[2] अत्र सर्वेषूमाप्रयोगेषु महाकविर्नारदमुपमेयं तथाभूतमालोच्य तत्र-तत्र तदर्थं तथाविधमुत्कृष्टतरमुपमानं सज्जीकृत्य योजयामास। एतादृशानामुपमानानामायोजनं काव्यसौन्दर्यवर्धनाय सहृदयहृदयानन्दाय च भवत्येव। एकस्यैवोपमेयस्य कृते नैकरूपाणि भिन्नरुचिरुचिराणि उपमानानि प्रयुक्तानि। अनेनोपमानवस्तुसन्निवेशपाटवेन महाकवेर्नैसर्गिकी प्रतिभा विलक्षणा च कल्पनाशक्तिर्विद्योतते। ईदृशैरुपमानसंविधानैरम्बरादवतरतो नारदस्य तथाविधं सजीवं चित्रं काव्यरसिकानां मानसपटले स्पष्टमेवालिखितं विभाति। एवं महाकाव्यस्यारम्भ एव माघो मघ इव वर्षति काव्यकलायाः स्वकीयममन्दं विच्छित्तिसुधासारम्।

तपोनिधेर्नारदस्याग्रिममुपमानं प्रस्तौति कविः 'पतत्पतङ्ग' इति।[3] कल्पनातिशयान्वितमिदमपूर्वमुपमानम्। भावदृष्ट्या खल्विदं सङ्गच्छते पूर्वप्रयोगैः 'हिरण्यगर्भाङ्गभुवः' 'पतत्यधो धाम' 'चयस्त्विषां' चेति। महान् टीकाकारो मल्लिनाथः प्रयोगमिमं विमृशति सर्वङ्कषायाम्–"पतत्पतङ्ग इत्यत्र पतङ्गस्य पतनासम्भवादियमभूतोपमेत्याचार्यदण्डिप्रभृतयो बभणुः। अत एवाप्रसिद्ध-स्योपमानत्वायोगादुत्प्रेक्षेत्याधुनिकालङ्कारिकाः सर्वे वर्णयन्ति।" अत्रैवास्मिन् पद्ये अच्युतो हरिरपि तडित्वता मेघेनोपमितो 'गिरेस्तडित्वानिव' इति। हरेः श्यामवर्णत्वात्, पीताम्बरत्वात्, जवेनोत्थानाच्च सर्वात्मनोचितमेवेदमुपमानम्। अत्रापि महाकवेरुपमानप्रयोगपटुत्वं संल्लक्ष्यते। अतःपरं मुनिर्नारदः तुषारगिरिणा श्रीकृष्णश्च नीलगिरिणोपमितौ।[4]

---

1. विहङ्गराजाङ्गरुहैरिवायतैर्हिरण्मयोर्वीरुहवल्लितन्तुभिः।
   कृतोपवीतं हिमशुभ्रमुच्चकैर्घनं घनान्ते तडितां गणैरिव।। –शिशु., 1.7
2. निसर्गचित्रोज्ज्वलसूक्ष्मपक्ष्मणा लसद्बिसच्छेदसिताङ्गसङ्गिना।
   चकासतं चारुचमूरुचर्मणा कुथेन नागेन्द्रमिवेन्द्रवाहनम्।। –तत्रैव, 1.8
3. पतत्पतङ्गप्रतिमस्तपोनिधिः पुरोऽस्य यावन्न भुवि व्यलीयत।
   गिरेस्तडित्वानिव तावदुच्चकैर्जवेन पीठादुदतिष्ठदच्युतः।। –तत्रैव, 1.12
4. न यावदेतावुदपश्यदुत्थितो जनस्तुषाराञ्जनपर्वताविव।
   स्वहस्तदत्ते मुनिमासने मुनिश्चिरन्तनस्तावदभिन्यवीविशत्।। –तत्रैव, 1.15

शिशुपालवधस्य द्वितीये सर्गे सन्ति बहून्युपमानानि। तेषां कानिचिदत्र प्रदर्श्यन्ते सुधियां मनःप्रीतये कवेश्च तन्नैपुण्यनिदर्शनाय। बलरामस्य वपुषि संसक्ताः स्वेदबिन्दवः सन्ध्यारुणव्योम्नि स्फुरन्त्यस्तारा इवाभान्ति स्म।[1] अत्र स्वेदबिन्दोरुपमानं तारेति निबद्धम्। बलरामस्य शरीरं स्वतोऽतिगौरवर्णमासीत्। शिशुपालमभिलक्ष्योत्पन्नेन क्रोधेन तद्रक्तवर्णं बभौ। तस्मिन् शरीरे क्रोधवशात्कृतपदाः स्वेदबिन्दवोऽरुणाभाः प्रतीयन्ते स्म। अतः सान्ध्यकालिकेऽरुणवर्णे नभसि स्फुरन्त्यस्तारा अरुणाभाः प्रतीय-मानास्तदुपमानाय प्रकल्पिताः। अत्यन्तं निसर्गरुचिरमिदमुपमानं रोचते सर्वेभ्यः सहृदयेभ्यः। अहो! उपमायोजना कविपुङ्गवस्य। एकतो नीलवसनोपेतं गौरारुणाभं शरीरं बलरामस्य। तस्मिन् प्रोच्छलिताः स्वेदबिन्दवः। अपरतो निसर्गतो नीलवर्णं तथा च सान्ध्यारुणवर्णाभं नभः। तस्मिन् स्फुरन्त्यस्ताराः। मनोरमं सादृश्यं वितनोति काव्यसौन्दर्यम्।

'कुशलाः चित्रां वाचं [2]प्रसारयन्ती'त्यत्रोपमा श्लेषप्रतिभोत्थापिता। श्लिष्टपदविशेषणैर्योजिता वाणी अत्र शाटिकयोपमिता। यथा कश्चित्कुशल-स्तन्तुवायः श्लक्ष्णां सान्द्रां बहुभिस्तन्तुभिर्विचित्ररूपां पटीं शाटिकां निर्माय प्रसारयति तथैव कुशलो वक्ता कोमलवर्णामर्थगुर्वीं बहुभिः काव्यगुणैरुपेतां वक्रोक्तिमयीं वाचं वाणीं वितनोति। अस्मिन्नुपमाप्रयोगे कवेरुपमानकल्पना तस्य कौशलं निर्दिशति।

'शब्दार्थौ सत्कविरिव द्वयं विद्वानपेक्षते'[3] इत्यत्र विद्वान् सत्कविनोपममितः। योऽभिज्ञो जनः स न तु केवलं दैवं नापि केवलं पौरुषं किन्तु द्वयमपेक्षते। एवं सत्कविरपि न केवलं शब्दं नापि केवलमर्थं किन्तु द्वयमपेक्षते। द्वयोरपि साफल्यं द्वयापेक्षि भवति। अत्र पौष्टिकताया

---

1. दधत्सन्ध्यारुणव्योमस्फुरत्तारानुकारिणीः।
   द्विषद्द्वेषोपरक्ताङ्गसङ्गिनीः स्वेदविप्रुषः।। –तत्रैव, 1.18।
2. म्रदीयसीमपि घनामनल्पगुणकल्पिताम्।
   प्रसारयन्ति कुशलाश्चित्रां वाचं पटीमिव।। –शिशु., 2.74
3. नालम्बते दैष्टिकतां न निषीदति पौरुषे।
   शब्दार्थौ सत्कविरिव द्वयं विद्वानपेक्षते।। –तत्रैव, 2.183

उपमानं शब्दः पौरुषस्य चोपमानमर्थः। अतो विदुषोऽभिज्ञस्योपमानं सत्कविरिति युज्यते। अत्रोपमानसन्निवेशपटुर्महाकविर्माघः कर्मनिष्ठाय बुद्धिमते पुरुषाय शास्त्रसम्मतं लोकव्यवहारमुपदिशति तथा सत्कविप्रतिष्ठार्जनपराय प्रतिभावते पुरुषाय काव्यस्वरूपमपि निर्दिशति। यथाह आचर्यवामनः–"अदोषौ सगुणौ सालङ्कारौ शब्दार्थौ काव्यम्" इति। मन्ये, महाकविना माघेनाऽभिमतमिदमेव काव्यस्वरूपम्। ध्वन्यते च, माघः सत्कविरित्यत्र नास्ति संशयः। कवेर्नास्त्येषा विकत्थनेति पण्डिताः प्रमाणम्। यतो हि पूर्वोदाहृते पद्येऽपि कवेरेतादृशो भावः प्रतीयते।

**'शब्दविद्येव नो भाति राजनीतिरपस्पशा,**[1] इत्यत्रापि महाकवेर–पूर्वमुपमानविधानं तस्य च पाण्डित्यप्रतिभोत्कर्षवैलक्षण्मनुमेयम्।

तृतीयसर्गस्यैकस्मिन् पद्ये[2] मालोपमाप्रयोगे महाकविर्बहुविधानि उपमानानि योजयति। वर्णनमस्ति मुरारेः सेनायाः पुरान्निष्क्रमणस्य। अत्रोपमेयभूता द्वारकापुरी त्रिभिरुपमानैरुपमिता। एवमेव श्रीकृष्णस्य सेना अपि त्रिभिरुपमानैर्योजिता। अरविन्दनाभेर्विष्णोः शरीरं, शम्भोः कपर्दो ब्रह्मणश्च मुखमिति त्रीण्युपमानानि द्वारकापुर्याः। अथ च, प्रजाः, गङ्गाजलानि वेदाश्चेति त्रीण्युपमानानि श्रीकृष्णस्य सेनानाम्। अत्रोपमानैस्तैस्तैर्विशिष्टैर्द्वारकापुर्या अलौकिकत्वं व्यज्यते। तथा च, प्रजा इत्यनेनासंख्यत्वं, गङ्गजलानीत्यनेन धर्मनिष्ठत्वमवरोधसहत्वं वेदाश्चेत्यनेन सर्वशासकत्वं श्रीकृष्णस्य सैन्य–बलस्याभिव्यज्यते। उपमेयादधिकगुणत्वमुपमानस्येति स्पष्टम्।

अस्मिन्नेव तृतीये सर्गेऽन्यः पाण्डित्यपूर्णः सहृदयमनःप्रीतिकरश्चेतो–हरश्चोपमाप्रयोग आविष्कृतो महाकविना विराजते। पश्यन्तु सुधियः पद्यमिदम्–

**उद्धृत्य मेघैस्तत एव तोयमर्थं मुनीन्द्रैरिव सम्प्रणीताः।**
**आलोकयामास हरिः पतन्तीर्नदीः स्मृतीर्वेदमिवाम्बुराशिम्।।**[3]

---

1. अनुत्सूत्रपदन्यासा सद्वृत्तिः सन्निबन्धना। शब्दविद्येव नो भाति राजनीतिरपस्पशा।। –तत्रैव, 2.112।
2. प्रजा इवाङ्गादविन्दनाभेः शम्भोर्जटाजूटतटादिवापः।
   मुखादिवाथ श्रुतयो विधातुः पुरान्निरीयुर्मुरजिदध्वजिन्यः।। –तत्रैव, 3.65
3. तत्रैव 3–75

यथार्थेयं प्रौढोक्तिर्महाकवेः पाण्डित्यप्रकर्षं वितनोति। अत्र मेघाः, समुद्रजलं, नद्यः समुद्रश्चोपमेयभूताः। तथा च, मुनीन्द्राः, वेदार्थः, स्मृतयो वेदश्च क्रमशः तेषामुपमानानि सन्ति। कल्पनाढ्या कविवर्णनाचातुरी सहृदयसमक्षं नृत्यतीव। मेघैः सागराज्जलमुद्धृत्य तद्वर्षणैः प्रवाहिता नद्यो यथा समुद्रमेवाभिमुखं पतन्ति तथैव मुनीन्द्रैरपि वेदाद्वेदार्थं समदाय प्रणीताः स्मृतयो वेदान्तर्गता एव भवन्ति।

चतुर्थे सर्गे रैवतकवर्णनप्रसङ्गे तत्रस्थिताः सर्पवेष्टिताः वृक्षाः रुद्रैरुपमिताः।[1] वृक्षाश्रिताः नैका लता अपि तेषां रुद्राणां कराग्रैरुपमिताः। वृक्षस्य शाखासु स्थिताः नीलकण्ठाः मयूराः रुद्राणां कण्ठच्छविं धारयन्ति। अत्र योजितमुपमानं वेदपुराणादिसम्मितमतः पारम्परिकमपि रैवतकपर्वतस्थानां वृक्षाणां कामप्यपूर्वां विच्छित्तिं द्योतयति। ध्वन्यते चानेनोपमानेन यद् गिरिशः कैलासादागत्यात्र रैवतकमाश्रयते वर्धयति चास्य पर्वतस्य महिमानम्। यद्यपि सर्वं रुद्रमयं जगत् किन्त्वत्र सन्निवेशविशेषबलात् श्रीकृष्णं प्रति रुद्रस्य भक्तिरपि व्यज्यते।

अस्मिन्नेव सर्गे तन्मनोरमं पद्यं वर्तते यस्य वस्तुसौन्दर्येण मुग्धाः सहृदयाः महाकविं 'घण्टामाघ' इत्युपाधिना विभूषयन्ति। अनिर्वचनीया निसर्गरमणीवेयं रमणीया उपमानयोजना–

**उदयति विततोर्ध्वरश्मिरज्जावहिमरुचौ हिमधाम्नि याति चास्तम्।**
**वहति गिरिरयं विलम्बिघण्टाद्वयपरिवारितवारणेन्द्रलीलाम्।।[2]**

अत्र रश्मयो रज्जव इवाभान्ति। उदीयमानः सूर्य एकतोऽपरतश्चास्तङ्गच्छन् चन्द्रस्तैर्विततोर्ध्वरश्मिरज्जुभिः लाम्बिताविव रैवतकमुभयतस्तथा राजेते यथा कश्चिद्विशालकायो गजः विलम्बिघण्टाद्वयेन परिवारितः शोभते। अस्त्येवास्या उपमाया किमपि विशिष्टं वैलक्षण्यम्। उपमेयानि रश्मयः सूर्यचन्द्रौ रैवतकश्च। एतेषामुपमाननि सन्ति क्रमशो रज्जवः, घण्टाद्वयं

---

1. स्कन्धाधिरूढोज्ज्वलनीलकण्ठानर्वीरुहः श्लिष्टतनूनहीन्द्रैः।
प्रनर्तितानेकलताभूजाग्रान् रुद्राननेकानिव धारयन्तम्।। –शिशु., 4.7

2. तत्रैव, 4.20।

वारणेन्द्रश्च। अत्र कवेरुपमानकल्पना त्वनितरसाधारणी। अनेनोपमितेन रैवतकपर्वतस्य महदौन्नत्यं दुरारोहत्वं सारवत्त्वं च व्यज्यते।

अन्यत्रायं रैवतकः आगमिकैर्ब्राह्मणैस्सहोपमितः।[1] यथा आगमविदो ब्राह्मणाः मन्त्रान् धारयन्ति तथैवायं रैवतको निधिगणान् धारयति।

पञ्चमे सर्गे एकस्मिन् पद्ये श्रीकृष्णबलशिविरगतानि गजसन्निहितानि परवेश्मानि श्याममेघश्रेणिभिरुपमितानि।[2]

षष्ठसर्गस्यैकस्मिन् पद्ये कुटजपुष्पं मुक्ताचूर्णनिर्झरशीकरैस्तथा च कुटुजपुष्पपरागो दधिचूर्णैरुपमितः।[3] शिशुपालवधे महाकविर्बहुधैक-मेवोपमेयमादाय तत्कृते बहूनामुपमानानां योजनाकरणेऽतिशयपाटवं कल्पनावैभवञ्च पुरस्करोति सहृदयानां मनोरञ्जनाय।

अष्टमे सर्गे महाकविः 'कामिनो मन इव तज्जलमि'[4]त्युक्त्वाऽनेन विचित्रोपमानेन चमत्करोति।

एवमत्र स्थालीपुलाकन्यायेन महाकवेरुपमानवस्तुसन्निवेशापाटवं प्रदर्शितम्। अन्येष्वपि सर्गेषु सहृदयैरेवमेवोह्यम्। परिशिष्टभागे तु सर्वाण्युप-मानानि सङ्केतितानीत्यलं विस्तरेण। शममिति शम्।।

---

1. तत्रैव, 4.37।
2. शुक्लां शुकोपरचितानि निरन्तराभिर्वेश्मानि रश्मिवितताानि नरधिपानाम्।
   चन्द्राकृतानि गजमण्डलिकाभिरुच्चैर्नीलाभ्रपंक्तिपरिवेषमिवाधिजग्मुः।। –तत्रैव, 5.52
3. दलितमौक्तिकचूर्णविपाण्डवः स्फुरितनिर्झरशीकरचारवः।
   कुटजपुष्पपरागकणाः स्फुटं विदधिरे दधिरेणुविडम्बनम्।। –तत्रैव, 6.35
4. तत्रैव, 8.17

# नैषधीयचरिते औचित्यतत्त्वविमर्शः

प्रो. अमिताशर्मा

आभरतात् काव्यतत्त्वविद्भिः काव्ये औचित्यतत्त्वस्य महत्त्वं प्रतिपादितं परं काव्यजीविततया तत्त्वस्यास्य प्रतिष्ठापनमाचार्यक्षेमेन्द्रेण औचित्यविचारचर्चायां कृतम्। यथा हि तेनोक्तम्- 'औचित्यं रससिद्धस्य स्थिरं काव्यस्य जीवितम्।' किं नाम औचित्यमित्यस्मिन् विषये स्वकीयं मतमित्थं प्रदर्शितम्-

**उचितं प्राहुराचार्याः सदृशं किल यस्य यत्।**

**उचितस्य च यो भावस्तदौचित्यं प्रचक्षते।।** (कारिका-7)

सकलकाव्यशरीरजीवातुभूतस्यौचित्यस्य स्थितिः पदवाक्यप्रबन्धार्थ-गुण-अलङ्कार-रसादिषु सप्तविंशत्यङ्गेषु भवतीति- यथा ह्युक्तम्- 'एतेषु पदप्रभृतिषु स्थानेषु मर्मस्विव काव्यस्य सकलशरीरव्यापि जीवितमौचित्यं स्फुटत्वेन स्फुरदवभासते।'

आचार्यक्षेमेन्द्रात् पूर्वमाचार्यानन्दवर्धनेनापि काव्ये अलक्ष्यक्रम-ध्वनिसन्दर्भे औचित्यस्य माहात्म्यं प्रदर्शितम् यथा हि-

**अनौचित्यादृते नान्यद्रसभङ्गस्य कारणम्।**

**प्रसिद्धौचित्यबन्धस्तु रसस्योपनिषत् परा।।**

(ध्व. तृतीयोद्योतः)

प्रश्नः समुदेति यद् रससिद्धस्य काव्यस्य इति यत् कथितं तदा रसस्तु तत्र सिद्ध एव ततः रसौचित्यमित्यस्य कोऽभिप्रायः? वस्तुतः विभावानुभावसञ्चारिणामौचित्येनैव रसपरिपोषो भवति यथा हि कथितम्-

**'औचित्येन भ्राजिष्णुः शृङ्गारादिलक्षणो रसः सकलजनहृदयव्यापी वसन्त इवाशोकमङ्कुरितं मनः करोति।'** (वृत्तौ, कारिका-16)

अलङ्कारौचित्यविषये स आह- 'औचित्यवता सूक्तिरलङ्कारेण शोभते।' अत्रापि ध्यातव्यं यत् काव्ये रस एव मुख्यार्थत्वेन शोभते। अतएव सर्वथा रसानुगुणालङ्काराणां प्रयोगः कर्तव्यः। एवमेव गुणादीनामपि स्थितिर्भवति।

नास्त्यत्र संशीतिलेशः यदौचित्यं काव्यव्यापि भवेच्चेत् तर्हि सम्पूर्णमपि काव्यं हृदयसंवादि जायते।

नैषधचरितमहाकाव्ये सर्वेष्वङ्गेषु व्यापिनौचित्येन सहृदय-हृदयाह्लादकारित्वमत्र नितरां सुशोभते। सर्वप्रथमं तावत् **रसौचित्यमेव** प्रेक्षणीयम्। शृङ्गारोऽस्य महाकाव्यस्याङ्गित्वेन विराजते। अस्य विभावानुभावसंचारिणामौचित्यपूर्णवर्णनेन काव्यमिदं विभाति।शृङ्गाररसालम्बनत्वेन नायिकादमयन्त्याः पूर्वरागं प्रथमं समुपस्थापयति कविः। सा आशैशवाद् स्तुतिपाठकानां मुखेभ्यो नलविषयकं वृत्तान्तंमाकर्ण्य तं प्रत्यनुरक्ता बभूव यथा हि-

**उपासनामेत्य पितुः स्म रज्यते**
**दिने दिने सावसरेषु बन्दिनाम्।**
**पठत्सु तेषु प्रतिभूपतीनलं**
**विनिद्ररोमाजनि शृण्वती नलम्।।** नै.1/34

'विनिद्ररोमाज्नि' इत्यनेन विभावाश्रितः सात्त्विकभावः प्रदर्शितः। पूर्व नायिकायाः पूर्वरागः प्रदर्शनीय इति शास्त्रनियमौचित्यमपि संपोषितम्।

अथ च-

**कथाप्रसङ्गेषु मिथः सखीमुखा-**
**त्तृणेऽपि तन्व्या नलनामनि श्रुते।**
**द्रुतं विधूयान्यदभूतयानया मुदा**
**तदार्णनससज्जकर्णया।।** नै.1/35

अत्र भैम्या अनुरागातिशयः प्रदर्शितः यदर्थान्तरे प्रयुक्तोऽपि नलशब्दो

नृपनलस्मारकतया तस्याः कृते आकर्षकोऽभवत्। हर्षौत्सुक्ययोः संचारिभावयोः प्रदर्शनमपि सहृदयाह्लादकारि संजातम्। 'तन्व्या' इति पदेन विरहव्यथा प्रदर्शिता अतएव **पदौचित्यमपि** स्पष्टम्। यतोहि पदौचित्यविषये क्षेमेन्द्रेणोक्तम्-

**तिलकं बिभ्रती सूक्तिर्भात्येकमुचितं पदम्।**

**चन्द्राननेव कस्तूरीकृतं श्यामेवचान्दनम्।।** कारिका.11

प्रकरणमेतत् नितरामौचित्यरुचिरचमत्कारसमन्वितं प्रतिभाति।

**अलङ्कारौचित्यम्-**

**अर्थौचित्यवता सूक्तिरलङ्कारेण शोभते।** कारिका.15

रसानुरूपमेवालङ्कारनिबन्धनमपि कृतं श्रीहर्षेण। नलस्य दमयन्तीं प्रत्यनुरागप्रदर्शनायोत्प्रेक्षालङ्कार- प्रयोगो हृदयसंवादसौन्दर्यमादधाति यथा-

**तमेव लब्ध्वावसरं ततः स्मरः शरीरशोभालयजातमत्सरः।**
**अमोघशक्त्या निजयेव मूर्तया तया विनिर्जेतुमियेष नैषधम्।।** नै.1/43

लोकमुखाद् भैम्याः सौन्दर्यादिगुणोत्करं नलोऽप्यश्रृणोत्। शरीरशोभा-जयजातमत्सरः कामस्तमवसरं लब्ध्वाशरीरिण्या स्वकीयामोघशक्त्येव भैमीमाध्यमेन नलं विनिर्जेतुमैच्छत्। अत्रोत्प्रेक्षालङ्कारेण नलस्य विरहावस्थाधिकतरं संपोषणं प्राप्नोति। वस्तुतस्तु अलङ्काराणामलङ्कारता तु तदैव यदौचित्यसमन्वितैः प्रयोगैः रसपोषणं तैः क्रियते। अग्रेचापि कांश्चित् औचित्यसमन्वितान् प्रयोगान् उद्धृत्य नैषधे औचित्यचमत्कारः प्रस्तूयते। प्रबन्धार्थौचित्यविषये क्षेमेन्द्रेणोक्तम्-

**उचितार्थविशेषेण प्रबन्धार्थः प्रकाशते।** कारिका.13

नैषधे **प्रबन्धार्थौचित्य**मस्मिन् श्लोके दृष्टव्यम्-

**पवित्रमत्रातनुते जगद्युगे स्मृता रसक्षालनयेव यत्कथा।**

**कथं न सा मद्गिरमाविलामपि स्वसेविनीमेव पवित्रयिष्यति।।**

नै.1/3

या कथा स्मर्यमाणा सती भुवनं पवित्रं करोति सा कथा मद्‌गिरमपि पवित्रयिष्यति एव। इत्थं नलकथामाश्रित्य काव्यरचनाया औचित्यमत्र स्फुटं प्रकाशते। **कारकपदानामौचित्येनापि** रसस्यैव परिपोषणं भवति। नैषधे कर्तृपदौचित्यं यथा-

**विलासवापीतटवीचिवादनात्**
**पिकालिगीतेः शिखिलास्यलाघवात्।**
**वनेऽपि तौर्यत्रिकमारराध तं**
**क्व भोगमाप्नोति न भाग्यभाग्जनः॥** नै.1/102

विलासवनेऽपि नृत्यगीतवाद्यरूपं तौर्यत्रिकं नलं सेवते स्म। तरङ्गाणां नादः कोकिलानां गीतिः मयूराणां च नृत्यमिति तौर्यत्रिकमित्यनेन कर्तृपदेन सहृदयानां चेतांसि विचित्रमेवाह्लादमनुभवन्ति।

**वाक्यौचित्यम्-** यथा ह्युक्तं क्षेमेन्द्रेण-

**औचित्यरचितं वाक्यं सततं संमतं सताम्।** कारिका.12

नैषधे भैमीविरहाक्रान्तः नलः विलासवने भ्रमन् एकं हिरण्मयं हंसं ददर्श। तं हंसमवलोक्य तस्य चित्तं कौतुकाक्रान्तं बभूव-

**पयोधिलक्ष्मीमुषि केलिपल्वले रिरंसुहंसीकलनादसादरम्।**
**स तत्र चित्रं विचरन्तमन्तिके हिरण्मयं हंसमबोधि नैषधः॥**
नै.1/117

**महीमहेन्द्रस्तमवेक्ष्य स क्षणं शकुन्तमेकान्तमनोविनोदिनम्।**
**प्रियावियोगाद्‌विधुरोऽपि निर्भरं कुतूहलाक्रान्तमना मनागभूत्॥**
नै.1/119

विरहविधुराः जना एवंविधैरेव मनोविनोदैः स्वकीयमनांसि रञ्जयन्ति। अतएव **वाक्यौचित्यमत्र** शोभां जनयति।

**निपातौचित्यम्-** क्षेमेन्द्रमते उचितस्थानविन्यस्ता निपाताः अर्थसङ्गतौ सहायका भवन्ति। यथा ह्युक्तम्-

**उचितस्थानविन्यस्तैर्निपातैरर्थसंगतिः।**

**उपादेयैर्भवत्येव सचिवैरिव निश्चला।।** कारिका.25

भैम्या अलौकिकसौन्दर्यवर्णनप्रसङ्गे विधातुः स्थाने यदि मन्मथः, मम मनोरथो वा स्यात् तदापि एवंविधमाश्चर्यकारि रूपं घटेत न वा इति नलस्याभिप्रायप्रकटनाय 'वा' इति निपातस्य प्रयोगेण वर्णन- मद्भुतं जातम्। यथा हि-

**पदे विधातुर्यदि मन्मथो वा ममाभिषिच्येत मनोरथो वा।**
**तदा घटेतापि न वा तदेतत्प्रतिप्रतीकाद्भुतरूपशिल्पम्।।**
नै.7/10

**रससङ्करौचित्यविषये** क्षेमेन्द्रः आनन्दवर्धनमेवानुकरोति। काव्यं विविधरससमन्वितं भवति। आनन्दनर्धनमते सर्वत्रैव एको रसोऽङ्गीकर्तव्यः अन्येषाञ्चाङ्गरूपेणैव पोषणं स्यात्। यथा नैषधीयचरितस्यास्मिन् श्लोके हिरण्यमयहंसस्य करुणविलापमाकर्ण्य नलस्य चेतसि पक्षिणः मनुष्यवाक्त्वाद् हेमपक्षत्वाच्चाश्चर्यम्, स्वनिन्दाश्रवणात् सलज्जत्वं तद्दैन्यश्रवणाच्च कृपा इति विविधरससम्बद्धा भावाः प्रादुरभूवन्-

**इतीदृशैस्तं विरचय्य वाङ्मयैः सचित्रवैलक्ष्यकृपं नृपं खगः।**
**दयासमुद्रे स तदाशयेऽतिथीचकार कारुण्यरसापगा गिरः।।**
नै.1/134

अत्र 'कारुण्यरसापगा गिरः तदाशयेऽतिथीचकार' इत्यनेन अङ्गित्वेन प्रतिपादितः करुणरसः अन्येषाञ्चाङ्गत्वं सहृदयानावर्जयति।

प्राणिनां स्वभावौचित्यवर्णनमिति **स्वभावौचित्यम्**। यथा नैषधे-

**अथावलम्ब्य क्षणमेकपादिकां तदा निदद्रावुपपल्वलं खगः।**
**स तिर्यगावर्जितकंधरः शिरः पिधाय पक्षेण रतिक्लमालसः।।**
नै.1/121

अत्र खगवर्णनप्रसङ्गे 'तिर्यगावर्जितकंधरः शिरः पक्षेण पिधाय'

इति यदुक्तं तत्र पक्षिगतस्वभावौचित्यं नितरां सुशोभते।

**नामौचित्यम्**- कर्मानुरूपनाम्ना काव्यशोभा वर्धते। यथा नैषधे लोकोत्तरगुणानामुत्कर्ष: भैम्यां विराजते यतो हि 'दमन' इति नामतपोध नवरदानेन नृपभीम: तां प्रप्तवानिति। लोकत्रयेऽपीदृकसौन्दर्यादिगुणवती कापि कन्या नास्ति। इति तस्या दमयन्तीति नाम सार्थकं यतो हि सा भुवनत्रये सर्वासां सुन्दरीणां सौन्दर्यमदं स्वतनुश्रिया दमयन्ती उत्पन्ना-

**भुवनत्रयसुभ्रुवामसौ दमयन्ती कमनीयतामदम्।**
**उदियाय यतस्तनुश्रिया दमयन्तीति ततोऽभिधां दधौ।।**

नै. 2/18

अत्र नामौचित्येन भैम्या: सौन्दर्यमधिकतरं विभाति।

**अभिप्रायौचित्यम्**-अभिप्रायोऽपि कविनौचित्यपूर्णरीत्यैव प्रकाशनीय:। यथा नैषधे हंसग्रहणस्याभिप्राय: प्रकटित:-

**इत्थममुं विलपन्तममुञ्चद्दीनदयालुतयावनिपाल:।**
**रूपमदर्शि धृतोऽसि यदर्थं गच्छ यथेच्छमथेत्यभिधाय।।**

नै.1/143

वित्रिरूपदर्शनौसुक्येन गृहीतोऽसि तच्च रूपं मयावलोकितम् इति नलाभिप्रायस्तस्यचित्तस्य निर्मलतां प्रकटयन् काव्यशोभां जनयति।

एवमेव कुण्डिनपुर्यां सुवर्णहंसस्य रूपं प्रति दम्यन्त्या औत्सुक्यं हंसग्रहणार्थं धावनम् अनन्तरञ्च तं पीडितं दृष्ट्वा क्षमायाचनेति सर्वत्रैव दमयन्त्या अभिप्रायमौचित्येन प्रतिपादयति कवि:। यथा-

**धिक्चापले वत्सिमवत्सलत्वं यत्प्रेरणादुत्तरलीभवन्त्या।**
**समीरसङ्गादिव नीरभङ्ग्या मया तटस्थस्त्वमुपद्रुतोऽसि।।**

नै.3/55

**अनार्यमप्याचरितं कुमार्या भवान्मम क्षाम्यतु सौम्य! तावत्।**
**हंसोऽपि देवांशतयासि वन्द्य: श्रीवत्सलक्ष्मेव हि मत्स्यमूर्ति:।।**

नै.3/57

दमयन्त्या **विनम्रस्वभावौचित्येनापि** नितरां सुशोभते प्रकरणमिदम्। नलं प्रति स्वचित्ताभिलाषमपि भैमी श्लिष्टवचनैः सूचयति-

**इतीरिता पत्ररथेन तेन ह्रीणा हृष्टा च बभाण भैमी।**
**चेतो नलङ्कामयते मदीयं नान्यत्र कुत्रापि च साभिलाषम्॥**

नै.3/67

'चेतो नलङ्कामयते मदीयम्' अथ च 'चेतो न लङ्काम् अयते मदीयम्' इति श्लिष्टवचनैर्यत्कथितं तेनात्र लज्जाभावौचित्येन सहाभिप्रायकथनं हृदयाह्लादकारकमस्ति।

**सत्त्वौचित्यम्- 'चमत्कारं करोत्येव वचः सत्त्वोचितं कवेः'**

कारिका.31

सत्कवीनां काव्येषु लोकोक्तीनां सूक्तीनां वा बाहुल्यं दृश्यते। प्रायशोऽप्रकृतेन प्रकृतेर्वर्णनमेव तत्राभीष्टं भवति। क्षेमेन्द्रेण सत्त्वौचित्यतया प्रतिपादितमेतत्। एवंविधानि बहूनि स्थलानि नैषधीयचरितेऽपि प्राप्यन्ते। यथा-

**क्रमेलकं निन्दति कोमलेच्छुः क्रमेलकः कण्टकलम्पटस्तम्।**
**प्रीतौ तयोरिष्टभुजोः समायां मध्यस्तथा नैकतरोपहासः॥**

(नै.6/104)

मृदुवस्त्वभिलाषी क्रमेलकं निन्दति कठिनवस्तुभक्षकत्वात्। क्रमेलकश्च तं कोमलेच्छुं निन्दति। स्वेष्टेन भक्षणशीलयोस्तयोः तुल्यायां प्रीतौ एकतरोपहासः न कार्यः। इन्द्रस्य दौत्यकर्म कुर्वतः नलस्य वचनं श्रुत्वा सखीं प्रति भैम्या उक्तिरेषा 'भवत्या माध्यस्थ्यमेव कार्यमि'ति संदिशति। नलं प्रति दमयन्त्या अभिलाषसूचनेन प्रकरणमिदं रससंवलितं जातम्।

**व्रतौचित्यम्-**

**'काव्यार्थः साधुवादार्हः सद्व्रतौचित्यगौरवात्।**
**सन्तोषनिर्भरं भुक्त्या करोति जनमानसम्॥'** कारिका.29

व्रतौचित्येन प्रशंसनीयः काव्यार्थः सहृदयानाह्लादयति। यथा नैषध दमयन्ती मनसा नलमवृणोत्। तच्च नलवरणम् आनन्दाय एव न, तेन व्रतसिद्धिरपि भविष्यतीति तस्या दृढं मतम्-

'शुश्रूषिताहे तदहं तमेव पतिं मुदेऽपि व्रतसंपदेऽपि।'

व्रतसंपद्प्राप्तिः कथमित्यपि सा निरूपयति-

**वर्षेषु यद्भारतमार्यधुर्याः स्तुवन्ति गार्हस्थ्यमिवाश्रमेषु।**
**तत्रास्मि पत्युर्वरिवस्ययेह शर्मोर्मिकिर्मीरितधर्मलिप्सुः।। ( नै. 6/97 )**

नलसेवाव्रतेनाहं सुखं धर्मः देवमुदश्चेति त्रयमपि प्राप्स्यामीति तदेव मम कृते ज्यायः इति यदुक्तं दमयन्त्या, तेन व्रतौचित्यं सम्यक् प्रतिपादितम् श्रीहर्षेण काव्यार्थश्चानेन नितरां सुशोभते।

इत्थं नैषधीयचरिते प्रतिपदमौचित्यतत्त्वं परिदृश्यते। तेनैव काव्यमिदं रससिद्धं जातम्। अतएव कथयितुं शक्यते यत् रससिद्धये औचित्यतत्त्वस्य महती आवश्यकता वर्तते। एकस्मिन्नपि तत्त्वे यद्यनौचित्यमागच्छति तदा तु तत्र रसस्यैव हानिर्भवति।

# नैषधीयचरिते श्लेषविच्छित्तिः

**डॉ. राजकुमारमिश्रः**

अस्माकं संस्कृतपरम्परा आ ऋग्वेदादद्यापि निजानेकरूपैर्लोकहृदयं शनकैरावर्जयन्ती भविकवचोभिश्शिवेतरसम्भावनां तिलमितामपि समुन्मी-लयन्ती सुरधुनीव अक्षुण्णा प्रवहमाणा स्वमहनीयमहत्त्वैर्हरिचन्दनमिव शीतलयन्ती राजतेतराम्, इत्यत्र कस्य वा मतिमतो मतविरोधः? अस्यामेव विविधबुधकदम्बसेवनपरिवर्धितमरकतसन्निभोज्ज्वलपरम्परायां बभूव कश्चन अत्यन्तं प्रथितः प्रसरदप्रतिमप्रखरप्रातिभपाण्डितीकः स्वयमेव महसां महोज्ज्वलीभूतः कान्यकुब्जेश्वरात्तकर्पूरसुवासितताम्बूलोदात्तदाक्षिण्यदक्षिणो द्वादशशताब्द्यामवनिलब्धजनिः कविराजराजिमुकुटायमानः साहित्यकल्प-द्रुमायमानश्च प्रकर्षहर्षकरः श्रीहर्षनामा। यो हि प्रणिनाय विद्वदौषधायमानं नैषधीयचरितं नामललितं बृहत्त्रय्यामन्यतमं व्याकरणदर्शनसाहित्यादि-शास्त्रसङ्गमैकधारं महाकाव्यम्। अतः प्रकृतेऽस्मिन्नैषधीयचरिताख्यमहाकाव्ये विषयानुरोधत्वाच्छ्लेषालङ्कारविच्छित्तिः एवात्र अलङ्कारान्तरेषु बहुषु विद्यमानेष्वपि समासेन समुपन्यस्यते, विच्छित्तिपदस्यार्थः कथनभङ्गी, कथनसौन्दर्यं वेति प्रसिद्धिः। यथाऽऽह राजानककुन्तकः–

**कविव्यापारवक्रत्वप्रकाराः सम्भवन्ति षट्।**
**प्रत्येकं बहवो भेदास्तेषां विच्छित्तिशोभिनः[1]॥**

अस्यां वक्रताप्रकारविस्तारयित्र्यां कारिकायां प्रवर्तमानविच्छित्तिपदार्थं वृत्तिमाध्यमेन स्वयमेव राजानककुन्तकः स्फोरयति– **'विच्छित्तिशोभिनः वैचित्र्यभङ्गीभ्राजिष्णवः'** इति। श्लेषेण विच्छित्तिः श्लेषविच्छित्तिः, अर्थाद् यत्र श्लेषद्वारेण कथनसौन्दर्यं प्रस्तूयते सा श्लेषविच्छित्तिः। इत्थं विच्छित्तिपदार्थे

---

1. वक्रोक्तिजीवितम्, प्रकाशकं चौखम्भा संस्कृतसंस्थानं संस्करणं वि.सं. 2064 पृ. 62

विज्ञाते को नाम श्लेष इति जिज्ञासा समुदेति एतदर्थमिदानीं श्लेषलक्षणख्यापनमावश्यकमिति धिया तल्लक्षणमेव निरूप्यते।

**श्लेषलक्षणम्–**

भट्टमम्मटाचार्यः श्लेषं शब्दार्थाभ्यां द्वैविध्येन विभजमान आह– **वाच्यभेदेन भिन्ना यद् युगपद्भाषणस्पृशः। श्लिष्यन्ति शब्दाः श्लेषोऽसावक्षरादिभिरष्टधा**[1]॥ प्रस्तूयमानमम्मटलक्षणस्य तात्पर्यमिदं यद् वाच्यभेदेन (अर्थभेदेन) भिन्नाः शब्दाः (**प्रत्यर्थं शब्दा भिद्यन्ते** तथा च **सकृत्प्रयुक्तः शब्दः सकृदेव अर्थं गमयतीति नयेन**) युगपद्भाषणम् एकोच्चारणम्, लक्षणगतैकपदस्यार्थः:- **'कण्ठताल्वाद्यभिघातानुकूलयत्नो ज्ञेयः'**, तादृशं युगपद्भाषणं स्पृशन्तीति युगपद्भाषणस्पृशः, अर्थाद् एकोच्चारणविषयाः सन्तः यत् श्लिष्यन्ति भिन्नं स्वरूपमपह्नुवते (एकरूपतयेव भाषन्ते) स श्लेषनामा शब्दालङ्कारः। अर्थात् सकृत्प्रयुक्तः शब्दः सकृदेव अर्थं गमयतीति सिद्धान्तानुसारम् एकेन प्रयुक्तेन शब्देन एकार्थस्यैव बोधो जायते न च अर्थान्तरस्य, तथापि यत्र अर्थद्वयस्य बोध आवश्यकः स्यात् तत्र **"प्रत्यर्थं शब्दा भिद्यन्ते"** इति नयानुसारं पृथक् पृथक् पदप्रयोग आवश्यको भवति परञ्च कुत्रचिद् अर्थद्वयस्य बोधकः शब्दः समानाकारकः अथवा समानानुपूर्वीको जायते अस्यां स्थितौ समानाकारकवर्णस्योच्चारणं वारद्वयं न क्रियते अतस्तत्र शब्दश्लेषनामालङ्कारः। शब्दश्लेषालङ्कारे यौ द्वौ अर्थौ निर्गच्छतः तौ द्वावपि प्राकरणिकत्वात् अभिधाया एकस्मिन्नर्थे-ऽनियन्त्रितत्वाद् अभिधेयौ। इत्थं चासति एकोऽर्थः अभिधाव्यापार-प्रयोजकोऽपरश्च व्यञ्जनपाव्यापारस्य प्रयोजको जायताम्, अतः इत्थं स्वीकारे श्लेषालङ्कारोच्छेदप्रसङ्गः। पण्डितराजजगन्नाथोऽपि शब्दशक्तिमूलालङ्कार-ध्वनिनिरूपणप्रसङ्गे श्लेषं निरूपयन्नाह–**"श्लेषे द्वयोरर्थयोर्वाच्यकत्वम् एककालत्वं च"**[2]। भावोऽयं यत्र अभिधा प्रकरणादिहेतुभिः नियन्त्रिता न भवति तत्र जायमानम् अर्थद्वयम् अभिधाव्यापारबोध्यं, यत्र च प्रकरणादिसत्त्वाद्

---

1. काव्यप्रकाशः विश्वेश्वरी टीका, प्रकाशकः- ज्ञानमण्डललिमिटेड, षष्ठसंस्करणम् 1998
2. रसगङ्गाधरः, प्रकाशकः चौखम्बा विद्याभवनं, पुनर्मुद्रित संस्करणम्, पृष्ठ संख्या 84

एकार्थबोधानन्तरम्, अर्थान्तरस्य बोधो जायते तत्र व्यञ्जनावृत्त्याश्रयत्वम् अङ्गीकार्यमिति सिद्धान्तः श्लेषव्यञ्जनास्थलयोः वैलक्षण्ये। इत्थं सिद्धिपदवीमारूढोऽयं श्लेषालङ्कारः **वर्ण-पद-लिङ्ग-भाषा-प्रकृति-प्रत्यय-विभक्ति-वचन**भेदाद् अष्टधा। पृथक् पृथगर्थपर्यालोचने पृथक् पृथक् शब्दस्य प्रकृतिप्रत्ययादिभेदकारणात् शब्दश्लेषोऽयं सभङ्गश्लेषोऽभिधीयते आलङ्कारिकैः। पुनश्चार्थश्लेषो यथा– **श्लेषः स वाक्ये एकस्मिन् यत्रानेकार्थता भवेत्**[1] श्लेषालङ्कारस्यास्य महत्त्वं समुपबृंहयता त्रिविक्रमभट्टेन श्लेषालङ्कारदक्षता बाहुभ्यां जलधितरणसन्निभेति रूपेण प्रावोचि

**भङ्गश्लेषकथाबन्धं दुष्करं कुर्वता मया।**
**दुर्गस्तरीतुमारब्धो बाहुभ्याममम्भसां पतिः।।**[2]

सङ्गश्लेषोपनिबन्धनं दमयन्तीहंससंवादावसरे अत्यन्तं मनोहारि अकारि श्रीहर्षेण यथा–

**मनस्तु यं नोज्झति जातु यातु मनोरथः कण्ठपथं कथं सः?**
**का नाम बाला द्विजराजपाणिग्रहाभिलाषं कथयेदभिज्ञा।।**[3]

प्रस्तुतपद्यमाध्यमेन हंसात् नलेन सह स्वविवाहविषयकं प्रस्तावं निशम्य दमयन्ती सभङ्गश्लेषेण स्वशीलमर्यादां परिरक्षन्ती उत्तरति। अत्र **प्रथमोऽर्थश्चन्द्रपरको** यथा– अभिज्ञा का नाम बाला (या) द्विजराजपाणिग्रहाभिलाषं (साक्षात् स्वमुखात्) कथयेत्। अत्र द्विजराजपदं चन्द्रवाचकतामावहति यस्य विग्रहबलेनानुभूयमानसभङ्गश्लेषचमत्कारो यथा– द्विजराजस्य अर्थात् चन्द्रमसः पाणिः द्विजराजपाणिः, तेन ग्रहः द्विजराजपाणिग्रहः, तस्मिन् अभिलाषः द्विजराजपाणिग्रहाभिलाषः, तम्, का नाम अभिज्ञा बाला (स्वमुखात्) कथयेत् अर्थात् **"स्त्रीणां द्विगुणाहारो लज्जा चापि चतुर्गुणा"** इति प्रसिद्धसिद्धान्तत्वाद् न कापि। **द्वितीयोऽर्थो नलपरको** यथा– हे

---

1. काव्यप्रकाशः विश्वेश्वरी टीका, प्रकाशकः– ज्ञानमण्डललिमिटेड, षष्ठसंस्करणम् 1998
2. नैषधपरिशीलनम् डॉ. चण्डिकाप्रसादशुक्ल, हिन्दुस्तानी एकेडेमी प्रकाशनम् 1960
3. नैषधचरितम् आचार्य शेषराज शर्म 'रेग्मी' कृतटीका, प्रकाशकः चौखम्बा सुरभारती, संस्करणम् 2008

द्विज! हंस! का नाम अभिज्ञा बाला राज-पाणिग्रहाभिलाषं कथयेत्। अत्र द्विजराज इत्यस्मिन् पदे द्विजशब्दः पक्षिवाचको जायते राजपाणिः इत्यनेन नलपाणिरि-त्यर्थो गृह्यते सभङ्गश्लेषेण। **तृतीयोऽर्थो दमयन्तीपरको** यथा– हे द्विजराज! का नाम अभिज्ञा बाला (स्व) पाणिग्रहाभिलाषं (आत्मनैव) कथयेत्, मन्ये एतेन श्लेषमिषेण दमयन्ती स्त्रीविवाहविषये तदीयास्वातन्त्र्यं मुखरयति। पुनश्च

**इतीरिता पत्त्ररथेन तेन ह्रीणा च हृष्टा च बभाण भैमी।**
**चेतो नलङ्कामयते मदीयं नान्यत्र कुत्रापि च साभिलाषम्।।**[1]

पद्येऽस्मिन् श्लेषपराः त्रयोऽर्थाः शब्दशक्तिमहिम्ना वेद्यन्ते प्रथमः– 'चेतः नलं कामयते' द्वितीयः– 'चेतः न लङ्काम् अयते' तृतीयश्च– नलप्राप्त्यभावे वस्तुध्वनिनिर्गत–मरणाय दाहकर्मणे वा 'चेतः अनलं कामयते।' अत्र दमयन्ती **"पर्यङ्कतापन्नसरस्वदङ्कां लङ्कापुरीमप्यभिलाषि चित्तम्"**[2] इति हंसकृतवचनं निशम्य साधु स्त्रीसुलभलज्जाकारणात्स्ववैदुष्यबलेन– **"आश्लेषि न श्लेषकवेर्भवत्याः श्लोकद्वयार्थः सुधिया मया किम्"**[3] दमयन्तीमनोभावमवगच्छन् कथयेत् यत् तव चेतः नलं कामयते तर्हि दमयन्ती उत्तर्तुं शक्नुयात् यन्नहि भोः! मम चेतो नलं कामयते इति न प्रत्युत चेतः न लङ्काम् अयते। अत्रायं आस्वाद्यमानश्लेषचमत्कारः शब्दपरिवृत्त्यसहत्वाच्छब्दश्लेषमर्यादया सहृदयैरनुभूयते नान्यथा। यतोहि चेतो नलङ्कामयते अत्र कामयते इति स्थाने उत्कण्ठते, भजते, ईक्षते इति प्रयोगेण चमत्कारिता जायते इत्यस्मादत्र शब्दश्लेषविच्छित्तिः।

तदनु नलगुणख्यापनपरेण प्रस्तूयमानपद्येन नलम्प्रति दमयन्त्या मनसि प्रथमम् आकर्षणं वर्णयन् श्रीहर्षो यथा उज्जघटे–

---

1. नैषधचरितम् आचार्य शेषराज शर्म 'रेग्मी' कृतटीका, प्रकाशक: चौखम्बा सुरभारती, संस्करणम् 2008
2. नैषधचरितम् आचार्य शेषराज शर्म 'रेग्मी' कृतटीका, प्रकाशक: चौखम्बा सुरभारती, संस्करणम् 2008
3. नैषधचरितम् आचार्य शेषराज शर्म 'रेग्मी' कृतटीका, प्रकाशक: चौखम्बा सुरभारती, संस्करणम् 2008

**यथोह्यमानः खलु भोगभोजिना प्रसह्य वैराचनिजस्य पत्तनम्।**
**विदर्भजाया मदनस्तथा मनो नलाऽवरुद्धं वयसैव वेशितः॥**[1]

पद्येऽस्मिन् **"आदौ वाच्यः स्त्रिया रागः पुंसः पश्चात्तदिङ्गितैः"** इत्यलङ्कारनियमेन नले दमयन्त्याः पूर्वरागः प्रस्तुतो वर्तते। अत्रापि अर्थद्वयं शब्दश्लेषमहिम्ना वेद्यते **प्रथमोऽर्थोऽत्र मदनपरो द्वितीयश्च नलपरः** तत्राद्यो यथा– यथा भोगभोजिना सर्पशरीरभोक्त्रा, **"उरगः पन्नगो भोगी जिह्मगः पवनाशनः"** इत्यमरः इत्यत्र नारायणो ब्रूते– **'भोजभोजिना' इति पाठे भोगिनः सर्पान्, भोगयुक्तान्विलासिनश्चेति** अर्थाद् भोगं सर्पशरीरं भुङ्क्ते एवंशीलस्तेन। वयसा एव पक्षिणा एव, सर्पभोजी पक्षी गरुडो भवतीति प्रसिद्धित्वात् वयसेति पदेन गरुडेनेत्यर्थो गृह्यते। ऊहमानः प्राप्यमाणः, ऊह्यमानपदमिदं वह् धातोः कर्मणि शानचप्रत्ययेन निष्पद्यते। मदनः कामः प्रद्युम्नो वा, अनलावरुद्धं अग्निपरिवृतं, अनलेन अवरुद्धं व्याप्तं वेति, वैरोचनिजस्य बाणासुरस्य, पतनं नगरं, प्रसह्य बलेन, खलु निश्चयेन, वेशितः प्रवेशितः। तथा **दमयन्तीतारुण्यपक्षे**– भोगभोजिना सुखाऽनुभविना, भोगं सुखं भुङ्क्ते भोजयति वा तच्छीलेन, अथवा भोजः अस्य अस्तीति भोजि, भोगस्य सुखस्य भोजी भोगभोजी, तेन भोजभोजिना, वयसा एव अवस्थया एव, ऊह्यमानः प्रतर्क्यमाणः, ऊह्यमानपदम् ऊह धातोः कर्मणि शानच् प्रत्ययेन निष्पद्यते। मदनः कामः, नलावरुद्धं नलेन अवरुद्धं सम्बद्धं, विदर्भजायाः विदर्भाद् जायते इति विदर्भजा, तस्याः विदर्भजायाः, मनः चित्तं, प्रसह्य बलेन, खलु वेशितः निश्चयेन प्रवेशितः। अर्थाद् यथा गरुणेन पक्षिणा प्राप्यमाणो मदनः बाणासुरस्य अनलपरिव्याप्तं नगरं प्रापितः, तथैव सुखानुभाविना अवस्थया (सखीभिः) प्रतर्क्यमाणः कामः विदर्भजायाः नलावरुद्धं नलचिन्तापरं मनः प्रसह्य वेशितः खलु। अत्र श्लेषमूलकोपमा। मनो नलावरुद्धमिति पदे सभङ्गश्लेषत्वात् शब्दश्लेषालङ्कारः। ऊह्यमानः, भोगभोजिना, वयसा इत्यत्र अभङ्गश्लेषत्वाद् अर्थालङ्कारः। पुनश्चापरोऽपि प्रसङ्गो वर्तते यथा–

---

1. नैषधचरितम् आचार्य शेषराज शर्म 'रेग्मी' कृतटीका, प्रकाशकः चौखम्बा सुरभारती, संस्करणम् 2008

**अस्यां मुनीनामपि मोहमूचे भृगुर्महान् यत्कुचशैलशीली।**
**नानारदाह्लादि मुखं श्रितोरुर्व्यासो महाभारतसर्गतोयः।।**[1]

**अन्वयः–** अस्यां मुनीनाम् अपि मोहम् ऊहे, यत् महान् भृगुः यत्कुचशैलशीली, मुखम् अनारदाह्लादि न (पक्षे) नानारदाह्लादि, महाभारत-सर्गतुल्यः, व्यासः श्रितोरुः, पक्षे महाभारतसर्गयोग्यः व्यासः श्रितोरुः।

प्रस्तुतपद्येऽस्मिन् मनोविनोदनपरः श्लेषालङ्कारः। एकोऽर्थो मुनीनां पक्षे अपरश्च दमयन्तीसौन्दर्यार्थे घटते। **मुनिपक्षे** यथा– अस्यां शकुन्तलायां मुनीनामपि मोहम् आसक्तिं मदनविकारम् ऊहे तर्कयामि। कुतः यत् यस्मात्, महान् भृगुः विशिष्टः भृगुनामको मुनिः, यत्कुचशैलशीली यस्याः कुचौ यत्कुचौ, तौ एव शैलौ (रूपकम्) यत्कुचशैलौ, तौ शीलयतीति तच्छीलः, दमयन्तीस्तनपर्वताश्रयीत्यर्थः। मुनीनां तपस्यायै पर्वताश्रयाभ्यासात् पर्वतबुद्ध्या भृगुः दमयन्तीस्तनपर्वताश्रयीत्यर्थः। मुनीनां तपस्यायै पर्वताश्रयाभ्यासात् पर्वतबुद्ध्या भृगुः दमयन्तीकुचाश्रयं करोतीति भावः अथवा सुन्दरे पर्वते एव मुनीनां तपश्चर्याभ्यासाद् पर्वतबुद्ध्या भृगुः दमयन्तीसुन्दरकुचाश्रयं करोतीति भावः। मुखं दमयन्तीवदनम्, अनारदाह्लादि नारदमाह्लादयतीति नारदाह्लादि, न नारदाह्लादि अनारदाह्लादि, न अपितु नारदाह्लादि एव, प्रयुक्तस्य नञ्द्वयस्य विधिसमर्थकत्वात्। महाभारतसर्गयोग्यः महाभारतस्य सर्गः निर्माणं तस्मिन् योग्यः समर्थ इति, व्यासः कृष्णद्वैपायनः, श्रितोरुः श्रितः आश्रितः उरुः येन सः तथाभूतो व्यासः इत्यर्थः अर्थात् कदलीस्तम्भच्छायाबुद्ध्या दमयन्त्या ऊरू आश्रित्य व्यासः तिष्ठतीति भावः। **दमयन्ती-सौन्दर्यपक्षे** यथा– महान् अधिकः, भृगुः अतटः, प्रपातो वा। यत्कुचशैलशीली दमयन्त्याः कुचपर्वतपरिचयशीलः, अर्थाद् दमयन्ती-कुचयोः पार्श्वभागः प्रपाततुल्यः इति भावः शैलपदमत्र स्वभाववाचकतां प्रतिपद्यते। नानारदाह्लादि आह्लादः अस्य अस्तीति आह्लादि, नानारदैः अनेकदन्तैर्वा, आह्लादि नानारदाह्लादि। महाभारतसर्गतुल्यः– महाऽऽभाः–

---

1. नैषधचरितम् आचार्य शेषराज शर्म 'रेग्मी' कृतटीका, प्रकाशकः चौखम्बा सुरभारती, संस्करणम् 2008

महाप्रज्ञः, रतसर्गयोग्यः– सुरतनिर्माणयोग्यः, एवंविधो व्यासःविस्तारः, श्रितोरुः– श्रितौ ऊरू येन सः। प्रस्तुतपद्ये भृगुशैलपदयोः अभङ्गश्लेषः तथा च नानारदाह्लादिमहाभारतसर्गयोग्यपदयोः सभङ्गश्लेषविच्छित्तिर्वर्तते।

पुनश्च दमयन्तीस्वयम्वरावसरे भगवती सरस्वती पञ्च नलान् इन्द्राग्नियमवरुणनलान् दमयन्तीं प्रति श्लेषविधिना परिचाययन्ती यद् ब्रूते तदपि अत्यन्तं मनोहारि। यथा–

**देवः पतिर्विदुषि! नैष धराजगत्या**
**निर्णीयते न किमु न व्रियते भवत्या।**
**नायं नलः खलु तवातिमहानलाभो**
**यद्येनमुज्झसि वरः कतरः परस्ते।।**[1]

एतस्य पद्यस्य पञ्च अर्थाः भवन्ति ते च यथाक्रममुपस्थाप्यन्ते

**इन्द्रपक्षे यथा–**

**अन्वयः–** हे विदुषि! एष देवः धराजगत्याः पति न, भवत्या किमु न निर्णीयते, न व्रियते। अयं खलु नलो न, (अयम्) तव नलाभः (यतः) अतिमहाः यदि एनम् (अ विष्णुः इनं ज्येष्ठभातरम्) उज्झसि, ते परः कतरः वरः।

**व्याख्या–** हे विदुषि! =श्लेषोक्तिज्ञानपरायणे भैमि!, एष=पुरोवर्ती देवः, धराजगत्या=पृथ्वीलोकस्य, पतिः न=स्वामी पालयिता वा न, (अपितु साक्षाद् इन्द्रः)। भवत्या=त्वया दमयन्त्या, किमु न निर्णीयते=किमिति न निश्चीयते, अपितु निश्चेय एव। न व्रियते=न वरणं क्रियते, किमु पदं देहलीदीपकन्यायेनात्रापि अनुषज्यते, अपितु वरणीय एव। अयं खलु=पुरोवर्तमानो हि, नलो न=नलाख्यो नृपो न, तव=दमयन्त्या, नलाभः=नल इव आभा यस्य सः, अर्थाद् नलसदृशः कान्तिमान्, अतिमहाः=अतितेजस्वी, देवराट् इन्द्रः (वर्तते)। (यदि) एनम् अ नाम विष्णुः, इनः नाम ज्येष्ठः, अर्थाद् अस्य इनः एनः तम् एनं ज्येष्ठभातरम् इन्द्रम् इत्यर्थः, उज्झसि=त्यजसि, (तर्हि) ते परः कतरः वरः स्यात्, अर्थात् कोऽपि न स्यादिति भावः।

---

1. नैषधचरितं नारायणरामकृतटीका, प्रकाशकः चौखम्बा विद्याभवनं, संस्करणम् 1998

**अग्निपक्षे यथा–**

**अन्वयः–** हे विदुषि! धराजगत्याः पतिः एष देवः भवत्या न निर्णीयते (इति) न (तर्हि) किमु न व्रियते अयं खलु तव नलो न (अपितु) अति महानलाभः यदि एनम् उज्झसि ते परः कतरः वरः।

**व्याख्या–** हे विदुषि! =श्लेषज्ञाननिपुणे, धराजगत्या=धरतीति धरः वाहनमित्यर्थः, धरः वाहनम् अजः यस्य स धराजः वह्निरित्यर्थः स एव गतिः शरणं यस्याः आग्नेय्या दिशः **"इन्द्रो वह्निः पितृपतिनैर्ऋतो वरुणो मरुत् कुबेर ईशः पतयः पूर्वादीनां दिशां क्रमात्"** इत्यमरः, धराजगत्याः, अत्र सभङ्गश्लेषः। पतिः रक्षकः एषः पुरोवर्तमानः, देवः अग्निः भवत्या न निर्णीयते त्वया न निश्चीयते, निर्णीतो नाम किमु न व्रियते?। यदि अयमग्निः तर्हि नल इव कथं भातीति कारणाद् उच्यते यद् अयं खलु तव नलो न, अपितु अति महानलाभः महान् चासौ अनलः च महानलः, महानलः इव आभा यस्य सः महानलाभः अर्थाद् नल इव आभावानयं वह्निः न च तव नलः अत्रापि सभङ्गश्लेषः। यदि एनम् उज्झसि (तर्हि) ते परः कतरः वरः? स्यादर्थात् कोऽपि न, तस्माद् एनं वृणीष्वेत्यर्थः।

**यमपक्षे यथा–**

**अन्व्यः–** हे विदुषि!, एष धरा जगत्या पतिः देवः न निर्णीयते (इति) न (परं किमु न व्रियते। अयं खलु नलो न यदि एनम् उज्झसि (तदा) तव अति महानलाभः ते परः वरः कतरः।

**व्याख्या–** हे विदुषि! धरान् पर्वतान् अङ्गाभ्यां खुरैर्वा अजति क्षिपति वेति धराजो महिषः इत्यर्थः, तेन कृता या गतिः धराजगतिः तयोपलक्षितः धर्मरूपत्वात् पतिः पालयिता देवः अमरो यमो न निर्णीयते इति न, निर्णीयते चेत्, कथं न व्रियते, अपित्वयं यमत्वेन निर्णेयो वरणीयश्चेत्यर्थः। (धर्मरूपत्वात्) अयं खलु नलो गहनो न, (अपितु वक्रोक्त्या गहन एव) अत्र नलपदस्यार्थः गहनः 'नल गहन' इत्यस्य पचाद्यचि रूपम्। यदि एनम् उज्झसि तर्हि तव अतिमहानलाभः– न लाभः

अलाभः, अतिमहान् चासौ अलाभश्चेति महानलाभः अर्थात् तव महती हानिर्भविता। इत्थं ते परः वरः कतरः।

**वरुणपक्षे**– हे विदुषि! एष धराजगत्या पतिर्न देवः भवत्या किमु न निर्णीयते, न व्रियते, अतिमहानलाभः अयं खलु नलो न। यदि एनम् उज्झसि (तदा) ते वरः कः परः?

**व्याख्या**– हे विदुषि! एष – पुरोवर्तमानः, धराजगत्या- धरायां जायन्ते धराजानि स्थावरजङ्गमानि भूतानि तेषां गतिर्जीवनोपायः जलं वेति धरा-ज-गतिः, तस्याः पतिः न, अपितु अपाम्पतिर्वरुणो देवः, तादृशः वरुणाख्यदेवो भवत्या न निर्णीयते अत एव न व्रियते (तर्हि) अतिमहानलाभः- भातीति भा, न भा अभा, अतिमहतः, अतिपूज्यस्य वा अनलस्य अीाा कान्त्यभावः इति अतिमहानलाभः, वरुणो हि जलरूपत्वादग्निविरोधीत्यर्थः। अयं खलु नलो न। यदि एनम् उज्झसि (तदा) ते वरः-श्रेष्ठः कः परः-शत्रुः अपितु अयमेव शत्रुरित्यर्थः। परः इति पदे अभङ्गश्लेषः।

**नलपक्षे**– हे विदुषि!, अयं नैषधराजगत्या पतिः देवः ना किमु न निर्णीयते (किमु वा) न व्रियते। खलु तव अति महानलाभः, यदि एनम् उज्झसि (तर्हि) ते कतरः वरः परः (अधिकः)

**व्याख्या**– हे विदुषि! अयं पुरोवर्तमानः, नैषधराजगत्या- नैषधनामदेशस्य राज्ञः, निषधदेशोद्भवानां लोकानां यो राजा तस्य वा, गत्या ज्ञानेन कृत्वा पतिः स्वामी, देवः राजा, अत्र देवपदस्याभिधा संयोगाद्यभिधा-नियामकहेतुषु प्रकरणाख्यहेतुना राजरूपार्थे नियमयतीति विशेषः। ना मनुष्यः, किमु न निर्णीयते, (किमु वा) न व्रियते। खलु तव अति महानलाभः- अ विष्णुः, तस्य लाभः अलाभः (**'अ'** पदमत्र विष्णुवाचकम् **अकारो वासुदेवः स्याद**िति कारणात् षष्ठी विभक्तेः एकवचनस्य रूपम्) अतिमहान् चासौ अलाभ इति अतिमहानलाभः, अर्थात् तव नलवरणेन साक्षाद् विष्णुलाभः। यदि एनम् उज्झसि (तर्हि) ते कतरः वरः परः अर्थात् कोपि न। नैषधटीकाकारो नारायणरामेण 'काव्यतीर्थेण' नैषधराजगत्या इतीदं पदमादाय बहवोऽर्थाः अकारिषत यथा– **एष धरा-जगत्या भूलोकस्य वा पतिः स्वामी ना मनुष्यो नलो देवो राजा न, अपि तु नल एवेति।** पुनश्च

**नैषधराज एव गतिर्यस्यास्तया भवत्या मनुष्योऽयं नलो राजा पतिः किं निश्चीयते किं वा न व्रियते,** भूयोऽपि **धरायां जायन्ते धराजा मनुष्यास्तेषां गत्या प्रकारेण सनिमेषनेत्रत्वादिलिङ्गेन एष देवो नेति किमु न निर्णीयते**[1] इत्थं निखिलेऽपि नैषधीयचरिते श्लेषालङ्कारच्छटा भूम्ना प्रवहतीत्यलं पल्लवितेन किञ्च–

**श्लेषहारादिभिर्यद्वपुर्भूषयन्-**
**व्यरीतिं च नीतिं समावर्धयत्।**
**स्वान्तमान्दोलयद् भा - रते**
**भारते नैषधीयं महाकाव्यमाराजते।।**[2]

---

1. नैषधचरितं नारायणरामकृतटीका, प्रकाशकः चौखम्बा विद्याभवनं, संस्करणम् 1998
2. लेखकविरचितम्।

# नैषधीयचरिते पदप्रयोगविज्ञानम्

प्रो. व्रजकिशोरनायकः

खीष्टीयद्वादशशताब्द्याः शेषभागे लब्धजन्मनः स्वीयप्रखरकविप्रतिभया परां प्रसिद्धिमधिगतस्य कान्यकुब्जाधीश्वरविजयचन्द्रजयचन्द्रपण्डितसभायां प्रतिष्ठापितात्मवैपश्चितीविलासस्य शास्त्रार्णवमन्दरायमाणस्य स्थैर्यविचारण-प्रकरण-विजयप्रशस्तिखण्डनखण्डखाद्य-गौडोर्वीशकुलप्रशस्ति-अर्णववर्णन-च्छिन्दप्रशस्ति-शिवशक्तिसिद्धि-नवसाहसाङ्कचरितचम्पू-नैषधीयचरिताद्यनेक-ग्रन्थरत्ननिर्मातुः चिन्तामणिमन्त्रजपाल्लब्धासीमकवित्वशक्तिकस्य योगिप्रवरस्य श्रीहीरमामल्लदेवीसूनोः कलाभावपक्षयोरनितरसाधारणशिल्पिनो महाकवेः श्रीहर्षस्य पदप्रयोगविज्ञानमुपजीव्य किञ्चिदत्र प्रस्तोतुमुत्सहे। सुमहत्यस्मिन् सुरभारतीमहाकाव्यगगने नैषधीयचरिताख्यस्य चन्द्रमसः शीतल- मयूखस्पर्शादेव सर्वे पाठकाः परमानन्दसन्दोहमधिगच्छन्नः श्रीहर्षस्य नैसर्गिकीं काव्यप्रतिभामनन्यां भूयोभूयः प्रशंसन्तीनि विदन्त्येव विपश्चिदपश्चिमाः। पञ्चमहाकाव्येष्वन्यतमस्य 2828 संख्याकश्लोकसंवलितस्य द्वाविंशतिसर्ग-विशिष्टस्य हरविजयात् परं सुबृहन्महाकाव्यस्य प्रायशः 40,000 संख्याक-पदनिचयविजृम्भितस्यानुभवाध्ययनचिन्तनादिभिः सर्वथा गम्भीरत्वादुच्चैः स्थानं प्राप्तवतोऽस्य महाकाव्यस्याधुनापि पौनःपुन्येन परिशीलनं सर्वथा प्रसङ्गमावहतीति आस्माकीना मनीषा।

तत्र "एकः शब्दः सुप्रयुक्तः सम्यग्ज्ञातः स्वर्गे लोके च कामधुग् भवती''ति महाभाष्यकारपतञ्जलिवचनात्।

**"तया वनितया किं वा तया कवितया पुनः।**
**पदविन्यासमात्रेण यया नापहृतं मनः॥"**

इत्यभियुक्तानां वचनात्

"ईष्टार्थव्यवच्छिन्ना पदावली काव्यम्" "वाक्यं रसात्मकं काव्यम्" "रमणीयार्थप्रतिपादक: शब्द: काव्यम्" इति प्राचां वामन-विश्वनाथ-पण्डितराजजगन्नाथादीनां काव्यतत्त्वमीमांसकानां काव्यलक्षणपरिशीलनाच्च पदप्रयोगस्य विशेषता काव्येऽवश्यमेवाङ्गीकरणीया।[1] पदप्रयोग इत्युक्तौ न यादृच्छिकपदप्रयोग: अपितु पदप्रयोगविशेष: इत्यवगन्तव्यम्। पदप्रयोगविशेषात् हि रीति: समायाति काचन या खलु काव्यात्मेति वामनस्य राद्धान्त:। तर्हि तथाभूतस्य पदप्रयोगस्य विज्ञानं किमिति तदपि मार्गणीयमेव। वयन्तु इत्थं चिन्तयामो यत् यथा वेदान्तशास्त्रे कथितमस्ति यस्मिन् विज्ञाते सर्वं विज्ञातं भवति तत् खलु ब्रह्म तथैव पदप्रयोगविज्ञानेन निखिलमेव काव्यसौन्दर्यं विज्ञातं भवतीति आस्माकीना मनीषा। पदप्रयोगविज्ञानं नाम कला वा कौशलं वा चातुर्यं वा। तदिदं पदप्रयोगविज्ञानमखण्डोपाधि: जातिविशेषो वा इत्यपि वक्तुं शक्यते। सा पदप्रयोगकला महाकवीनां केषाञ्चिद् वर्त्तत एव। पदप्रयोगकलां विना महाकवे: महाकवित्वं प्रतिष्ठितं नैव भवति। सेयं पदप्रयोगकला यस्य कवे: समधिका वर्त्तते स खलु कवि: सर्वमान्यो भवति। केवलं पदमात्रज्ञानेनैव कवे: कवित्वसिद्धिर्न जायते। अभीष्ट-भावानुसारेण तदुचितपदप्रयोगविज्ञानं यदि कवे: सम्यगस्ति तर्हि नूनमेव तत्कविता सहृदयहृदयग्राहिणी भवति। समुचितपदप्रयोगादेव काव्यस्य गाम्भीर्यं सौन्दर्यञ्चानुपममनुभवन्ति सामाजिका:। भगवती सरस्वती स्वयमेव समुपस्थाय यथेष्टं पदप्रयोगं घटयतीति ध्वनिकृतानन्दवर्धनेन प्रत्यपादि।

तथाभूता: पदप्रयोगविज्ञानिन: कालिदासश्रीहर्षप्रमुखा द्वित्रा: पञ्चषा वा महाकवयो वर्त्तन्ते येषां खलु पदप्रयोगविज्ञानं सुमहदनुभूयते। प्रातिपाक्ष्यभावानुसारेणाभीष्टपदप्रयोगादेव अलङ्कारादय: अहमहमिकया परापतन्ति रसाश्चास्वाद्यन्ते। तत्र प्रत्येकं पदस्य प्रयोगे किमपि सौन्दर्यमान्त: चमत्कारि समुल्लासितं स्यादिति कवि: पौन:पुन्येन चिन्तयन् दृश्यते।

तस्मादनुभावविभावादीनां वर्णना काव्यमिति, प्राचीना यदाहु: तदेव पदप्रयोगसाध्यं भवति। किञ्च विशिष्टौ शब्दार्थौ काव्यमिति यदुक्तमस्ति

---

1. सरस्वत्येवैषा घटयति यथेष्टं भगवती।।ध्वन्यालोके 4/121

तदपि पदप्रयोगविज्ञानसाध्यमेव पदप्रयोगविज्ञानं विना शब्दार्थयोः कथमपि विशेषता नायास्यतीति निश्चप्रचम्। यावन्ति काव्यलक्षणानि पुरतोऽस्माकं भान्ति तावतां समेषामेव काव्यलक्षणानां मूलं स्रोतः खल्विदं पदप्रयोगविज्ञानम्। समुचितपदप्रयोगादेव गुणालङ्काराणां स्थितिः दोषाणाञ्चास्थितिः सम्भवति। यत्र यथाविधपदप्रयोगोऽनिवार्यस्तत्र तथाविधपदप्रयोगोऽवश्यं विधातव्यः। तथा सति काव्यसौन्दर्यं समुल्लसत् सामाजिकहृदयमुतफुल्लितं सम्पादयति। श्रीहर्षेण महाकविना नैषधीयचरिते यानि पदरत्नानि यत्र यत्र प्रयुक्तानि तस्मादेकमपि परिवर्त्त्य तत्स्थाने पदान्तरं प्रयोक्तुं न शक्यम्। तथा सति काव्यसौन्दर्यहानिः स्यादेव। तथाहि–नैषधस्य प्रथमश्लोके वर्त्तमानस्य "निपीय" इति पदस्य स्थाने यदि "निपाय" इति क्रियेत तर्हि न छन्दोभङ्गः न चार्थे काप्यसङ्गतिर्जायेत। परन्तु अनुप्रासाख्यकाव्यसौन्दर्यहानिः स्यादेव।

तथैव "न बुधाः सुधामपि" इत्यत्र "कवयो न चामृतम्" इति करणीये अनुप्रासभङ्गो भवेत्। "कीर्त्तिमण्डलः" इति स्थाने "कीर्त्तिसञ्चयः" यदि क्रियेत तथैवानुप्रासभङ्गो भवेत्। नैषधीयचरिते आमूलचूलं साम्राज्य-मनुपासस्यैव विस्तृतं वर्त्तते। तस्माद् यदि पदपरिवर्त्तनं कृत्वा तदर्थकपदान्तरं नियोज्येत तर्हि अनुप्रासाख्यस्य काव्यसौन्दर्यस्य भङ्गो भवेत्। न केवलमत्र पद्येऽनुप्रासभङ्गोऽपितु निखिले नैषधीये यावन्ति पद्यानि सन्ति सर्वत्रानुप्रासो नश्येत्। न केवलमनुप्रासभङ्गोऽपितु अर्थस्वारस्यभङ्गो भवेत्। तथाहि–

"मदेकपुत्रा जननी जरातुरा" इत्यत्र पद्ये यानि विशेषणपदानि कविना प्रयुक्तानि तानि सन्ति साभिप्रायाणि। तस्मादत्र परिकरालङ्कारो विजृम्भते। तेषां विशेषणपदानां परिवर्त्तनेन परिकरालङ्कारभङ्गो भवेत्। पद्येऽत्र मातुर्मे पुत्रान्तरोत्पत्तिसामर्थ्यं नास्ति इति "जरातुरा" इति पदप्रयोगाज् ज्ञायते। हंस्या मे धर्मपत्न्याः पत्यन्तरग्रहणं न सम्भवेत् "तपस्विनीति" पदप्रयोगाज् ज्ञायते। न केवलमत्र श्लोके अपितु महाकाव्येऽत्र।

**"रथैरथायुकुलजाः कुमाराः शस्त्रेषु शास्त्रेषु च लब्धपाराः।**
**स्वयंवरं सम्बरवैरिकायव्यूहश्रियश्रीजितयक्षराजाः।"** नैषधीये 10-1

इत्यादिषु श्लोकेषु यत्र यत्र परिकरालङ्कारसौन्दर्यमनुभूयते तत्र तत्र तदुच्छेदो भवेदेव।

अपि च,

**अमित्रजिन्मित्रजिदौजसा स यद्**
**विचारदृक्चारदृगप्यवर्त्तत।** 1-13

**यन्त्रस्थसिद्धार्थपदाभिषेकं लब्ध्वाप्यसिद्धार्थममन्यत स्वम्।**
10-6

इत्यादिषु श्लोकेषु यो हि विरोधाभासोऽलङ्कारः शोभते तन्न स्यात्।

अपि च,

**"अधिगत्य जगत्यधीश्वरादथ मुक्तिं पुरुषोत्तमात् ततः।**
**वचसामपि गोचरो न यः स तमानन्दमविन्दत द्विजः॥"**
नैषधीये-2-1

इत्यत्र **"अधिगत्य नृपान् महीयसः खलु मुक्तिं पुरुषोत्तमात् ततः।"** इति परिवर्त्तने क्रियमाणे द्वितीयार्थस्य जगन्नाथविषयकस्य बोधो न स्यादिति महत्यनर्थपरम्पराआपद्येत। न केवलमत्र श्लोके, अपि तु–

**"क नाम बाला द्विजराजपाणि-**
**ग्रहाभिलाषं कथयेदलज्जा।"** नैषध 3-58

**"चेतोऽनलं कामयते मदीयं**
**नान्यत्र कुत्रापि च साभिलाषम्"** नैषध 3-67

**"स्थितिशालिसमस्तवर्णनां**
**न कथं चित्रमयी बिभर्त्तु या।"** नैषध 2-98

**"क्रियेत चेत् साधुविभक्तिचिन्ता**
**व्यक्तिस्तदा सा प्रथमाऽभिधेया॥"** नैषध 3-23

**"देवः पतिर्विदुषि नैषधराजगत्या**
**निर्णीयते न किमु न व्रियते भवत्या"** नैषध 13-24

**"अत्याजिलब्धविजयप्रसरस्त्वया किं**
**विज्ञायते रुचिपदं न महीं महेन्द्रः॥"** नैषध 13-28

**"यच्चण्डिमारणविधिव्यसनं च तत्त्वं**
**बुद्ध्वाशयाश्रितममुष्य च दक्षिणत्वम्॥"** नैषध 13-30

**"येनाऽमुना बहुविगाढसुरेश्वराध्व-**
**राज्याभिषेक विकसन् महसा बभूषे॥"** 13-29

**किं ते तथा मतिरमुष्य यथाशयः स्यात्**
**त्वत्पाणिपीडनविनिर्मितये न पाशः॥** 13-31

इत्यादीनि पद्यरत्नानि श्लेषालंकारविरहितानि भवेयुः। न केवलं श्लेषालंकारोच्छेदः अपि तु अन्येषामलङ्काराणामपि उच्छेदो भवेदेव।

अपि तु छन्दोऽनुरोधादेव पदप्रयोगो विधातव्यो न यदृच्छयेति मन्तव्यम्। यस्य छन्दसः कृते यत्र पदमनुगुणं भवितव्यं तदेव प्रयोक्तव्यं नान्यत्। महाकाव्येऽत्र-अनुष्टुप्-उपजाति-वंशस्थविल-वसन्ततिलक-दोधक-स्वागता-द्रुतविलम्बित-रथोद्धता-शार्दूल विक्रीडित-स्रग्धरा-शिखरिणीप्रभृतीनि 19 संख्याकानि गणच्छन्दांसि व्यवहृतानि। रसभावानुगुण्येन समुचितच्छन्दः प्रयोगादेव काव्ये मधुरिम्णः स्वादोऽनुभूयते।

किञ्च नैषधीयचरितं शास्त्रकाव्यमित्युच्यते। महाकाव्यमिदं शास्त्राणां समेषामाकरभूतमिति संख्यावतां समेषामनुभवोऽस्ति।

दशमसर्गस्य सरस्वतीवर्णनाप्रसङ्गे द्वितीयसर्गे दमयन्तीवर्णनाप्रसङ्गे सप्तदशसर्गे अन्यत्र च भारतीयदर्शनशास्त्राणां भव्यं वर्णनं दृश्यते।

**भङ्क्तुं प्रभुर्व्याकरणस्य दर्पं**
**पदप्रयोगाध्वनि लोक एषः।**
**शशो यदस्यास्ति शशी ततोऽय-**
**मेवं मृगोऽस्यास्ति मृगीति नोक्तः॥** 22-82

**स्वं नैषधादेशमहो वियाय**
**कार्यस्य हेतोरपि नानलः सन्।**
**किं स्थानिवद्भावमधत्त दुष्टं**
**तादृक्कृतव्याकरणः**

इत्यादिषु श्लोकेषु व्याकरणशास्त्रस्यापि रमणीयं वर्णनं दृश्यते। एतद्वर्णनस्यपि मूलं पदप्रयोगविज्ञानमिति ब्रूमहे।

अपि च पदप्रयोगविज्ञानात् काव्ये पदलालित्यं समागच्छति। नैषधकाव्ये बहुत्र यथा–

**नवा लता गन्धवहेन चुम्बिता**
**करम्बिताङ्गी मकरन्दशीकरैः।**
**दृशा नृपेण स्मितशोभिकुड्मला**
**दरादराभ्यां दरकम्पिनी पपे॥** 1-85

**तत्रावनीन्द्रचयचन्दन चन्द्रलेप-**
**नेपथ्य गन्धवहगन्धवहप्रवाहम्।**
**आलीभिरापनदनङ्गशरानुसारी**
**संरुध्य सौरभमगाहत भृङ्गवर्गः॥** 11-5

इत्यादिषु श्लोकेषु यत् खलु पदलालित्यं दृश्यते एतस्यापि निदानं पदप्रयोगविज्ञानमेवेति विदां कुर्वन्तु सुधियः।

तस्मात् **"उपमा कालिदासस्य भारवेरर्थगौरवम्।**
**नैषधे पदलालित्यं माघे सन्ति त्रयो गुणाः॥"**

इति प्राचामुक्तिर्याऽस्ति सा संगच्छते।

अपि च नैषधं विद्वदौषधमिति यदस्ति समीक्षकाणां वचनं तस्यापि निदानमिदं पदप्रयोगविज्ञानमेवेति चिन्तयामः। यथा औषधसेवनमात्रेणैव तत्चमत्कारो गुणो वाऽनुभूयते तथा नैषधीयचरिताध्ययनमात्रेणैव तच्चमत्कार-मनुभवन्ति सहृदयाः। चमत्कारो हि काव्यसौन्दर्यनिष्ठः। काव्यसौन्दर्यञ्च पदप्रयोगनिष्ठम्।

अपि च "कलासीमा काव्यम्" इत्यभियुक्तानां वचनमपि पदप्रयोग-विज्ञानगर्भकमेवेति प्रतीमः। तत्र चतुःषष्टिसंख्याकासु कलासु काव्यविरचनं तावत् सर्वोत्तमा कलेति विदुषामनुभवः। पदप्रयोगविज्ञाननिष्ठा सा कला क्रमशः समुत्कृष्टा जायते। यावन्ति महाकाव्यानि पुरतोऽस्माकं दृश्यन्ते नैषधीयचरितस्य निर्मातुः श्रीहर्षस्य काव्यविरचनकला स्वतन्त्रा विलक्षणा

चेति। एतस्याः मूलः स्रोतः पदप्रयोगविज्ञानमेव। किञ्च वस्तु रसभावानुगुण्ये न कुत्र समस्तानां पदानां कुत्र चासमस्तपदार्ना यः प्रयोगो विहितः स सर्वथा यथार्थ एव।

इत्थं नानाबिन्दुभिः नैषधीयचरिते पदप्रयोगविज्ञानमिति शीर्षक विचार्रायतुं शक्यते।

**इति दिक्।**

# नैषधीयचरिते बिम्बविधानम्

डॉ. भारतभूषण रथः

**उपक्रमः**

श्रीहर्षप्रणीतं नैषधीयचरितम् एकाधारेण शास्त्रतत्त्वं सौन्दर्यतत्त्वञ्च प्रतिपाद्य विदुषां जिह्वाग्रभूषणरूपं धारयति। स्वयं नैषधकारः महाकाव्यस्यास्य प्रशंसायां कथयति—

**यत्काव्यं मधुवर्षि धर्षितपरास्तर्केषु यस्योक्तयः।**
**श्रीश्रीहर्षकवेः कृतिः कृतिमुदे तस्याभ्युदीयादियम्।।**

नै.च–22.153

साहित्यं नाम मानवजीवनसौन्दर्यतत्त्वम्। सौन्दर्यस्य रूपायनं यदि सरसकाव्यमाध्यमेन भवति तर्हि तत् काव्यं हृदयाह्लादकं भवति। तत्र संस्कृतसाहित्यस्य प्रसिद्धेषु पञ्चमहाकाव्येषु नैषधीयचरितं सर्वोत्तम-स्थानमावहति। तदर्थं कारणं भवति श्रीहर्षस्य काव्यपटुत्वम्। सौन्दर्यस्य सुष्ठु प्रतिपादकः अयं निपुणः कविः। रसानामाह्लादकतां, गुणानां शब्दार्थविन्यासं अलंकाराणाञ्च मनोहरतां स्वकीये काव्यकदम्बे संयोजयति, स च शब्दार्थयोः साहचर्येण छायायाः सर्वोत्कृष्टं मण्डनमपि विदधाति। सा छाया आधुनिकैः बिम्बमिति कथ्यते।

**बिम्बस्वरूपम्—**

कवेः मानसपटले या अलौकिकी भावनासृष्टिर्भवति सा यदि काव्ये चित्रिता भवति तदेव बिम्बमिति उच्यते। कवेः अपूर्वा रचना बिम्बम्। आङ्गलभाषायाम् 'Image' इत्यस्य शब्दस्य संस्कृतरूपायनं बिम्बम्। यथा—

"Images are representation or linkness of an animate and imanimate object." The word image will be employed to denote any artificial representation of any person or thing.

Encyclopaedia of Britanica - Vol. - 14

C.D. Lewis कथयति–

" The poetic image is a picture made out of words. It is a picture in the mind. It's an idea. It is releasing a special poetic emotion to the reader."

It is a figure of speech. (Dictionary of world literature)

कवे: काश्चन भावना: नियमरहिता: भवन्ति। तस्या: भावनाया: प्रदर्शनं यद्यपि शब्दद्वारेणैव भवति तथापि शब्दस्यान्तराले एकं छायाचित्रं भवति। इदं छायाचित्रं काव्यान्तर्गतां भावनां द्विगुणितां करोति। तदेव छायाविधानं बिम्बविधानमिति कथ्यते। अर्थात् यस्य वस्तुन: यद् व्यक्ते: वा चित्रं यदि शब्दार्थयो: वैचित्र्यमाध्यमेन पाठकानां सम्मुखे सरसतया उपस्थापितं भवति तर्हि बिम्बविधानमिति कथ्यते। वस्तुत: रमणीयार्थस्य प्रतिपादनार्थं बिम्बविधानस्य परमावश्यकता अस्तीति निश्चप्रचं वक्तुं शक्यते। यत: पण्डितराजो जगन्नाथ: स्वकीये रसगङ्गाधरे काव्यलक्षणप्रतिपादनावसरे कथयति यत्–

**रमणीयार्थप्रतिपादक: शब्द: काव्यम्।।** र.ग–प्र. आननम्

**बिम्बविधानधारा–**

बिम्बविधानम् अतिप्राचीनम्। वैदिककालादारभ्य इयं परम्परा प्रचलति। तदा मन्त्रद्रष्टार: ऋषय: पवित्रभावनाया: परिप्रकाशं बिम्बविधानेन कुर्वन्ति स्म। यथा–

**द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते।**
**तयोरन्य: पिप्पलं स्वाद्वत्त्यनश्नन्नन्य अभिचाकशीति।।**

ऋ.वे 1.164.20

वस्तुत: मन्त्रस्यास्य अयमभिप्रायो यज् जीवा: सांसारिकीं मायां त्यक्त्वा आत्मोपलब्धिं कुर्वन्तु इति। परन्तु बिम्बे यया छायया अस्य प्रतिपादनं भवति तत् तु उत्कृष्टतामावहति। संसाररूपकस्य वृक्षस्य उपरि

द्वौ पक्षिणौ निवसत:। तयो: एकं ब्रह्मस्वरूपम् अपरञ्च जीवरूपम्। तत्र ब्रह्म साक्षिमात्रं निर्लिप्तं च भवति। परन्तु जीव: संसारवासनया लिप्त: सन् पथभ्रष्टो भवति। एवं प्रकारेण ऋग्वेदे बहुषु स्थलेषु बिम्बविधानं चित्रितमस्ति। रामायणे यदा दशरथस्य मृत्युरभवत् तस्यामेव रात्रौ भरत: दु:स्वप्नमपश्चत्। परन्तु तावत् पर्यन्तं भरतीऽयोध्यावृत्तान्तं किमपि न जानाति। तस्य दुस्वप्न एवमासीत् यथा–

**स्वप्ने पितरमद्राक्षं मलिनं मुक्तमूर्धजम्।**
**पतन्तमद्रिशिखरात् कलुषे गोमये ह्रदे॥**
**प्लवमानश्च मे हृष्ट: स तस्मिन् गोमये ह्रदे।**
**पिबन्नञ्जलिना तैलं हसन्निव मुहुर्मुहु:॥**
**ततस्तिलोदनं भुक्त्वा पुन: पुनरध:शिरा:।**
**तैलेनाभ्यक्तसर्वांगस्तैलमेवान्वगाहत।**
**स्वप्नेऽपि सागरं शुष्कं चन्द्रं च पतितं भुवि॥**

रामायणम् - 2.69. 8-11

अत्र स्वप्नेनैव बिम्बविधानं करोति कवि:। महाभारते बिम्बविधानम् इतोपि चारुतरमस्ति। तत्र द्रौपदीहरणपर्वणि द्रौपद्या: रूपवर्णनम् एवं प्रतिभाति। यथा–

**विभ्राजमानां वपुषा बिभ्रतीं रूपमुत्तमम्।**
**भ्राजयन्ती वनोद्देशं नीलाभ्रमिव विद्युतम्॥** द्रौ.ह.प-264.9

तदा द्रौपदीं दृष्ट्वा जयद्रथो विवाहेच्छा प्रकटयति। तस्मिन् समये द्रौपद्या: शोभावर्णनं यथा–

**का त्वं कदम्बस्य विनाम्य शाखामेकाश्रमे तिष्ठसि शोभमाना।**
**देदीप्यमानाग्निशिखेव नक्तं व्याधूयमाना पवनेन सुभ्रू:॥**

द्रौ.ह.प - 165.9

अस्माज् ज्ञायते यद् बिम्बविधानम् अत्र प्रदर्शितं सत् निरर्गलप्रवाहरूपेण भासते। तेन प्रवाहेण प्रायश: सर्वे कवय: स्वं स्वं काव्यं प्रवाहयन्ति। तेषु कवितल्लज्जेषु नैषधकार: श्रीहर्ष: धुरिकीर्त्तनीय:।

श्रीहर्षप्रणीते नैषधीयचरिते बिम्बविधानम् अधुना सोदाहरणमालोच्यते।

**नैषधीयचरिते बिम्बविधानम्–**

द्वाविंशतिसर्गात्मकः नैषधीयचरितग्रन्थोऽयम्। यस्य कर्त्ता मामल्ल-देवीश्रीहीरयोः पुत्ररत्नं तथा च महाराजविजयचन्द्रस्य सभापण्डितः श्रीहर्षः। अत्र नायकपदं मण्डयति निषेधदेशराजकुमारः नलः। नायिका च विदर्भकन्या दमयन्ती। अनयोः प्रेमधारा महाकाव्यस्यास्य वर्णितविषयः। अत्र प्रकृतेः अनुपमा शोभा राज्ञो नलस्य प्रभावः, दमयन्त्या रूपसौन्दर्यं, सरस्वत्याः शरीरं, हंसशोभा, विदर्भदेशस्य मनोहरदृश्यञ्चेति बिम्बविधानस्य प्रकृतं चित्रमिति नास्त्यत्र लोशतोपि संदेहस्यावकाशः। इदानीं तदेकैकमालोच्यते।

**नैषधीयचरिते प्रकृतिबिम्बम्–**

**संध्याबिम्बम्–**

नैषधे द्वाविंशतितमे सर्गे संध्याया वर्णनं यथा–

**कालः किरातः स्फुटपद्मकस्य वधं व्यधाद् यस्य दिनद्विपस्य।**
**तस्यैव सन्ध्या रुचिरास्त्रधारा ताराश्च कुम्भस्थलमौक्तिकानि॥**

नै.च 22.9

अत्र कालः किरातरूपं धारयति। दिवसः कश्चन महागजः। कालरूपिणा किरातेन महागजो मारितः। तस्य मृतहस्तिनः शोणितधारा शोणितसंध्यारूपेण परिवर्तिता। तस्माच्छरीराद् वेगेन निष्कासितानि मौक्तिकानि नक्षत्राणि इव उपर्युपरि आकाशमार्गं प्रति अपतन्। कवेः इयम् अपूर्वा कल्पना संध्याबिम्बं प्रकटयति।

**वृक्षबिम्बम्–**

नैषधीयचरिते पर्वतवर्णनावसरे वृक्षाणां वर्णनं कविना कृतम्। तत्र आम्रवृक्षस्य वर्णनमेवमस्ति। यथा–

**रसालसालः समदृश्यतामुना स्फुरद्द्विरेफारवरोषहुङ्कृतिः।**
**समीरलोलैर्मुकुलैर्वियोगिने जनाय दित्सन्निव तर्ज्जनाभियम्॥**

नै.च 1.89

राजा नलः आम्रवृक्षं ददर्श। वृक्षेऽस्मिन् चूतमञ्जर्य आसन्। एता मञ्जर्यो वायुना शनैः-शनैः कम्पिताः सन्ति। तदुपरि उड्डीयमानाः षट्पदाः अगुञ्जन्। एतद्दृश्यवीक्षणेन ज्ञायते यत् रसालवृक्षः भ्रमराणां गुञ्जनैः विरहिजनान् भययुक्तान् करोति। अत्र उत्प्रेक्षालङ्कारेण आम्रवृक्षस्य मनोहरबिम्बः प्रतीयते। दृश्यबिम्बेन सह द्विरेफैः गुञ्जनस्य हेतोः नादबिम्बस्य धारा उदेति।

**वायुबिम्बम्–**

वायोः वर्णने कविः सुन्दरं बिम्बं विरचयति। यथा–

**लताऽबलालास्यकलागुरुस्तरुप्रसूनगन्धोत्करपश्यतोहरः।**
**असेवतामुं मधुगन्धवारिणि प्रणीतलीलाप्लवनो वनानिलः॥**

नै.च. - 1.106

अत्र पवनः लतारूपरमण्याः नृत्यशिक्षकत्वेन चित्रितोऽस्ति। सः शिक्षकवेशे परिमलस्य हरणं करोति कुसुममकरन्दे स्थिते सुवासितजले अयं प्लवति।

**सरोवरबिम्बम्–**

राजा नल एकस्मिन् समये वनविहारं करोति। वने विहारसमये अयं तडागसमीपमगमत्। तत्र तडागवर्णने कविर्बिम्बविधानं करोति। यथा–

**रथाङ्गभाजा कमलानुषंगिणा शिलीमुखस्तोमसखेन शार्ङ्गिणा।**
**सरोजिनीस्तम्बकदम्बकैतवान्मृणालशेषाहिभुवान्वयायि यः॥**

नै.च 1.111

पुष्करिण्यां सरोजानि प्रस्फुटितानि सन्ति। एतानि विकसितकमलानि विष्णोः रूपं प्रकटयन्तीति कवेराशयः। सरोवरेऽस्मिन् विद्यमानो विहङ्गश्रेष्ठ चक्रवाको नारायणस्य चक्रमिति उच्यते। पुष्पे भ्राम्यमाणानां भ्रमराणां गुञ्जनं शार्ङ्गधन्वनो धनुष्टङ्कारः। धवलं मृणालं शेषनाग इव प्रतिकरोति। एतानि लक्षणानि भगवतो विष्णोः क्षीरसमुद्रवत् शोभां व्यञ्जयन्ति। अत्र कमलगन्धे घ्राणबिम्बम्, भ्रमरगुञ्जनं शब्दबिम्बम् तथा च मृणालशेषनागयोः साधर्म्यं दृश्यबिम्बं प्रकटयति।

**सूर्यबिम्बम्–**

**स्फुरति तिमिरस्तोमः पङ्कप्रपञ्च इवोच्चकैः**
**पुरुसितगरुच्चञ्चच्चञ्चू पुटस्फुटचुम्बितः।**
**अपि मधुकरी कलिम्मन्या विराजति धूमल-**
**च्छविरिव रवेर्लाक्षालक्ष्मीं करैरभिपातुकैः॥** नै.च 19.5

प्रात:कालीनसूर्यस्य वर्णं रुधिरादपि रक्ततरं प्रतिभाति। अनेन सूर्यकिरणैरन्धकारोऽपसरति। अस्य शोभां कवि: एवं कथयति यदनेकेषां श्वेतहंसानां चञ्च्वा यथा अपूर्वशोभासृष्टिर्भवति तथैव अयं सूर्य: प्रतिभाति।

**रात्रिबिम्बम्–**

**किं योगिनीयं रजनी रतीशं याऽजीजिवत्पद्ममम्मुहच्च।**
**योगाद्धिमस्या महतीमलग्नमिदं वदत्यम्बरचुम्बि कम्बु॥**
नै.च 22.22

अत्र रजनी एका योगिनीति कथयति कवि: रात्रौ योगं कारयति नराणां नारीणाञ्च इति योगिनी। द्वितीयं कर्म रात्रौ कमलस्य संकोचनमपि करोति। अत: कामोद्दीपके संजीवनशक्ते: कमलसंकोचने मारणशक्तेश्च प्रयोगं रात्रावेव एकस्मिन् समये एव करोति। अत: एषा सिद्धायोगिनी। अनेन चन्द्रस्य बिम्बं प्रतिभाति।

**अन्धकारबिम्बम्–**

**ऊर्ध्वार्पितन्युब्जकटाहकल्पे यद्व्योम्नि दीपेन दिनाधिपेन।**
**न्यधापि तद्भूमिमिलद्गुरुत्वं भूमौ तमः कज्जलमस्खलत्किम्॥**
नै.च–22.31

अत्र सूर्य एक: प्रज्वलितदीप:। रवे: सकाशात् कज्जलं नेतुं दैव आकाशरूपं पात्रं स्थापयति। आदिमं पात्रम् इदं कज्जलपूर्णं भवति। अनन्तरं कज्जलभारत्वात् तत् पात्रं भूमौ पतति। तेन कारणेन कज्जलमपि भूमौ अपतत्। तदा अन्धकार: समजनि। एवं बिम्बविधानं न कुत्रापि परिलक्ष्यते।

**पुष्पबिम्बम्–**

केतकीपुष्पस्य बिम्बं यथा–

**विनिद्रपत्रालिगतालिकैतवान्मृगाङ्कचूडामणिवर्जनार्जितम्।**
**दधानमाशासु चरिष्णु दुर्यशः स कौतुकी तत्र ददर्श केतकम्॥**

नै.च–1.78

अत्र नलः कौतूहलेन केतकीं अवलोकयति। यस्य पुष्पस्य कलिकायां भ्रमराः सन्ति। भ्रमरा नीलवर्णाः अतः केतकी अपि नैल्यं प्राप्ता। कवेः कल्पनाऽत्र यत् भ्रमरयुक्तत्वात् केतकी कलङ्किता। अत भगवान् शिवः स्वपूजायां केतकीं विसर्जितवान्। अत्र हेतुस्तु कविना कल्पितो हृदयङ्गमो दृश्यते। यस्य दुर्यशो भवति तस्य विषये त्याग एव प्रदर्शनीयः।

**हंसबिम्बम्–**

**अथावलम्ब्य क्षणमेकपादिकां तदा निदद्रावुपपल्वलं खगः।**
**सतिर्यगावर्जितकंधरः शिरः पिधाय पक्षेण रतिक्लमालसः॥**

नै.च–1.121

अत्र सुरतक्लान्तो हंसः एकेन पादेन समुत्तिष्ठति। ग्रीवां दर्शयित्वा पक्ष्मणा मस्तकम् आवृत्य सरोवरतटे निद्रितमुद्रां दधार। अस्मिन् बिम्बे हंसमुद्रा पूर्णतया द्रष्टुं शक्यते। हंसस्य स्वभावः अत्र स्फुटः वस्तुतः ये चञ्चुचरणादिनारक्ताः ते राजहंसाः, ये चञ्चुचरणादिना नीलाः ते हंसाः। अपि च विशेषतोऽस्य पक्षौ हेमवर्णौ। अतः नलस्य हृदये जिज्ञासा आगता। तदर्थं नलऽस्य धारणं करोति। तदा हंस नलं निन्दति। अत्र समाजे बलहीनानामुपरि बलयुक्तानामत्याचारं वर्णयति कविः। हंसः कथयति–

**धिगस्तु तृष्णातरलं भवन्मनः समीक्ष्य पक्षान्मम हेमजन्मनः।**
**तवार्णवस्येव तुषारशीकरैर्भवदेमीभिः कमलोदयः कियान्॥**

नै.च–1.78

वस्तुतः सुवर्णपक्षं दृष्ट्वा नल आनन्देन तं धारयति। परन्तु स्वर्णलोभ-वशोऽयं मम हननं करिष्यति वा इति विचिन्त्य हंसो नलं निन्दति। अर्णवो यथा तुषारशीकरैः न पूर्यते, तथा मम हेमपक्षैर्भवतो धनवृद्धिः कियती

भवेत् इति तं निगदति हंसः। अद्यतनसमाजस्य विषयोऽत्र श्रीहर्षेण निरूपितः।

**समाजबिम्बम्–**

**न केवलं प्राणिवधो वधो मम त्वदीक्षणाद्विश्वसितान्तरात्मनः।**
**विगर्हितं धर्मधनैर्निबर्हणं विशिष्य विश्वासजुषां द्विषामपि॥**

नै.च–1.131

अत्र जीवहिंसाया निन्दां करोति हंसः। विश्वासमुत्पाद्य शत्रूणामपि हननं न करणीयम्। राजनीतौ विश्वासजुषां द्विषां निबर्हणं विगर्हितं भवति। विश्वासयुक्ता वञ्चनीया इति राजनीतिः शुक्रनीतिवत् त्याज्या एव। निर्बलानामुपरि पराक्रमप्रदर्शनमत्यन्तं निन्दनीयम्। हंसस्य एवं वचनं श्रुत्वा नलो विस्मितो जातः। नलस्य हृदि दयाभाव उत्पन्नः। यथा–

**पदे पदे सन्ति भटा रणोद्भटा न तेषु हिंसारस एष पूर्य्यते।**
**धिगीदृशन्ते नृपतेः कुविक्रमं कृपाश्रये यः कृपणे पतत्रिणि॥**
**फलेन मूलेन च वारिभूरुहां मुनेरिवेत्थं मम यस्य वृत्तयः।**
**त्वयाऽद्य तस्मिन्नपि दण्डधारिणा कथं न पत्या धरणी हृणीयते॥**
**इतीदृशैस्तं विरचय्य वाङ्मयैः सचित्रवैलक्ष्यकृपं नृपं खगः।**
**दयासमुद्रे स तदाशयेऽतिथीचकार कारुण्यरसापगा गिरः॥**

नै.च–1.131–134

हिंसारतिः–राज्ञां श्रेयःप्रदायिका न भवति। अनुकम्पनीये पतत्रिणि किमुत? अहं फलैः मूलैश्च जीवामि। ममोपरि दण्डधारणमनुचितम्। धरणी भवतः कर्मणा जुगुप्सिता एव भविष्यति। हंसः स्वलोकभ्रमणवशेनागतं लौकिकं वस्तु स्वीकृत्य नलं करुणार्द्रं चकार। समुद्रे यथा नदीप्रवेशः उचितः तथा नलस्य अकूपारसदृशे हृदये स्वं वा नदीं हंसः प्रवेशयामास। अन्ते नयनाश्रुविगलितेन आर्त्तस्वरेण हंसः स्वपारिवारिकीं स्थिति कथयति। यथा–

**मदेकपुत्रा जननी जरातुरा नवप्रसूतिर्वरटा तपस्विनी।**
**गतिस्तयोरेष जनस्तमर्दयन्नहो विधे! त्वां करुणा रुणद्धि नो॥**

नै.च–1.135

हंसस्य परिवारे वृद्धा माता नवप्रसूता दीना भार्या च अस्ति। एष हंसस्तयोर्द्वयोगतिरूपम्। अतो दुःखाभिभूते समयेऽस्मिन् विधातुः करुणाम् ईप्सति हंसः। वस्तुतः समाजे एषा दशा वास्तविकी अस्ति। एतादृशस्य सामाजिकबिम्बस्य प्रकृष्टमुदाहरणं हंसमुखेन चित्रयति कविः।

**शास्त्रबिम्बम्–**

शास्त्रेषु शास्त्रान्तरेषु च विषयानाधारीकृत्य नैषधकारो बिम्बविधानं करोति। तत्र शास्त्रेषु प्रमाणमस्ति पुरुषार्थचतुष्टयेषु मोक्षः श्रेष्ठ इति। यथा श्रीमद्भगवतगीतायां कृष्णेन उक्तम्–

**सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज।**
**अहं त्वां सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः।।** श्री.भ.गी

तदर्थं कविः काव्येऽस्मिन् मोक्षं बिम्बरूपेण स्वीकृत्य जनान् मोक्षमार्गमनुसर्त्तुं प्रोत्साहयति। यथा–

**अधिगत्य जगत्यधीश्वरादथ मुक्तिं पुरुषोत्तमात्ततः।**
**वचसामपि गोचरो न यः स तमानन्दमविन्दत द्विजः।।**

नै.च - 2.1

द्विजो यथा परमेश्वरस्य कृपया मोक्षं प्राप्य परमानन्दे मग्नो भवति तथैव अयं हंसो नलस्य हस्तात् मुक्तः सन् परमानन्दं प्राप। मुक्तिं प्राप्य अनीर्वचनीयः आनन्दो यथा जायते तथा हंसस्य आनन्दः समजनि। यादृशानन्दो लब्धः तादृशानन्दस्य वर्णनं कर्त्तुं हंसो न शशाक। अत्र वस्तुतो हंसस्य मुक्तिर्यद्यपि वर्णिता परन्तु छायारूपेण कविर्मोक्षप्राप्तिमस्मान् वेदान्तशास्त्रदिशा उद्बोधयतीति नास्त्यत्र संदेहस्यावकाशः।

**शरीरबिम्बम्–**

**केशबिम्बम्–**

कविर्दमयन्त्याः केशविलासस्य वर्णने चमरीधेनोर्बिम्बविधानं करोति। यथा–

**चिकुरप्रकारा जयन्ति ते विदुषी मूर्द्धनि सा बिभर्त्ति यान्।**
**पशुनाऽप्यपुरस्कृतेन तत्तुलनामिच्छतु चामरेण कः।।** नै.च - 2.20

अत्र दमयन्ती विदुषीति कथयति कविः। तस्या दमयन्त्याः केशसमूहः चमरीधेनोः पुच्छाग्रभागवत् स्वच्छगहनञ्च विदधाति। अत्र पशुबिम्बकेशबिम्बेति बिम्बद्वयमुद्भासेते।

**नित्रबिम्बम्–**

वस्तुतो नेत्रयोः उपमानत्वेन त्रयः पदार्थाः प्रसिद्धाः, कमलं, हरिणनयनं, खञ्जनञ्चेति। परन्तु श्रीहर्षदृष्ट्या दमयन्त्या नेत्रसौन्दर्यम् इतोपि अधिकम्। कमलादीनां सौन्दर्याभिमानो भङ्गो भवति। यथा–

**नलिनं मलिनं विवृण्वती पृषतीमस्पृशती तदीक्षणे।**
**अपि खञ्जनमञ्जनाञ्चिते विदधाते रुचिगर्वदुर्विधम्॥**

नै.च - 2.23

नेत्रबिम्बस्य एतादृशम् उदाहरणं काव्यजगति कुत्रापि नास्तीति अनुमीयते।

**स्वकेलिलेशस्मितनिर्जितेन्दुनो निजांशदृक्तर्जितपद्मसंपदः।**
**अतद्द्वयीजित्वरसुन्दरान्तरे न तन्मुखस्य प्रतिमा चराचरे॥**

नै.च - 1.23

नलः स्वकीयस्मितहास्येन इन्दुमपि पराजयते। तस्य नेत्रयोः कान्तिः पद्ममपि तिरस्करोति। वस्तुतो जगत्यस्मिन् चन्द्रात् सुन्दरं न किमपि अस्ति। तथैव कमलतुल्यं रमणीयं कमनीयञ्च संसारे नास्ति। अत एतयोः पराजयं यः करोति स जगति सर्वोत्कृष्ट इति कवेरभिप्रायः। पुनः कथयति–

**सरोरुहं तस्य दृशैव तर्जितं जिताः स्मितेनैव विधोरपि श्रियः।**
**कुतः परं भव्यमहो महीयसी तदाननस्योपमितौ दरिद्रता॥**

नै.च - 1.24

नलस्य दृशा सरोरुहं जितम् तथैव स्मितहासः चन्द्रसः कान्तिं जहार। अतः जगति नलमुखसमानस्य सुन्दरपदार्थस्य अभावात् मुखस्य उपमा कथं भविष्यतीति कविः चिन्तां प्रकटयति। अनेन प्रकारेण मुखसौन्दर्यप्रतिपादने प्रसिद्धोऽयं कविः।

**तनुबिम्बम्–**

कविः दमयन्त्याः शरीरशोभामत्युत्कृष्टतया प्रदर्शयति। यथा–

**मुखपाणिपदाक्ष्णि पङ्कजै रचिताऽङ्गेष्वपरेषु चम्पकैः।**
**स्वयमादित यत्र भीमजा स्मरपूजाकुसुमस्रजः श्रियम्॥**

न.च 2.96

अत्र दमयन्तीं मालारूपेण वर्णयति कविः। वस्तुतः कथनस्य अयम् अभिप्रायो यत् दमयन्त्या मुखं, हस्तौ, पदयुगलञ्च कमलपुष्पनिर्मितम्। शरीरस्य अन्यानि अङ्गानि चम्पकपुष्पनिर्मितानि। अतः पुष्पनिर्मितमस्या अङ्गं कदाचित् कामदेवपूजायां पुष्पहारत्वरूपं प्रकटीकरोतीति कवेराशयः। अत्र दमयन्त्यास्तनुवर्णनं करोति कविः। अन्यस्मिन् पार्श्वे नलस्यापि वर्णनं तेनैवप्रकारेण करोति कविः। यथा–

**स्वकेलिलेशस्मितनिर्जितेन्दुनो निजांशदृक्तर्जितपद्मसम्पदः।**
**अतद्वयीजित्वरसुन्दरान्तरे न तन्मुखस्य प्रतिमा चराचरे॥**

न.च - 1.23

नलस्य रूपसौन्दर्यं कमलं चन्द्रञ्च पराजयत इति कवेः कल्पना। अत उपमाभावात् इदमपि सर्वोत्कृष्टम्। अत्र शरीरवर्णनावसरे कविः चारुत्वपूर्णं बिम्बविधानं करोति।

**तेजोबिम्बम्–**

नलस्य तेजो विपक्षनृपाणां हृदि भीतिं प्राकटयत्। यथा–

**प्रतीपभूपैरिव किं ततो भिया विरुद्धधर्मैरपि भेत्तृतोज्झिता।**
**अमित्रजिन्मित्रजिदोजसा स यद्विचारदृक्चारदृगप्यवर्तत॥**

न.च-1.13

अयं प्रतापवान् नलोऽमित्राणि इत्यत्र शत्रून् अजयत्। तथा च मित्रजित् अर्थात् स्वकीयान् तेजसा भानुमपि जितवान्। पुनः चारैः यद्यपि अयं राज्यं पश्यति तथापि स्वकीयविचारेण राज्यशासनं करोतीति अर्थः। अनेन प्रकारेण राज्यशासने बिम्बमपि प्रदर्शयति कविः।

**बाहुबिम्बम्–**

नलस्य बाहुयुग्मं आजानुलम्बितम् आसीत्। तस्य वक्षःस्थलं

स्थूलत्वमावहति। गोपुरस्थस्य कपाटस्य दृढता दीर्घता च तस्य वक्षसि आसीदिति बिम्बविधानेन कपाटादीनां छायामपि दर्शयति कविः। यथा–

**अमुष्य दोर्भ्यामरिदुर्गलुण्ठने ध्रुवं गृहीतार्गलदीर्घपीनता।**
**उरःश्रिया तत्र च गोपुरस्फुरत्कपाटदुर्धर्षतिरःप्रसारिता।।**

नै.च 1.22

### अधरबिम्बम्–

दमयन्त्या अधरवर्णनं करोति कविः। यथा–

**अधरं खलु बिम्बनात्मकं फलमस्मादिति भव्यमन्वयम्।**
**लभतेऽधरबिम्बमित्यदः पदमस्या रदनच्छदं वदत्।।**

नै.च 1.24

संसारेऽस्मिन् बहूनि फलानि भवन्ति। परन्तु बिम्बफलम् अत्यन्तं रमणीयम्। वस्तुतः बिम्बफलस्य रक्तवर्णत्वं तस्य भव्यत्वस्य कारणम्। अत्र अधरशोभां कविः बिम्बफलस्य छायां स्वीकृत्य प्रदर्शयति। महाकवयः अधरस्य साम्यं बिम्बफलेन निरूपयन्ति, नैषधकारस्तु अधरस्य शोभा बिम्बमपि अधरयतीति व्याकरणबलेन प्रदर्शयति।

### उपसंहारः–

अनेन प्रकारेण श्रीहर्षप्रणीते नैषधीयचरिते प्रतिस्थलं बिम्बविधानम् परिलक्ष्यते। कुत्र स्फुटबिम्बं कुत्र च अस्फुटबिम्बं महाकाव्यस्यास्य सौन्दर्यं द्विगुणीकरोति। एवं कविताकामिन्याः कमनीयं चित्रं नैषधीयचरिते द्रष्टुं शक्यते। इति शम्।

# नैषधीये सौन्दर्यतत्त्वान्वेषणम्

डॉ. सत्यनारायण आचार्यः

**श्रीहर्षपरिचयः–**

महाकवेः श्रीहर्षस्य पिता श्रीहीरः, माता च मामल्लदेवीति नैषधीयचरितमहाकाव्यस्य सर्गान्तरश्लोकेषु सूचितम्। यथा–

**श्रीहर्षं कविराजराजिमुकुटालंकारहीरं सुतं**
**श्रीहीरः सुषुवे जितेन्द्रियचयं मामल्लदेवी च यम्।**
**तच्चिन्तामणिमन्त्रचिन्तनफले शृङ्गारभङ्ग्या महा–**
**काव्ये चारुणि नैषधीयचरिते सर्गोऽयमादिर्गतः॥** इति।

नैषध. – 1/145

अस्य पिता श्रीहीरः काशीनरेशस्य जयचन्द्रस्य सभापण्डित आसीत्। तत्र शास्त्रार्थे उदयनाचार्येण पराजितश्च। जैनविदुषः राजशेखरसूरिणः प्रबन्धकोशपुस्तकात् ज्ञायते यत् पितुः अवमाननस्य परिहाराय श्रीहर्षः मातुः उपदेशेन चिन्तामणिमन्त्रजपद्वारा त्रिपुरादेव्या आशीर्वादेन प्रचण्डं पाण्डित्यमर्जितवान्। ततः जयचन्द्रस्य सभामागत्य निजपाण्डित्यप्रदर्शनपुरः-सरं पद्यमिदमुच्चारितवान्–

**गोविन्दनन्दनतया च वपुःश्रिया च**
**माऽस्मिन्नृपे कुरुत कामधियं तरुण्यः।**
**अस्त्रीकरोति जगतां विषये स्मरः स्त्री–**
**रस्त्रीजनः पुनरनेन विधीयते स्त्रीः॥** इति।

राजशेखरसूरिकृतप्रबन्धकोशः–1

अस्मिन् पद्ये जयचन्द्रस्य गुणगानं कृतं कविना। कन्दर्पः जगतः विजयार्थं स्त्रीजनान् अस्त्रीकरोति, अर्थात् अस्त्ररूपेण व्यवहरति। अयं तु जयचन्द्रः अस्त्रधारिणः (अस्त्रीजनान्) स्त्रीः विदधाति। अनेन जयचन्द्रस्य

सौन्दर्यं वीरत्वं च व्यज्यते। तत्रापि कविना निजपितुः प्रतिपक्षस्य उदयनाचार्यस्य गर्वखण्डनाय आह्वानं कृतं यथा–

**साहित्ये सुकुमारवस्तुनि दृढन्यायग्रहग्रन्थिले**
**तर्के वा मयि संविधातरि समं लीलायते भारती।**
**शय्या वाऽस्तु मृदूत्तरच्छदवती दर्भाङ्कुरैरास्तृता**
**भूमिर्वा हृदयङ्गमो यदि पतिस्तुल्या रतिर्योषिताम्।।** इति।

तत्रैव, श्लो. 2

ततः उदयनेन श्रीहर्षस्य प्रतिभायाः प्रशंसा कृता। श्रीहर्षः तत्रापि सभापण्डितरूपेण स्वीकृतः इति तस्य समयः द्वादशशताब्दीति विचार्यते। तस्य राज्ञः निवेदनात् नैषधीयचरितं नाम पाण्डित्यपूर्णं काव्यग्रन्थं व्यरचयदिति ज्ञायते। ततः पूर्वं भारवेः किरातार्जुनीयं, माघस्य शिशुपालवधं च प्रसिद्धे आस्ताम्। परन्तु नैषधीयचरितरचनायाः परं तयोः स्थानं गौणमभवत्। तदुक्तं–

**तावद्भा भारवेर्भाति यावन्माघस्य नोदयः।**
**उदिते नैषधे काव्ये क्व माघः क्व च भारविः।।** इत्यादि।

**नैषधीयचरितमहाकाव्यपरिचयः–**

सुविस्तृतसंस्कृतसाहित्ये महाकवेः श्रीहर्षस्य नैषधीयचरितं नाम महाकाव्यं सुप्रसिद्धपञ्चमहाकाव्येषु मूर्धन्यभूतं स्थानमधिरोहति। अस्य ग्रन्थरत्नस्य महत्त्वं ग्रन्थान्ते स्वयमुद्घोषितं महाकविना यथा–

**ग्रन्थग्रन्थिरिह क्वचित् क्वचिदपि न्यासि प्रयत्नान्मया**
**प्राज्ञम्मन्यमना हठेन पठिती माऽस्मिन् खलः खेलतु।**
**श्रद्धाराद्धगुरुश्लथीकृतदृढग्रन्थिः समासादय-**
**त्वेतत्काव्यरसोर्मिमज्जनसुखव्यासज्जनं सज्जनः।।** इति।

नैषध. – 22/कविप्रशस्ति–3

अस्मिन् महाकाव्ये द्वाविंशतिः सर्गाः सन्ति। अत्र निषधदेशस्य नलस्य जीवनचरितं 2828 श्लोकैश्चोपनिबद्धमस्ति। अस्य महाकाव्यस्य स्रोतांसि यद्यपि शतपथब्राह्मणम्, महाभारतवनपर्व, कथासरित्सागरः, पद्म-लिङ्ग–वायु–हरिवंश–ब्रह्माण्डपुराणानि च भवन्ति, तथापि महाभारतस्य

नलोपाख्यानमत्र (वनपर्व, 52-79) प्रमुखमितिवृत्तं वर्त्तते। श्रीहर्षस्य रचनारूपेण बहूनां ग्रन्थानां नामानि श्रूयन्ते, परन्तु नैषधीयचरितं तथा खण्डनखण्डखाद्यम् इति च ग्रन्थद्वयं समुपलभ्यते। खण्डनखण्डखाद्यग्रन्थे न्यायसिद्धान्तानां खण्डनं विधाय अद्वैतवेदान्तसिद्धान्तस्य प्रतिष्ठापनं कृतं वर्तते।

नैषधीयचरितमहाकाव्ये कविः निजकाव्यप्रशंसाव्याजेन कान्यकुब्जे-श्वरात् विद्वद्योग्यं सम्मानं प्राप्तवान् इति सूचयति–

**ताम्बूलद्वयमासनञ्च लभते यः कान्यकुब्जेश्वरात्**
**यः साक्षात्कुरुते समाधिषु परं ब्रह्म प्रमोदार्णवम्।**
**यत्काव्यं मधुवर्षि धर्षितपरास्तर्केषु यस्योक्तयः**
**श्रीश्रीहर्षकवेः कृतिः कृतिमुदे तस्याभ्युदीयादियम्।।**

नैषध. - 22, कविप्रशस्ति-8

अस्मिन् नैषधीयचरितमहाकाव्ये दर्शनशास्त्रस्य शास्त्रान्तराणां च भूयसी चर्च्चा कृता वर्तते। अतः "नैषधं विद्वदौषधम्" इत्यामनन्ति पण्डिताः।

**सौन्दर्यशब्दव्युत्पत्तिः–**

सुष्ठु उनत्ति आर्दीकरोति चित्तम् (सु+उन्द्+क्लेदने+अरः) इति सुन्दरः मनोहरः इत्यर्थः। कोशानुसारं च "सुन्दरं रुचिरं चारु सुषमं साधु शोभनम्.....प्रियम्" इत्यादिरूपेण पर्य्यायशब्दाः समुपलभ्यन्ते। सुन्दं रातीति सुन्दरम्, तस्य भावः सौन्दर्यमिति व्युत्पत्त्या चित्ताकर्षकं तत्त्वं सौन्दर्यमिति कथ्यते। वेदेषु सौन्दर्यम् इति पदं, रूपं, चारु, रुचिरं, भद्रं, मधुरम् इत्यादिरूपेण प्रयुक्तम्। तद्यथा विश्वा रूपाणि प्रतिमुञ्चते कविः (ऋग्वे. 5/81/12) इत्यादि। उपनिषत्सु सौन्दर्यतत्त्वम् आनन्दमयब्रह्मरूपेण वर्णितम्। तदुक्तं– "आनन्दो ब्रह्मेति विजानात्...." (तैत्तिरीयोपनिषद्- 3.6.1)। रामायणे सौन्दर्यार्थे रमणीय-रम्य-शोभन-शुभदर्शनादयः शब्दाः व्यवहृताः। तत्र एकस्य काण्डस्य नाम "सुन्दरकाण्डः" इत्यपि अभिहितम्। महाभारतेऽपि रम्य-प्रिय-रुचिरादयः शब्दाः प्राप्यन्ते। महाकाव्यकाले काव्यसौन्दर्यवर्णने कवयः निपुणाः। महाकवेः कालिदासस्य भावनया सौन्दर्यं नैसर्गिकं भवति।

तदुक्तं "किमिव हि मधुराणां मण्डनं नाकृतीनाम्" (अभि. शा. 1/18)। नित्यनूतनाकर्षणं नाम सौन्दर्यमिति प्रतिपादयति माघः- "क्षणे क्षणे यन्नवतामुपैति तदेव रूपं रमणीयतायाः" इति (शिशु. 4/17)। "सौन्दर्यमलङ्कार" (काव्यालङ्कारसूत्रवृत्तिः 1/1/1-2) इत्यादि वामनमतं पुरस्कृत्य अलङ्कारशास्त्रं सौन्दर्यशास्त्रमित्यपि कथ्यते।

**काव्येषु सौन्दर्यतत्त्वानि–**

कवयः स्वकाव्येषु विविधसौन्दर्यतत्त्वानि वर्णयन्ति। तानि समीक्षकाः वस्तुसौन्दर्यम्, भावसौन्दर्यम्, अभिव्यक्तिसौन्दर्यमिति त्रिधा स्वीकुर्वन्ति। वस्तुसौन्दर्यमपि रूपसौन्दर्यं, प्रकृतिसौन्दर्यं, प्रकरणसौन्दर्यादिरूपेण विचारयितुं शक्यते। सहृदयाः काव्येषु वर्णितानां स्थायि-व्यभिचारि-सात्त्विकभावानां प्राधान्येन रसास्वादनेन भावसौन्दर्यमनुभवन्ति। तथैव रीति-गुण-अलङ्कार-वक्रोक्ति-औचित्यादिभिः काव्यतत्त्वैः कवेः काव्याभिव्यक्तिसौन्दर्यमाकलयितुं शक्यते।

**नैषधीयचरिते सौन्दर्यतत्त्वानि–**

**वस्तुसौन्दर्यम्–** वस्तुपदेन कथावस्तु इतिवृत्तं वेति गृह्यते। नैषधीयचरितस्य कथावस्तु महाभारतस्य वनपर्वतः नलोपाख्यानमाश्रित्य प्रवर्तते। परन्तु महाकविः श्रीहर्षः स्वप्रतिभावैभवेनात्यन्तं सरसतया वस्तुसौन्दर्यं प्रतिपादयति। यथा–

**रूपसौन्दर्यम्–**

**नलस्य रूपसौन्दर्यम्–**

काव्यारम्भे क्षितिरक्षिणः नलस्य कीर्त्तिं कीर्त्तयन् वस्तुनिर्देशरूपं मङ्गलं निर्दिशति। सः नलः "महसां महोज्ज्वलः" इति कथनेन रविरिव तेजस्वी तथा नित्यमहोत्सवशालीति प्रतीयते। त्रयीविद्या तस्य रसानाग्रनर्तकी आसीत्। सः महादेव इव शास्त्ररूपं तृतीयं नेत्रं धृतवान्। कविः नलस्य रूपयौवनवर्णने नितरां यत्नवान् परिदृश्यते। दिङ्मात्रं तु यथा–

**सरोरुहं तस्य दृशैव निर्जितं**
**जिताः स्मितेनैव विधोरपि श्रियः।**

**कुतः परं भव्यमहो महीयसी**
**तदा ननस्योपमितौ दरिद्रता।।** (नैषध. 1/124)

अत्र व्यतिरेक-काव्यलिङ्गालङ्कारयोः संसृष्टिः काव्यसौन्दर्यं सृजति।

तृतीयसर्गे नलस्य मुखमण्डले चतुर्दशविद्याः अष्टादशविद्याश्च दन्तपंक्तिरूपेण शोभन्ते इति उत्प्रेक्षालङ्कारद्वारा रूपसौन्दर्यं प्रस्तौति यथा-

**रेखाभिरास्ये गणनादिवाऽस्य द्वात्रिंशता दन्तमयीभिरन्तः।**
**चतुर्दशाऽष्टादश चाऽत्र विद्या द्वेधाऽपि सन्तीति शशंस वेधाः।।**

तत्रैव 3/35

**दमयन्त्याः रूपसौन्दर्यम्-**

महाकविः श्रीहर्षः दमयन्ती त्रिभुवनसुन्दरीति वर्णयति। तद्यथा-

**भुवनत्रयसुभ्रुवामसौ दमयन्ती कमनीयतामदम्।**
**उदियाय यतस्तनुश्रिया दमयन्तीति ततोभिधां दधौ।।**

तत्रैव 2/18

हंसमुखेन दमयन्त्याः नखशिखवर्णने निपुणः कविः नारीसौन्दर्यस्य सर्वातिशायि महत्त्वं सूचयति-

**नलिनं मलिनं विवृण्वती पृषतीमस्पृशती तदीक्षणे।**
**अपि खञ्जनमञ्जनाञ्चिते विदधाते रुचिगर्वदुर्विधम्।।**

तत्रैव 2/23

दशमे सर्गे इन्द्रस्य मुखेन दमयन्त्याः रूपसौन्दर्यं वर्णयति यथा-

**स्मितेन गौरी हरिणी दृशेयं वीणावती सुस्वरकण्ठभासा।**
**हेमेव कायप्रभयाङ्गशेषैस्तन्वी मतिं क्रामति मेनकाऽपि।।**

तत्रैव, 20/134

रूपसौन्दर्यवर्णने तत्परः श्रीहर्षः सामान्यं हंसं सुवर्णहंसः इति प्रतिपादयति- "हिरण्मयहंसमबोधि नैषधः" इति (तत्रैव 1/117)।

**देवतानां रूपसौन्दर्यम्-**

भीमनरेन्द्रस्य निवेदनेन भगवतः विष्णोः प्रार्थनया भगवती सरस्वती

स्वयम्बरसभां वर्णयितुमुपस्थिता–

**मध्ये सभं....**(10/74)

सर्वे देवाः स्वयम्बरसभामागत्य दमयन्तीं दृष्ट्वा तदीयसौन्दर्येण नितरामुत्साहिताः। लोकमुखात् यत् सौन्दर्यं तैः पूर्वं श्रुतम्, तत्तु प्रकृतिसौन्दर्याद् बहुन्यूनमिति कथयन्ति–

**रूपं यदाकर्ण्य जनाननेभ्यस्तत्तद्दिगन्ताद् वयमागमाम।**
**सौन्दर्यसारादनुभूयमानादस्यास्तदस्मात् बहुना कनीयः॥**

तत्रैव 10/114

**प्रकृतिसौन्दर्यम्–**

नैषधे प्रकृतिसौन्दर्यं चारुतरं वर्णितम्। प्रथमे सर्गे नलः उपवनं प्रविश्य वनपालपाणिना निवेद्यमानं काननरामणीयकं व्यलोकयत्। तत्रत्याः वृक्षाः वृद्धमहर्षय इव राज्ञः आतिथ्यं शिक्षितवन्तः इति रूपकउत्प्रेक्षालङ्कारयोः सङ्करः काव्यसौन्दर्यं प्रतिपादयति। यथा–

**फलानि पुष्पाणि...........**1/77

दमयन्त्याः सादृश्यं वहन्तीं कामपि लतां तत्र नलः सादरमपश्यदिति समासोक्त्यलङ्कारेण सूचयति यथा–

**नवा लता गन्धवहेन चुम्बिता**
**करम्बिताङ्गी मकरन्दशीकरैः।**
**दृशा नृपेण स्मितशोभिकुड्मला**
**दराऽऽदराभ्यां दरकम्पिनी पपे॥** (तत्रैव 1/85)

**प्रकरणसौन्दर्यम्–**

नैषधे प्रकरणसौन्दर्यमपि प्राप्यते। पञ्चतलीनि प्रकरणं द्रष्टव्यम्।

**नैषधे भावसौन्दर्यम्–**

नाट्यशास्त्रानुसारं "कवेरन्तर्गतं भावं भावयन् भाव उच्यते" (ना. शा. 7/2)। भानुदत्तानुसारं चित्तवृत्तेः रसानुकूलता हि भावः कथ्यते। तदुक्तं – "रसानुकुलो भावो विकारः" (रसतरङ्गिणी, प्रथमतरङ्गः)।

साहित्यशास्त्रे रतिशोकप्रभृतय: स्थायिभावा: अष्टौ व्यभिचारिभावाश्च 33 भवन्ति। नाट्यशास्त्रे स्तम्भस्वेदादय: अष्टौ सात्त्विकभावा: अपि कथिता:। लोके वासनारूपेण अनादिकालात् स्थितानां स्थायिभावानां उद्बोधको विभाव: कथ्यते। तदुक्तं साहित्यदर्पणे–

**रत्याद्युद्बोधका लोके विभावा: काव्यनाट्ययो:॥** सा.द. 3

लोके य: कार्यरूप: भवति काव्यनाट्ययो: स: अनुभाव: कथ्यते। सत्त्वगुणेन सम्भूता: विकारा: सात्त्विकभावा: भवन्ति। एतेषां विभावानुभाव-व्यभिचारिणां संयोगात् रसनिष्पत्तिरिति भरत: रससूत्रमुपस्थापयति। तत्रापि निष्पत्तिपदेन अभिव्यक्तिरिति अभिनवगुप्तपादानां अभिव्यक्तिवाद: प्रसिद्ध:। नैषधे शृङ्गारादिनां रसानामभिव्यक्ति: नितान्तमास्वाद्या भवति। स: स्वयमेव उद्घोषयति–

**शृङ्गारभङ्ग्या महाकाव्ये चारुणि नैषधीयचरिते.....॥** नै. 1/145

**शृङ्गारामृतशीतगावयमगादेकादशस्तन्महा–**
**काव्ये चारुणि नैषधीयचरिते सर्गो निसर्गोज्ज्वल:॥**

नै. 11/130 इत्यादि च।

सम्भोगशृङ्गारस्य तत्रोदाहरणमेकं यथा–

**अन्योन्यमन्यत्रवदीक्षमाणौ परस्परेणाध्युषिते ऽपि देशे।**
**आलिङ्गतालीकपरस्परान्तस्तथ्यं मिथस्तौ परिषस्वजाते॥**

नै. 6/51

अस्मिन् महाकाव्ये शृङ्गाररसस्यैव प्रधानतया समावेश: कृत इति स्वयमाह–

**रसस्य शृङ्गार इति श्रुतस्य क्व नाम जागर्ति महानुदन्वान्।**
**कस्मादुदस्थादियमन्यथा श्रीर्लावण्यवैदग्ध्यनिधि: पयोधे:॥**

नै. 10/115

अत्र द्वादशे षोडशे च सर्गे हास्यरसस्य पर्याप्तमुदाहरणं प्राप्यते। यथा–

**विधाय ताम्बूलपुटीं कराङ्कगां बभाण ताम्बूलकरङ्कवाहिनी।**
**दमस्वसुर्भावमवेत्य भारतीं नयानया वक्त्रपरिश्रमं शमम्।।**

नै. 12/76

करुणरसस्य वर्णना प्रथमे सर्गे नलेन स्वीकृतस्य हंसस्य मुखेन दृश्यते। यथा–

**मदेकपुत्रा जननीजरातुरा नव प्रसूतिर्वरटा तपस्विनी।**
**गतिस्तयोरेष जनस्तमर्दयन्नहो विधे! त्वां करुणारुणाद्धिनो।।**

नै. 1/135

रौद्ररसस्याभिव्यक्तिः नैषधे यथा–

**जज्वाल ज्वलनः क्रोधादाचख्यौ चाक्षिपन्नमुम्।**
**किमात्थ रे? किमात्थेदमस्मदग्रे निरर्गलम्।।** नै. 17/12

वीररसस्य चतुर्षु भेदेषु दानवीरस्य उदाहरणं यथा–

**अर्थिने न तृणवद्धनमात्रं किं तु जीवनमपि प्रतिपाद्यम्।**
**एवमाह कुशवज्जलदापी द्रव्यदानविधिरुक्ति विदग्धः।।**

नै. 5/86

बीभत्सरसस्य स्थलं यथा–

**संग्रामभूमीषु भवत्यरीणामस्त्रैर्नदी मातृकतां गतासु।**
**तद्बाणधारा पवनाशनानां राजव्रजीयैरसुभिः सुभिक्षम्।।**

नै. 3/38

अद्भुतरसः प्रथमे सर्गे यथा–

**महीमहेन्द्रस्तमवेक्ष्य स क्षणं शकुन्तमेकान्तमनो विनोदिनीम्।**
**प्रिया वियोगाद्विधुरोऽपि निर्भरं कुतूहलाक्रान्तमना मनागभूत्।।**

नै. 1/119

शान्तोऽपि नवमो रसः इति सिद्धान्तं समर्थयन् नैषधे शान्त-रसाभिव्यक्तिः दृश्यते। यथा–

साहित्यशास्त्रे रतिशोकप्रभृतयः स्थायिभावाः अष्टौ व्यभिचारिभावाश्च 33 भवन्ति। नाट्यशास्त्रे स्तम्भस्वेदादयः अष्टौ सात्त्विकभावाः अपि कथिताः। लोके वासनारूपेण अनादिकालात् स्थितानां स्थायिभावानां उद्बोधको विभावः कथ्यते। तदुक्तं साहित्यदर्पणे–

**रत्याद्युद्बोधका लोके विभावाः काव्यनाट्ययोः॥** सा.द. 3

लोके यः कार्यरूपः भवति काव्यनाट्ययोः सः अनुभावः कथ्यते। सत्त्वगुणेन सम्भूताः विकाराः सात्त्विकभावाः भवन्ति। एतेषां विभावानुभाव-व्यभिचारिणां संयोगात् रसनिष्पत्तिरिति भरतः रससूत्रमुपस्थापयति। तत्रापि निष्पत्तिपदेन अभिव्यक्तिरिति अभिनवगुप्तपादानां अभिव्यक्तिवादः प्रसिद्धः। नैषधे शृङ्गारादिनां रसानामभिव्यक्तिः नितान्तमास्वाद्या भवति। सः स्वयमेव उद्घोषयति–

**शृङ्गारभङ्ग्या महाकाव्ये चारुणि नैषधीयचरिते.....॥** नै. 1/145

**शृङ्गारामृतशीतगावयमगादेकादशस्तन्महा–**
**काव्ये चारुणि नैषधीयचरिते सर्गो निसर्गोज्ज्वलः॥**

नै. 11/130 इत्यादि च।

सम्भोगशृङ्गारस्य तत्रोदाहरणमेकं यथा–

**अन्योन्यमन्यत्रवदीक्षमाणौ परस्परेणाध्युषिते ऽपि देशे।**
**आलिङ्गितालीकपरस्परान्तस्तथ्यं मिथस्तौ परिषस्वजाते॥**

नै. 6/51

अस्मिन् महाकाव्ये शृङ्गाररसस्यैव प्रधानतया समावेशः कृत इति स्वयमाह–

**रसस्य शृङ्गार इति श्रुतस्य क्व नाम जागर्ति महानुदन्वान्।**
**कस्मादुदस्थादियमन्यथा श्रीर्लावण्यवैदग्ध्यनिधिः पयोधेः॥**

नै. 10/115

अत्र द्वादशे षोडशे च सर्गे हास्यरसस्य पर्याप्तमुदाहरणं प्राप्यते। यथा–

**विधाय ताम्बूलपुटीं कराङ्कगां बभाण ताम्बूलकरङ्कवाहिनी।**
**दमस्वसुर्भावमवेत्य भारतीं नयानया वक्त्रपरिश्रमं शमम्।।**

नै. 12/76

करुणरसस्य वर्णना प्रथमे सर्गे नलेन स्वीकृतस्य हंसस्य मुखेन दृश्यते। यथा–

**मदेकपुत्रा जननीजरातुरा नव प्रसूतिर्वरटा तपस्विनी।**
**गतिस्तयोरेष जनस्तमर्दयन्नहो विधे! त्वां करुणारुणाद्धिनो।।**

नै. 1/135

रौद्ररसस्याभिव्यक्तिः नैषधे यथा–

**जज्वाल ज्वलनः क्रोधादाचख्यौ चाक्षिपन्नमुम्।**
**किमात्थ रे? किमात्थेदमस्मदग्रे निरर्गलम्।।** नै. 17/12

वीररसस्य चतुर्षु भेदेषु दानवीरस्य उदाहरणं यथा–

**अर्थिने न तृणवद्धनमात्रं किं तु जीवनमपि प्रतिपाद्यम्।**
**एवमाह कुशवज्जलदापी द्रव्यदानविधिरुक्ति विदग्धः।।**

नै. 5/86

बीभत्सरसस्य स्थलं यथा–

**संग्रामभूमीषु भवत्यरीणामस्त्रैर्नदी मातृकतां गतासु।**
**तद्वाणधारा पवनाशनानां राजव्रजीयैरसुभिः सुभिक्षम्।।**

नै. 3/38

अद्भुतरसः प्रथमे सर्गे यथा–

**महीमहेन्द्रस्तमवेक्ष्य स क्षणं शकुन्तमेकान्तमनो विनोदिनीम्।**
**प्रिया वियोगाद्विधुरोऽपि निर्भरं कुतूहलाक्रान्तमना मनागभूत्।।**

नै. 1/119

शान्तोऽपि नवमो रसः इति सिद्धान्तं समर्थयन् नैषधे शान्त-रसाभिव्यक्तिः दृश्यते। यथा–

**पदैश्चतुर्भिः सुकृते स्थिरीकृते**
**कृतेऽमुना के न तपः प्रपेदिरे।**
**भुवं यदेकाङ्घ्रिकनिष्ठया स्पृशन्**
**दधावधर्मोऽपि कृशस्तपस्विताम्॥** नै. 1/7

नैषधचरिते ध्वनितत्त्वदिशा काव्यसौन्दर्यमपि अनुभूयते। तत्र द्वितीयसर्गस्य प्रथमपद्ये अभिधामूलध्वनिः यथा–

**अधिगत्य जगत्यधीश्वरादथ मुक्तिं पुरुषोत्तमात्ततः।**
**वचसामपि गोचरो न यः स तमानन्दमविन्दत द्विजः॥**

नै. 2/1

अत्र राज्ञः हस्तात् हंसः मुक्तः इति अर्थप्रतीत्यनन्तरं भगवतः विष्णोः सकाशात् ब्राह्मणोऽपि मुक्तः सन् तमानन्दमविन्दत इति अभिधा-मूलध्वनेः विषयः। एवमन्येऽपि ध्वनिभेदाः ग्रन्थविस्तरभयात् नालोच्यते।

नैषधचरिते अलङ्कारसौन्दर्यं समधिकं प्रतिभाति। शब्दार्थालङ्काराणां प्राचुर्यमत्र विलोक्यते। उपमायाः सौन्दर्यं यथा–

**पतत्रिणा तद् चिरेण वञ्चितं**
**श्रियः प्रयान्त्याः प्रविहाय पल्वलम्।**
**चलत्पदाम्भोरुहनूपुरोपमा**
**चुकूज कूले कलहंसमण्डली॥** नै. 1/127

नैषधे पदलालित्यमिति प्रसिद्धिः। अतः वैदर्भीरीतिमाश्रित्य तदीयकाव्यसौन्दर्यं स्फुटीभवति। तदुक्तमपि तेन–

**धन्यासि वैदर्भि! गुणैरुदारैर्यया समाकृष्यत नैषधोऽपि।**
**इतः स्तुतिः का खलु चन्द्रिकाया यदब्धिमप्युत्तरलीकरोति॥**

नै. 3/116

नैषधे वक्रोक्तिसिद्धान्तस्य चमत्कारः दृश्यते। दिङ्मात्रं तु यथा–

**निषेधवेषो विधिरेष तेऽथवा तवैव युक्ता खलु वाचि वक्रता।**
**विजृम्भितं यस्य किल ध्वनेरिदं विदग्धनारीवदनं तदाकरः॥**

नै. 9/50

काव्यशास्त्रस्य औचित्यतत्त्वमपि नैषधे प्राप्यते। तत्र उत्कलनरेशस्य वर्णनप्रसङ्गे तेषामुदात्तगुणानां औचित्यं सूचितम्।

**आत्मन्यस्य समुच्छ्रितीकृतगुणस्याहोतरामौचिती**
**यद्गात्रान्तरवर्जनादजनयद् भूजानिरेषद्विषाम्।**
**भूयोऽहं क्रियते स्म येन च हृदा स्कन्धो न यश्चानम-**
**त्तन्मर्माणि दलं दलं समिदलं कर्मीणबाणव्रजः॥**

नै. 12/83

**शोधसमस्या–**

यद्यपि नैषधीये बहुविधं सौन्दर्यतत्त्वं परिपूर्णमास्ते, तथापि तेषु किमपि कस्यापि कृते सौन्दर्यप्रतिपादकं भवति, न तु सर्वं सर्वस्य। यथोक्तं लोके–

**दधि मधुरं मधु मधुरं द्राक्षा मधुरा सिताऽपि मधुरैव।**
**तस्य तदेव हि मधुरं यस्य मनो यत्र संलग्नम्॥** इत्यादि।

नैषधे श्रीहर्षोऽप्याह–

**यथा यूनस्तद्वत्परमरमणीयाऽपि रमणी।**
**कुमाराणामन्तः करणहरणं नैव कुरुते॥** इत्यादि।

नै. 22/252

तस्मात् नैषधचरितमहाकाव्यस्य परिशीलनेन यत् सौन्दर्यतत्त्वं प्रतीयते तत्तु "भिन्नरुचिर्हि लोकः" इति कालिदासीयवचनानुसारं रुच्यनुगुणमेव हि तत्तद् सौन्दर्यं तद्विदां हृदयामाह्लादयति।

**सन्दर्भग्रन्थसूची–**

1. नैषधीयचरितम्–आचार्य शेषराजशमरिग्मी, चौखम्बा–सुरभारती प्रकाशन, वाराणसी–2002।
2. नैषधसमीक्षा–प्रो. देवनारायण झा, नागपब्लिशर्स, दिल्ली–2001।
3. महाकवि श्रीहर्ष तथा उनका नैषधकाव्य– आनन्द स्वरूप मिश्र, सुलभ प्रकाशन. लखनऊ, 1988।
4. नैषध का काव्यशास्त्रीय अध्ययन, डा. मथुरा दत्त जोशी, बॉक बिहारी प्रकाशन. आगरा, 1999।

5. नैषध चरित में बिम्ब विधान, रश्मि शर्मा, इन्दु प्रकाशन, दिल्ली, 1993।
6. नैषध चरित में रसयोजना- डॉ. रविदत्त पाण्डेय, दिल्ली, 1979।
7. नैषधीयचरितम् की शास्त्रीय मीमांसा, डॉ. रामबहादूर शुक्ल, ईस्टर्णबुकलिंकर्स, 2005।
8. श्रीहर्षनैषधम्- दर्शनपरामर्शः, डॉ. एम. जयसीताराम शास्त्री, 1987।
9. कालिदास का सौन्दर्यबोध, डॉ. मुकुलरानी त्रिपाठी, परिमलपब्लिकेशन्स, दिल्ली, 1995।
10. संस्कृत साहित्य का इतिहास, आचार्यबलदेव उपाध्याय, 2001।
11. नैषधीयचरितम् का शैलीवैज्ञानिक एवं रीतिशास्त्रीय अध्ययन- डॉ. प्रज्ञा शर्मा, ईष्टर्न, बुक लिंकर्स, दिल्ली, 2009।
12. संस्कृत सुकवि समीक्षा, बलदेव उपाध्याय, चौखम्बा विद्याभवन, वाराणसी, 1987।

# नैषधीये काव्यदोषसम्भावना

डॉ. सुमन कुमार झा

जगत्यस्मिन् बहुधा विपरिवर्तमानायां कालकलायामस्याः काव्यकलाया अपि वैशिष्ट्यंप्रतिपादनाय, गुणावगुणयोः समीक्षणाय, मूल्याङ्कनाय च अनेके विमर्शकाः काव्यरसास्वादनपटीयांसश्चक्षुरुन्मीलनसमर्थं काव्यशास्त्रमवातारयन्। मन्ये-इदमेव **'काव्यशास्त्रविनोदेन कालो गच्छति धीमताम्'** इत्यादिषु निर्दिष्टमिति। नियमश्चायं कश्चन यत् लोकेऽस्मिन् प्रयोजनायोपकल्पितः सर्वोऽपि विषयः तदनुबन्धिशासनकरं शास्त्रमेकमपेक्षत एवेति। यदुक्तम्–

**"अनेकसंशयोच्छेदि परोक्षार्थस्य दर्शकम्।**
**सर्वस्य लोचनं शास्त्रं यस्य नास्त्यन्ध एव सः॥"** इति[1]

एवमालोच्यैव परिकल्पितमिदञ्च शास्त्रम् उत्तरोत्तरमन्तस्तलस्पर्शिनां विदुषां गभीरतरैः विचारैः मार्मिकतायाः सीमानमेवाधिगतं सद् विश्वजनीनं, कविकर्मणः काव्यसाम्राज्यस्यानुशासकं सर्वशास्त्रसाररूपं सम्पद्यते। यत्र हि परीक्ष्यमाणे कविकर्मणि सर्वाऽपि विद्याः काव्यङ्गतया परिगृह्यन्ते यथा चोक्तं– भामहेन–

**"न स शब्दो न तद्वाच्यं न सा विद्या न सा कला।**
**जायते यन्न काव्याङ्गमहो! भारो महान् कवेः॥"**[2]

वस्तुतः भामहाचार्यस्य कथनमिदं सर्वथा सत्यं प्रतिभाति। साहित्यमपि युगधर्ममाश्रयति। अतएव साहित्यं समाजस्य प्रतिबिम्बमिति कथ्यते। संस्कृतसाहित्यं सर्वदा किमपि नूतनं वर्ण्यवस्तु उररीकृत्य तदाधारेण तात्कालिकसमाजस्वरूपं प्रस्तौति। संस्कृतसाहित्ये महाकाव्यानां वैशिष्ट्यं

---

1. हितोपदेशः–श्लोक सं. 10
2. काव्यालङ्कारः, 5.4

स्थानञ्च सर्वथा प्रथितमेव विद्यते। तत्रापि 'बृहत्त्रयी' इति नाम्ना प्रसिद्धं महाकाव्यत्रयं तु– सम्पूर्णसंस्कृतवाङ्मये विशिष्टं स्थानं विभर्तीति, निश्चप्रचम्। बृहत्त्रय्यां प्रथमं महाकाव्यमस्ति महाकवि भारविप्रणीतं किरातार्जुनीयम्। अनेनैव महाकाव्येन सह-संस्कृतसाहित्ये महाकाव्यलेखनस्यैको नवीनो मार्ग आविर्भूतः स मार्गः काव्यशास्त्रविचक्षणैर्विचित्रमार्गनाम्ना अभिहितः। यथा च प्रतिपादितं कुन्तकाचार्येण–

**"प्रतिभाप्रथमोद् भेदसमये यत्र वक्रता।**
**शब्दाभिधेययोरन्तः स्फुरतीव विभाव्यते।**
**सोऽतिदुःसञ्चरो येन विदग्धकवयो गताः।**
**खड्गधारापथेनेव सुभटानां मनोरथाः।।"**[1]

इयं या अलङ्कृतलेखनसरणिः महाकविभारविणा आविर्भूता सैव सरणिः अग्रे शिशुपालवधे नैषधीयचरिते च उत्तरोत्तरं प्रकृष्टतमा सञ्जाता, पल्लविता पुष्पिता च।

नैषधीयचरितमहाकाव्ये कलापक्षं प्रति कवेर्महान् निवेशो दृश्यते। यद्यपि महाकाव्येऽस्मिन् समस्तकाव्यशास्त्रीयतत्वानाम् औचित्यपूर्णं निरूपणं प्राप्यते, येन महाकाव्यमिदं काव्यशास्त्रीयलक्षणानुरूपमस्ति इति समालोचकैः सर्वात्मना स्वीक्रियते, परं तैरेव समालोचकैः तत्र प्रभूतरूपेण काव्यदोषा अपि परिगण्यन्ते, प्रदर्श्यन्ते च।

काव्यशास्त्रस्य विवेच्यविषयेषु दोषविवेचनमतिमहत्वपूर्णमस्ति, यतो हि काव्यं हृद्यं ग्राह्यं, प्रभावोत्पादकञ्च स्यातेतदर्थमदोषत्वमावश्यकम्। दोषाभावादेव काव्ये रमणीयत्वमागच्छति। अतएव शास्त्रकारैः तत्तद्लक्षणशास्त्रीय-ग्रन्थेषु दोषतत्त्वस्य विस्तृतं विवेचनं कृतमस्ति। अपि च प्रायश आचार्यैः प्रदत्तेषु काव्यलक्षणेषु दोषपदसन्निवेशोऽपि कृतः।

सर्वप्रथमं भरतमुनिना उक्तं नाट्यशास्त्रे–

**"एते दोषास्तु विज्ञेयाः सूरिभिर्नाटकाश्रयाः।**

---

1. वक्रोक्तिजीवितम्–प्रथमोन्मेषः–का.सं.--34-43
2. नाट्यशास्त्रम्–16-96

**एत एव विपर्यस्ता गुणाः काव्येषु कीर्तिताः॥"**[2]

तेन दशविधाः काव्यदोषाः स्वीकृताः। यथा–

**गूढार्थमर्थान्तरमर्थहीनं भिन्नार्थमेकार्थमभिप्लुतार्थम्।**
**न्यायादपेतं विषयं विसन्धिं शब्दच्युतं वै दश काव्यदोषाः॥**[1]

तदनन्तरमाचार्यभामहेन स्वग्रन्थे काव्यालङ्कारे उक्तं यत्– काव्ये एकस्यापि सदोषपदस्य प्रयोगो न भवेत्, यतो हि दोषयुक्तकाव्यं कुपुत्र इव निन्द्यते। यथा–

**सर्वथा पदमप्येकं न निगाद्यमवद्यवत्।**
**विलक्ष्मणा हि काव्येन दुःसुतेनेव निन्द्यते॥**
**नाकवित्वमधर्माय व्याधये दण्डनाय वा।**
**कुकवित्वं पुनः साक्षान्मृतिमाहुर्मनीषिणः॥'**[2]

आचार्यदण्डिनाऽपि काव्यदोषपरिहारोऽनिवार्यरूपेण स्वीकृतः तन्मते सुन्दरकाव्यमपि दोषेण असुन्दरं, निन्दापात्रञ्च भवति। यथा–

**"तदल्पमपि नोपेक्ष्यं काव्ये दुष्टं कथञ्चन्।**
**स्याद् वपुः सुन्दरमपि श्वित्रेणैकेनदुर्भगम्॥"**[3]

वामनाचार्येणापि– काव्यालङ्कारसूत्राणीतिग्रन्थे **"गुणविपर्ययात्मानो दोषाः।"**

**अपि च काव्यं ग्राह्यमलङ्काराद्। सौन्दर्यमलङ्कारः। स दोष गुणालङ्कारहानादानाभ्याम्।" स खल्वलङ्कारो दोषहानाद् गुणालङ्कारा-दानाच्च सम्पाद्यः कवेः॥" इति प्रतिपादितम्।**

काव्यलक्षणम् यथा–

**1. तददोषौ शब्दार्थौ सगुणावनलङ्कृती पुनः क्वापि। –काव्यप्रकाशः**

---

1. नाट्यशास्त्रम्–16-89
2. काव्यालङ्कारः–1-11, 12
3. काव्यादर्शः–1-7

**2. निर्दोषं गुणवत् काव्यमलङ्कारैरलंकृतम्।**
**रसान्वितं कविः कुर्वन्कीर्तिं प्रीतिं च विन्दति ॥"[1]**

**दोषाः पदानां वाक्यानां वाक्यार्थानां च षोडश।**
**हेयाः काव्ये कवीन्द्रैर्ये तानेवादौ प्रचक्ष्महे।।"[2]**

3. काव्यं स्फुरदलङ्कारं गुणवद् दोषवर्जितम्– अग्निपुराणम्।

4. दोषाः काणत्वादिवत्–विश्वनाथः।

5. दोषाः तस्यापकर्षकाः–विश्वनाथः।

साक्षात्काव्यस्यात्मभूतं रसमपकर्षयन्तः काव्यस्यापकर्षका इत्युच्यन्ते। –विश्वनाथः।

6. रसापकर्षका दोषाः ते पुनः पञ्चधा मताः। पदे तदंशे वाक्येऽर्थे संभवन्ति रसेऽपि यत्।"–विश्वनाथः।

7. मुख्यार्थहतिर्दोषो रसश्चमुख्यः। तदाश्रयाद वाच्यः। उभयोपयोगिनः स्युः शब्दाद्यास्तेष्वपि सः। –काव्यप्रकाशः।

**8. 'उद्देश्यप्रतीतिविघातलक्षणो दोषः' इति दोषसामान्य-लक्षणम्। उद्देश्या च प्रतीतिः रसवत्यविलम्बितानपकृष्टरसविषया च। नीरसे तु अविलम्बिताचमत्कारिणी चार्थविषया तथा च तादृश-प्रतीतिविघातकत्वं सर्वेषामविशिष्टत्वम्। यतो दुष्टेषु क्वचित् रसस्याप्रतीतिरेव क्वचित् प्रतीयमानस्यापकर्षः क्वचित् विलम्बः इत्याद्याहुः–प्रदीपकाराः।[3]**

**यद्यपि 'अपारे काव्यसंसारे कविरेव प्रजापतिः।**
**यथास्मै रोचते विश्वं तथेदं परिवर्तते।।"**

**"नियतिकृतनियमरहितां ह्लादैकमयीमनन्यपरतन्त्राम्।**
**नवरसरुचिरां निर्मितिमादधती भारतीकवेर्जयति।।"**

---

1. स. कण्ठाभरण–1–2
2. स. कण्ठाभरण–1–3
3. द्र० तत्रैव- का. प्र. प्रदीपयिका

इत्यादि तत्र-तत्र कथितमस्ति तथापि कवीनां कृते केचन नियमास्तु निर्धारिताः सन्ति तेषां परिधौ कवयः काव्यरचनां कुर्वन्ति, तत्र स्वातन्त्र्यस्य सीमां निर्धारिता वर्तते तस्योपेक्षया कवीनां प्रमादत्वं सूच्यते तेन काव्यसौन्दर्यं न्यूनं भवति। अतएव आचार्यैर्निर्दोषत्वमावश्यकमिति भणितम्। मम्मट-श्रीहर्षयोर्मध्ये या किंवदन्ती श्रूयते तस्याः प्रमाणं नोपलभ्यते, यतोहि श्रीहर्षस्य परवर्तिनः समालोचकाः, काव्यशास्त्रकर्तारो रसगुणरीति-अलङ्कारादिप्रकरणेषु नैषधस्य नैकानि पद्यानि उदाहरणाय स्वीकृतवन्तः परं दोषाणां विवेचनक्रमे कदाचिदेव केनापि आचार्येण नैषधस्य पद्यमुपस्थापितं स्यात्। तत्र कारणमिदमेव प्रतीयते यत् नैषधे रस-गुण-रीति-ध्वनि-वक्रोक्ति-औचित्य-अलङ्कारादीनां तादृशं वैशिष्ट्यं वर्तते येन शास्त्रकाराणां दृष्टिः दोषान्वेषणे न प्रवृता।

यद्यपि श्रीहर्षसदृशपण्डितविरचिते महाकाव्ये दोषान्वेषणं कृते दुष्करमेव कार्यम् यतोहि ते स्वयमेव कथयन्ति नैषधे-

**"ग्रन्थग्रन्थिरिह क्वचित् क्वचिदपि न्यासि प्रयत्नान्मया।**
**प्राज्ञेमन्यमना हठेन पठिती मास्मिन्खलः खेलतु।**
**श्रद्धाराद्धगुरुश्लथीकृतदृढग्रन्थिः समासादय-**
**त्वेतत्काव्यरसोर्मिमज्जनसुखव्यासज्जनं सज्जनः॥"**[1]
**"यथा यूनस्तद्वत्परमरमणीयापि रमणी**
**कुमाराणामन्तःकरणहरणं नैव कुरुते।**
**मदुक्तिश्चेदन्तर्मदयति सुधीभूय सुधियः**
**किमस्या नाम स्यादरसपुरुषानादरभरैः॥"**[2]

तथापि यथामति यथाशास्त्रञ्च नैषधीयचरितमहाकाव्ये संभावित-काव्यदोषाउपस्थाप्यन्ते

**1. क्लिष्टत्वदोषः-** यत्राभीष्टार्थप्रतिपत्तये विलम्बः बाधा वा स्यात् तत्र क्लिष्टत्वदोषः भवति। यथा-**"क्लिष्टत्वं यतोऽर्थप्रतिपत्ति-र्व्यवहिता।" इति मम्मटाचार्यः।**

1. नै.-22-153
2. नै.-22-150

नैषधस्य द्वितीयसर्गे यथा–

**"यदगारघटाट्टकुट्टिमस्त्रवदिन्दूपलतुन्दिलापया।**
**मुमुचे न पतिव्रतौचिती प्रतिचन्द्रोदयमभ्रगङ्गया।।"[1]**

अत्राकाशगङ्गया प्रतिचन्द्रोदयं पातिव्रत्यौचित्यं न मुमुचे न त्यक्तम्। किंभूतया यदगारघटानामुपरि गृहास्तेषु बद्धभूमयस्तासु द्रवन्तो य चन्द्रकान्तास्तैः बहुतराणि जलानि यस्यास्तया। चन्द्रोदये समुद्रोदकवृद्धिर्भवति, गङ्गा च तत्पत्नी चन्द्रकान्तगलदुदकसंपर्काद्वर्धत इति पातिव्रत्यौचित्यम्। अर्थोऽयं विलम्बेन बोध्यते। अतएव क्लिष्टत्वम्।

अपि चात्र विरुद्धमतिकृन्नामकदोषोऽपि स्वीकर्तुं शक्यते यतो हि चन्द्रोदयसमये आकाशगङ्गायाः वृद्धिं दृष्ट्वा इदमपि प्रतीयते यत् आकाशगङ्गायाः पातिव्रत्यं चन्द्रं प्रत्येवास्ति।

**2. अप्रयुक्तम्– "अप्रयुक्तं तथा आम्नातमपि कविभिर्नादृतम्।"**
– इति मम्मटाचार्यः।

व्याकरणकोषादिनियमैः शुद्धे सत्यपि कविभिर्ये शब्दाः न प्रयुक्ताः काव्येषु, तादृशानां शब्दानां प्रयोगे सति अप्रयुक्तदोषः स्वीक्रियते। यथा– 'पदम्' शब्दः कोषे पुन्नपुलिङ्गयोरपि प्रयुक्तः। तथापि काव्येषु नपुंसकलिङ्गे एव तस्य प्रयोगो दृश्यते। पुल्लिङ्गे तस्य प्रयोगः चेत् अप्रयुक्तदोषः। यथा नैषधस्य दशमसर्गे–

**पद्मान्हिमे प्रावृषि खञ्जरीटान्क्षिप्नुर्यमादाय विधिः क्वचित्तान्।**
**सारेण तेन प्रतिवर्षमुच्चैः पुष्णाति दृष्टिद्वयमेतदीयम्।।"[2]**

अत्र पद्मं शब्दः पुल्लिङ्गे प्रयुक्तः इति हेतो अप्रयुक्तदोषस्य संभावना।

**3. दुष्क्रमत्वदोषः**– यत्र क्रमः समीचीनः न भवति तत्र दुष्क्रमत्वदोषः। यथा–

---

1. नैषध, 2–89
2. नैषध, 10–120

**"स्मरोपतप्तोऽपि भृशं न स प्रभुर्विदर्भराजं तनयामयाचत।**
**त्यजन्त्यसूञ्शर्म च मानिनो वरं त्यजन्ति न त्वेकमयाचितव्रतम्।।"[1]**

अतिशयेन कामपीडितोऽपि नलो विदर्भदेशाधिपं भीमं कन्यां नायाचत। यतः मानिनो पुरुषाः शर्म=सुखम्, असूंश्च प्राणानपि त्यजन्ति, परं अयाचनरूपं व्रतं नैव त्यजन्तीत्यर्थः। अत्र पाठक्रमादर्थक्रमस्य बलीयस्त्वात् 'शर्म' पदस्य पूर्वमन्वयः इति नैषधीयप्रकाशटीकाकारः श्रीमन्ननारायणः। अतोऽत्र दुष्क्रमत्वदोषस्य सम्भावना जायते।

4. ख्यातिविरुद्धतादोषः-यथा–

**"विचिन्वती पान्थपतङ्गहिंसनैरपुण्यकर्माण्यलिकज्जलच्छलात्।**
**व्यलोकयच्चम्पककोरकावलीः स शम्बरारेर्बलिदीपिकाइव।।"[2]**

अपि च–

**"अलिस्त्रजा कुड्मलमुच्चशेखरं निपीय चाम्पेयमधीरया धिया।**
**स धूमकेतुं विपदे वियोगिनामुदीतमातङ्कितवानशङ्कत।।"[3]**

उपर्युक्तपद्ययोः चम्पक-पुष्पे भ्रमरो तिष्ठतीति प्रदर्श्यते, किन्तु तथ्यमिदं लोकप्रसिद्धिविरुद्धमस्ति। "चम्पकोपरि भ्रमरो न तिष्ठतीति। तत्र तिष्ठति चेत् म्रियते इति प्रामाणिकाः।" इति नैषधीय=प्रकाशटीका। परं जीवातुटीकायां मल्लिनाथेन दोषस्यास्य परिहार एवं क्रियते, यथा–''नन्वयुक्तमिदम्'' न षट्पदो गन्धफलीमजिघ्रत इत्यादौ अलीनां चम्पकस्पर्शाभावप्रसिद्धेरिति चेन्न; स्पृशन्त्येव। किन्तु स्पृष्टा म्रियन्ते, तावतैव स्पर्शाभावप्रसिद्धिरिति क्वचित् कीर्तितः परिहारः।" अथवा चाम्पेयं नागकेसरम्' इति मल्लिनाथः।[4]

**5. दुःश्रवत्वदोषः–** "परुषवर्णतया श्रुतिदुःखावहत्वं दुःश्रवत्वम्।"

---

1. नै.–1–50
2. नैषध–1–86
3. नैषध–1–91
4. नैषधीयप्रकाशटीका–टिप्पणी–पृ.–44
5. साहित्यदर्पणः–7

इति विश्वनाथाचार्यः।

**"इतीरिता पत्ररथेन तेन ह्रीणा च हृष्टा च बभाण भैमी।**
**चेतो नलङ्कामयते मदीयं नान्यत्र कुत्रापि च साभिलाषम्।।[1]**

पद्येऽस्मिन् माधुर्यमूलकश्रृङ्गाररसस्य वर्णनं विद्यते, तत्र 'हृष्टा' इत्यत्र 'टकारप्रयोगात् श्रुतिकटुत्वमनुभूयते। अतः पदगतदुःश्रवत्वस्योदाहरण-मिदम्। इति संभाव्यते।

पद्गतम् अश्लीलत्वं यथा-

**"तव वर्त्मनि वर्ततां शिवं पुनरस्तु त्वरितं समागमः।**
**अयि साधय साधयेप्सितं स्मरणीयाः समये वयं वयः!।।"[2]**

अत्र तव वर्त्म निवर्ततां शिवं, एवं पदच्छेदे सति अमङ्गलार्थस्य प्रतीतिर्जायते। येन अश्लीलत्वदोषस्य सम्भावना जायते।

7. पदगत-जुगुप्सा-यथा-

**"मुनिद्रुमः कोरकितः शितिद्युतिर्वनेऽमुनाऽमन्यत सिंहिकासुतः।**
**तमिस्रपक्षत्रुटिकूटभक्षितं कलाकलापं किल वैधवं वमन्।।[3]**

पद्येऽस्मिन् 'वमन्' पदप्रयोगेण घृणास्पदाभिप्रायो प्रकाश्यते। अत्र 'स्राव' शब्दस्य प्रयोगः समीचीनः। अतोऽत्र "पदगत-जुगुप्सा" इत्यस्या-उदाहरणमिति स्वीकर्तुं शक्यते। व्युत्पत्तये न केवलं शब्दानुशासने प्रावीण्यमपितु काव्यानुशासनेऽपि वैदग्ध्यमावश्यकम्।

**8. अप्रतीत्वदोषः- "अप्रतीतत्वमेकदेशमात्रप्रसिद्धत्वम्।"** यथा-

**"ईशाणिमैश्वर्यविवर्तमध्ये लोकेशलोकेशयलोकमध्ये।**
**तिर्यञ्चमप्यञ्च मृषानभिज्ञरसज्ञतोपज्ञसमज्ञमज्ञम्।।"[4]**

पद्येऽस्मिन् महाकविना विवर्तपदप्रयोगः कृतः। विवर्तपदं वेदान्तशास्त्रे एव प्रसिद्धम्। "अतात्त्विकस्यान्यथा भावो विवर्तः।" प्रकृते विवर्तपदप्रयोगः

---

1. नै.-3-67
2. नै.-2-62
3. नैषध-1-96
4. नै.-3-64

शास्त्रैकदेशे प्रसिद्धत्वात्, साहित्यदर्पणोक्तमुदाहरणं–'योगेन दलिताशय:' इव अप्रतीतत्वस्योदाहरणम्। कवीनां कृते काव्येषु प्रतीतपदानां प्रयोग एव श्लाघनीय: अप्रतीतपदानां नैव।

**9. संदिग्धत्वदोष:– यथा–**

**"स्मितेन गौरी हरिणी दृशेयं वीणावती सुस्वरकण्ठभासा।**
**हेमेव कायप्रभयाऽङ्गशेषैस्तन्वी मतिं क्रामति मेनकाऽपि।।"[1]**

प्रकृतपद्ये गौरीपदं सन्दिग्धं विद्यते। गौरीपदेन न ज्ञायते यत् कवीनां किमत्राभिप्रेतम्–अप्सरा, वीणावती, वेश्या, पार्वती वा। विभिन्नेष्वर्थेषु संदेहजनकत्वात् सन्दिग्धत्वदोषस्योदाहरणमिदमिति संभाव्यते।

**10. च्युतसंस्कारत्वदोष:**– व्याकरणलक्षणहीनत्वं च्युतसंस्कारत्वम्। यथा–

**"हरेर्यदक्रामि पदैककेन खं पदैश्चतुर्भि: क्रमणेऽपि तस्य न।**
**त्रपा हरीणामिति नम्रिताऽऽननैर्न्यवर्ति तैरर्धनभ: कृतक्रमै:।।"[2]**

अत्र 'अक्रामि' इति पदप्रयोग: व्याकरणलक्षणहीनत्वात् च्युतसंस्कारत्वदोषयुक्तोऽस्ति। अक्रमि एव इष्टम्।

"नौदात्तोपदेशस्यमान्तस्यानाचमे:"[3] इति वृद्धिनिषेधात् अक्रामि इति चिन्त्यम्। 'अस्योपधाया' इति सूत्रेणापि दीर्घाभाव:।

"सकृद्बद्धमबद्धे भवति, द्विर्बद्धं सुबद्धं भवति" इति 'तदो दावचनज्ञापितया परिभाषया वृद्धिनिषेधस्यानित्यत्वमाश्रित्य कथंचित्परिहरणीयम्। यदा तु तदो दा च' इत्यत्र स्वरार्थं दा इति प्रत्यय इति पक्षस्तदैतस्या: परिभाषाया निर्मूलत्वाच्चिन्त्यमेव।[4] अतएव मनोरमायां दीक्षितै:– कथं तर्हि–

**"हरेर्यदक्रामि पदैककेन खम्" इति श्रीहर्ष:? प्रमाद एवायम्।"**

---

1. नै.–10–134
2. नै.–1–70
3. पा.–7/3/34
4. नैषधीयप्रकाभटीका– 1/पृ०–35

यदि समाधेयमेव इत्याग्रहस्तर्हि निवृत्तप्रेषणात्प्राकृतेऽर्थे णिचि ततश्चिण् बोध्यः इत्युक्तम्। तथा च णिज्निमित्तिकात्र वृद्धिः।[1]

**रसदोषाः–** काव्यशास्त्रे रसदोषाः विशदरूपेण विवेचिताः सन्ति–

यथा–

**"रसस्योक्तिः स्वशब्देन स्थायिसंचारिणोरपि।**
**परिपन्थिरसाङ्गस्य विभावादेः परिग्रहः।**
**आक्षेपः कल्पितः कृच्छ्रादनुभावविभावयोः।**
**अकाण्डे प्रथनच्छेदौ तथा दीप्तिः पुनः पुनः।**
**अङ्गिनोऽननुसन्धानमनङ्गस्य च कीर्तनम्॥**
**अतिविस्तृतिरंगस्य प्रकृतीनां विपर्ययः।**
**अर्थानौचित्यमन्यच्च दोषा रसगता मताः॥"[2]**

नैषधीयचरिते एकत्र पद–पदांश–वाक्यार्थदोषाणां सत्ता विद्यते, तु अपरत्र रसदोषाणामभावोऽपि नास्ति। यथा–

**1. रसस्य स्वशब्दवाच्यता–**

**"धुतापतत् पुष्पशिलिमुखाशुगैः, शुचेस्तदासीत् सरसी रसस्य सा।**
**रयाय बद्धादरयाश्रुधारया सनाल नीलोत्पललीललोचना॥"[3]**

अत्र रसत्वेनानुभूयमानस्य रसस्य स्वशब्देन कथनं क्रियते, अतः रसदोषस्योदाहरणमिदमिति संभाव्यते। यद्यपि टीकाकारैः तथा नोक्तम्।

**2. शृङ्गारस्य स्वशब्दवाच्यता–**

**"रसस्य शृङ्गार इति श्रुतस्य, क्वनाम जागर्ति महानुदन्वान्।**
**कस्मादुदस्थादियमन्यथा श्रीर्लावण्यं वैदग्ध्यनिधिः पयोधेः॥[4]**

पद्येऽस्मिन् आस्वाद्यत्वेन प्रतीयमानरसः शृङ्गारश्च स्व स्व

1. इति नैषधीयप्रकाशटीका–पृ.–35 –टिप्पणी– पृ. 35
2. सा.दर्पण–7–12–15
3. नै.–9–86
4. नै.–10–115

वाचकपदाभ्यां कथितौ, अतएवात्र रसदोषः संभाव्यते। सर्वत्र दोषस्य संभावना एव क्रियते।

**3. व्यभिचारिभावस्य स्वशब्दवाच्यता–यथा–**

**"अवाप सापत्रपतां स भूपतिर्जितेन्द्रियाणां धुरिकीर्तितस्थितिः।**
**असंवरे शंबरवैरिविक्रमे क्रमेण तत्र स्फुटतामुपेयुषि।।"[1]**

स भूपतिः सापत्रपतामवाप। अन्यतो लज्जापत्रया तया सह वर्तमानः सापत्रपः तस्य भावस्तता तां प्राप। विरहव्यथा लोकेनापि ज्ञातेति सलज्जोऽभूदित्यर्थः।

अत्र लज्जासूचक 'त्रपा' पदप्रयोगेण रसदोषस्य-संभावना।

**4. स्थायिभावस्य स्वशब्दवाच्यता–यथा–**

**"तौमिथो इतिरसायनात्पुनः संबुभुक्षुमनसौ बभूवतुः।**
**चक्षमे नतु तयोर्मनोरथं दुर्जनीरजनिरल्पजीवना।।"[2]**

पद्येऽस्मिन् शृङ्गाररसस्थायिभावः रतिः स्व वाचकशब्देनाभिहिता। अतोऽत्र रसदोषस्य संभावना क्रियते।

इत्थं ज्ञायते यत् यद्यपि नैषधीयचरितमहाकाव्ये समस्तकाव्यशास्त्रीयतत्वानां वैशिष्ट्यं सर्वथा विद्यते एव, परं तत्र दोषा अपि स्वीक्रियन्ते समालोचकैः इत्यलम्।

---

1. नै.–1–53
2. नै.–18–14

# नैषधीयचरिते रसानुगुणसन्निवेशनम्।

डॉ. जयकुमार उपाध्ये

## नैषधचरित का प्रतिपाद्य विषय

महाकवि श्रीहर्ष-रचित एकमात्र उपलब्ध महाकाव्य के रूप में नैषधीयचरित (या नैषधचरित) भारतीय विद्वानों के बीच अत्यधिक प्रसिद्ध है। इसमें नल और दमयन्ती के परस्पर प्रणय एवं परिणय का कथानक है जो महाभारत के वनपर्व से संकलित है। किन्तु उनका सम्पूर्ण आख्यान इसमें नहीं है, विवाह के अनन्तर जो नल-दमयन्ती को कलि के कारण संकट झेलने पड़े वे इसमें वर्णित नहीं हैं। इस महाकाव्य में अल्प कथानक को लम्बे-लम्बे 22 सर्गों में फैलाया गया है जिसमें कवि की कल्पना-शक्ति और तर्क-प्रवणता का महत्त्वपूर्ण योगदान है। इसके केवल दो सर्ग छोटे हैं (सर्ग 13 में 56 पद्य और सर्ग 19 में 67 पद्य), अन्यथा सभी सर्गों में 100 से अधिक ही पद्य हैं, कई सर्गों में 150 से भी अधिक पद्य हैं तथा सर्ग 17 में 222 पद्य हैं। वस्तुतः आकार-प्रकार की दृष्टि से भी यह बृहत्-त्रयी के अन्य काव्यों से (किरातार्जुनीय 18 सर्ग; शिशुपालवध 20 सर्ग) बड़ा है।

सर्गानुसार इसमें कथा इस प्रकार है - (सर्ग 1) नल-दमयन्ती का एक दूसरे के गुणों को सुनकर परस्पर अनुरक्त होना; नल का वन-विहार, एक हंस को पकड़ना किन्तु दयावश छोड़ देना। (2) हंस की कृतज्ञता तथा दमयन्ती का गुणवर्णन, नल के अनुरोध पर हंस का दमयन्ती के पास कुण्डिनपुरी जाना। (3) हंस का दमयन्ती के समक्ष नल का गुणवर्णन, दमयन्ती की नल-विषयक अनुरक्ति तथा हंस का नल के पास प्रत्यावर्तन। (4) दमयन्ती का विकलता, चन्द्रोपालम्भ,

उसके पिता भीमसेन द्वारा स्वयंवर का निर्णय। (5) इन्द्र, अग्नि, यम और वरुण द्वारा नल को दूत बनाकर दमयन्ती के पास भेजना। (6) अदृश्य रूप में नल का दमयन्ती के पास पहुँचना और उसके सौन्दर्य का निरीक्षण। (7) दमयन्ती का नख-शिख-वर्णन। (8) नल का प्रकट होकर देवताओं का सन्देश दमयन्ती को सुनाना तथा उन चारों देवताओं में किसी एक को वरण करने का आग्रह करना। (9) नल-दमयन्ती-संवाद, दमयन्ती का देवताओं को वरण न करने का निश्चय और नल को स्वयंवर में आने के लिए राजी करना। (10) दमयन्ती के स्वयंवर का वर्णन। (11-12) सरस्वती द्वारा स्वयंवर में आये हुए राजाओं का परिचय दिया जाना। (13) इन्द्र, अग्नि, यम और वरुण के अतिरिक्त नल का श्लेषयुक्त पञ्चार्थ-प्रतिपादक श्लोकों में सरस्वती द्वारा वर्णन। (14) दमयन्ती द्वारा देवताओं की स्तुति, देवताओं द्वारा दमयन्ती को श्लेष समझने की शक्ति देना, वास्तविक नल का वरण और देवताओं का आशीर्वाद। (15) विवाह का उपक्रम। (16) विवाह-संस्कार, भोजन तथा नल का अपनी राजधानी लौटना। (17) देवताओं का लौटना, मार्ग में कलि की सेना से भेंट, कलि द्वारा चार्वाक-सिद्धान्त का वर्णन, देवताओं द्वारा खण्डन, नल के विवाह की बात सुनकर कलि का नल को राज्यच्युति और दमयन्ती-वियोग का शाप देना। (18) नल और दमयन्ती का विहार। (19) प्रभात काल में वैतालिक द्वारा नल को जगाना, सूर्योदय तथा चन्द्रास्त का वर्णन। (20) नल और दमयन्ती का प्रेमालाप। (21) नल द्वारा विष्णु, शिव, वामन आदि देवताओं की प्रार्थना। (22) सन्ध्या और रात्रि का वर्णन, चन्द्रोदय एवं दमयन्ती के सौन्दर्य का वर्णन करते हुए ग्रन्थ की समाप्ति की गई है।

आचार्य हेमचन्द्र द्वारा रचित काव्यानुशासनम् में -

**काव्य का प्रयोजन - काव्यमानन्दाय यशसे कान्तातुल्यतयोपदेशाय च।**

**काव्य का कारण - प्रतिभास्य हेतुः।**

इस दृष्टि से नैषध में सहृदयाह्लाद के साथ उदात्तजीवनमूल्यों की

प्रातिभ सरस प्रेरणा दी गई है।

**नैषध में रस योजना -**

काव्य का मूल रहस्य रस योजना है। रससिद्ध कवि की यह परख है कि कहीं भी रसानुभूति में व्याघात न हो। रसानुभूति ही काव्य का चरम उपास्य तत्त्व है, जो कवि की सरस्वती का मनोरम विलास है।

यद्यपि श्रीहर्ष श्रृंगारी कवि हैं। उनका काव्य श्रृंगारामृतसीतगुः है। किन्तु मुख्य रस के अंग रूप में अन्य रसों का भी सुन्दर परिपाक कविप्रतिभा ने किया है। महाकाव्य का महाकाव्यत्व इसी विविधता पर निर्भर है कि उसमें जीवन के सभी चित्र अपने स्वाभाविक रूप में विद्यमान हों। श्रृंगार के सभी भेदों के साथ-साथ वात्सल्य की तरलता और रौद्र की प्रचण्डता के साथ हास्य और अद्‌भुत की छटा, करुण के प्रवाह के साथ शान्त की निश्छल धारा, आदि का निर्वाह काव्य में काव्य की प्राणवत्ता का परिचायक है क्योंकि यही विविधता जीवन में है, जिसका लेखा-जोखा काव्य करता है। अतः काव्य में इस विविधता का दर्शन कराना आवश्यक होता है।

श्रीहर्ष के नैषध में भी यह वैविध्य अपने मनोरम रूप में मिलता है। श्रृंगाररसप्रधान काव्य होने के कारण हम प्रथम इसी पर विचार करेंगे।

श्रृंगार का आधार प्रेम है। क्योंकि रति की उत्तरोत्तर विकासावस्थाओं में प्रथमावस्था प्रेम ही है। यही प्रेम विकसित होकर रस रूप में अभिव्यंजित होता है। पहले हम नैषध के प्रेम पर ही विचार करेंगे।

नैषध का प्रेम दमयन्ती के तप की अग्निशिखा में तप्त शुद्ध प्रेम है। वह प्रेम अभिज्ञान शाकुन्तलम् का प्रेम नहीं है जिसकी पवित्रता की रक्षा, तपोवन की पवित्रता, सखियों की मंगल कामना एवं ऋषियों की साधनायें भी न कर सकीं। न ही नैषध का प्रेम विक्रमोर्वशीय का प्रेम है, जिसकी उद्दाम वासनायें संयम की सीमाओं को भी स्वीकार नहीं करती। इन्द्रसभा में अभिनय के समय भी जो प्रमाद कर बैठता है। नैषध का प्रेम कुमारसंभव का सा दिव्य प्रेम है। जिसकी शंकर स्वयं ब्रह्मचारी

बनकर परीक्षा करते हैं। पार्वती के तप से पवित्र वह दिव्य प्रेम है। जिसके वश में होकर त्रिलोकनाथ को भी कहना पड़ा -

**अद्य प्रभृत्यवनतांगितवास्मि दासः।**

ऐसा ही दिव्य प्रेम नैषध का अपने पिता के अन्तःपुर में अपने अभिलाषित नल को पाकर भी वह उन्मत्त नहीं होती अपितु अपने कर्तव्य का निर्धारण करती है।

दमयन्ती नल प्राप्ति के लिए अपने प्राणों की बाजी भले ही लगा देगी पर अपने कर्तव्य से च्युत नहीं होगी, इसीलिए कहती है। **'वृणे दिगीशानिति का कथा'** तथा -

उसमें वियोग की असह्य ज्वाला के साथ लोकव्यवहार का भी अस्तित्व है। इसीलिए तो नल के हृदय की उस विरहज्वाला को केवल रात्रि जानती थी। शशांककोमला शय्या उसके रात्रि जागरणों की साक्षी थी।

जहाँ उसमें संयोग के वात्स्यायनीय चित्र हैं वहाँ कर्त्तव्य के प्रति जागरूकता भी कम नहीं है। अतः नैषध का प्रेम कर्त्तव्य की अग्निशिखा द्वारा परिष्कृत एंव लोकमर्यादा की सीमा से संरक्षित प्रेम है।

**श्रृंगाररस** - रति का उत्तरोत्तर विकास 'शृंगं-ऋच्छति' इस व्युत्पत्ति के अनुसार उत्तरोत्तर विकसित रतिभाव की अभिव्यंजना ही श्रृंगाररस है।

अग्निपुराण के आधार पर ब्रह्म के सहज आनन्दधर्म से रस की अभिव्यक्ति होती है। उसी का विकास अहंकार है। अहंकार से अभिमान और अभिमान से रतिभाव। यही रति परिपुष्ट होकर श्रृंगार के रूप में परिलक्षित होती है। अन्य सभी रस इसी के भेद हैं।

भोज ने भी अहंकार के अन्तर्गत प्रेम को रखा है। श्रृंगार को एक मौलिक रस मानते हैं और उसकी तीन अवस्था मानते हैं।

प्रथमावस्था अहंकार रूप है। मध्ममावस्था में अहंकार के 49 भावों में अभिव्यक्त किया गया है। तृतीयावस्था में सभी भागप्रेम रूप में

परिणत होकर रस रूप लगने लगते हैं। अतः भोज केवल श्रृंगार रस को प्रकृतरस मानने के पक्षपाती हैं।

रति इसका स्थायी भाव है। रति को हम स्त्री पुरुष का परस्परास्थाबन्ध भी कह सकते हैं। रति का विस्तृत विश्लेषण भावप्रकाशन के चतुर्थ अधिकार में किया गया है। तदनुसार रति युवा प्रेमी युगल का परस्पर स्वयंवेद्य सुखसंवेदनात्मिका अनुभूति है। इसकी उत्तरोत्तर 6 विकासावस्था मानी गई हैं। 1. प्रेम, 2. मान, 3. प्रणय, 4. स्नेह, 5. राग, 6. अनुराग।

यही रति श्रृंगार के रूप में अभिव्यक्त होती है। श्रृंगार के मुख्य दो भेद किये गये हैं 1. संयोग, 2. विप्रलम्भ।

विप्रलम्भ को संयोग से प्रथम स्थान प्राप्त है। क्योंकि बिना विप्रलम्भ के संयोग की सुन्दर पुष्टि नहीं होती, अतः विप्रलम्भ पर हम पहिले विचार करेंगे।

श्रृंगार का जो वियोग पक्ष है उसको काव्यप्रकाश में अभिलाष, विरह, ईर्ष्या, प्रवास और शाप इन पाँच उपभेदों में विभक्त किया गया है।

**पूर्वराग**- रूप सौन्दर्यादि श्रवण दर्शनादि से परस्पर अनुरक्त नायक नायिका की वह दशा जो संयोग से पूर्व होती है वह पूर्वराग विप्रलम्भ कहलाती है।

इसकी दस दशायें कही गई हैं। अभिलाषा, चिन्ता, गुणकथन, स्मृति, उद्वेग, सम्प्रलाप, उन्माद, व्याधि, जड़ता एवं मृत्यु।

नैषध का विप्रलम्भ पूर्वराग के अन्तर्गत आता है। कवि ने नल के जीवन के दमयन्ती की अवतारणा बड़े कौशल के साथ की है। अनुराग दोनों में धीरे-धीरे बढ़ता है। कोई आकस्मिक घटना के रूप में नहीं। नल के आलोक में सामान्यगुण, पराक्रम, अद्वितीयसौन्दर्य, महान् उदारता, अपरिमितयश का परिचय देते हुए कवि पहले नल के अप्रतिम सौन्दर्य के प्रति सुन्दरियों की भावना का चित्रण करता है।

जब नल का सौन्दर्य एक सामान्य का विषय बन जाता है। तब वह रति विशिष्ट न रहकर सामान्य हो जाती है तब बीच में विदर्भजा का परिचय भी कवि दे देता है। इस वयः सन्धि की अवस्था में प्रत्येक कुमारी की जैसी कल्पनायें स्वभाविक होती हैं उसी के अनुरूप दमयन्ती की इच्छा का भी वर्णन कवि करता है। जो पूर्णतः स्वाभाविक लगता है। नल की सम्पत्ति के विषय में एक ही बार नहीं अपितु कई बार अपने पिता के साथ बन्दिचारणों के मुख से उसने सुना था। इसीलिये नल के प्रति इस दशा में आकर्षण स्वाभाविक था।

इस प्रकार नैषध में कवि ने रतिभाव की पुष्टि के लिए दृढ़ आधार निर्मित किया है। जब दमयन्ती के हृदय में प्रिय के लिए स्थान बन जाता है तब यह भी स्वाभाविक है कि प्रिय का वियोग भी हृदय को व्यथित करता है।

सर्वप्रथम प्रियप्राप्ति की अभिलााषा होती है उसका गुण श्रवण अच्छा लगता है। उसके नाम को सुनकर रोमांच भी होता है, कभी कभी एकान्त में अपने प्रिय का काल्पनिक चित्र बनाकर भी कुछ सन्तोष मिलता है यथा अभिलाष -

**कथानुषंगेषु मिथः सखी मुखा त्तृणेऽपि तन्व्या नलनामनि श्रुते।**
**द्रुतं विधूयान्यदभूयतान्या मुदा तदाकर्णनसज्जकर्णया।।**
**( नैषध. 1-35 )**

प्रिय का दर्शन ही नहीं गुण कथन या श्रवण भी कम रुचिकर नहीं होता। दमयन्ती अपने पिता के पास चारणों द्वारा नल की कीर्ति कथामृत का पान करते तृप्त नहीं होती है।

प्रिय का यह विरह चिन्ता से अपरिचित हृदय को भी चिन्तित कर देता है। दमयन्ती भी प्रिय का चिन्तन करते न जाने क्या-क्या सोचती है कभी-कभी तो स्वप्न भी उसी के आते हैं।

**मनोरथेन स्वपतीकृतं नलं निशि**
**क्व सा न स्वपती स्म पश्यति।**
**अदृष्टमप्यर्थमदृष्टवैभवात् करोति**
**सुप्तिर्जनदर्शनातिथिम्।।** (नैषध. 1-39)

निरन्तर उसी का चिन्तन होता है, उसी का मनन, मन करता है। दमयन्ती के हृदय में प्रिय के प्रति जो अनुराग उत्पन्न होता है उसकी पूर्णता में सहायक हंस होता है। उसने नल का जो चित्र दमयन्ती के सामने रक्खा उसे सुनकर कोई भी कुमारी उसके प्रति अभिलाष कर सकती है। फिर दमयन्ती का हृदय तो पहले से ही उस पर अपना सब कुछ न्योछावर कर चुका था। हंस ने उसे प्रगाढ़ प्रेम की स्थिति तक पहुँचा दिया था। रति पूर्णतः विकसित होकर प्रेम बन चुकी थी। इसीलिए दमयन्ती आज उसकी पूर्ति के लिए प्राणों का भी पण लगा सकती है।

**वीररस**-उत्साह का विकास वीररस से है। दान, धर्म, युद्ध एवं दया के रूप में चार भेद माने हैं।

**युद्ध में वीररस का प्रयोग**- प्रथम सर्ग में नल के युद्ध प्रसंग में वीरता का वर्णन करते हुए कवि ने उसे श्रेष्ठ धनुर्धर एवं शत्रुमानमर्दक के रूप में चित्रित किया है।

**स्फुरद्धनुर्निस्वनतद्धनाशुगप्रगल्भवृष्टिव्ययितस्य संगरे।**
**निजस्य तेजःशिखितः परश्शता वितेनुरङ्गारमिवायशः परे।।**
**( नैषध. 1-9 )**

दिग्विजय के सम्बन्ध में पर्याप्त संख्या में शत्रु के नगरों को भस्म कर दिया। अपनी प्रताप ज्योति से दीप्त होकर उसने भूमंडल की प्रदक्षिणा की है।

**अद्भुतरस**- आश्चर्य अद्भुत रस का मूल आधार है। अपने विहार वापी के तट पर एक हंस को देखकर राजा नल के हृदय में कुतूहल होता है। वह विस्मय से उसके जातरूप पंखों को देखकर आगे बढ़ता है। राजा उसे चुपके से जाकर पकड़ लेता है।

**महीमहेन्द्रस्तमवेक्ष्य स क्षणं शकुन्तमेकान्तमनोविनोदिनम्।**
**प्रियावियोगद्विधुरोऽपि निर्भरं कुतूहलाक्रान्तमना मनागभूत॥**
**( नैषध 1-119 )**

स्वयंवर में राजवर्णन प्रसंग में अद्भुत रस का परिपाक मिलता है। कीकटाधिप के वर्णन में तो इसका और भी सुन्दर निर्वाह हुआ है।

**करुणरस-** करूण के लिए वस्तु में अवकाश न रहते हुए भी कवि प्रतिभा ने करुणरस का अवसर खोज ही निकाला है। क्रीड़ासरोवर के तट पर नल ने हंस को पकड़ा। महाभारत का हंस नल से केवल इतना कहता है कि राजन् मुझे मत मारो मैं आपका हित साधन करुँगा। किन्तु कवि ने इसे इतना सरस बनाया कि चार ही पद्यों के करुणा प्रवाह में पाठक बह जाता है।

प्रथम तो हंस नल के कुविक्रम को धिक्कारता है।

**पदे-पदे सन्ति भटा रणोद्भटा न तेषु हिंसारस एष पूर्यते।**
**धिगीदृशं ते नृपते कुविक्रमं कृपाश्रये यः कृपणे पतत्रिणि॥ ( नैषध. 1-132 )**

फिर स्वयं विधि की कठोरता का आख्यान करता हुआ कहता है। हे विधे! तुम भी कितने निष्ठुर हो। पुत्रवती वृद्धा माता एवं नवप्रसूता पतिव्रता पत्नी का एक मात्र आधार हूँ। मेरी इस दशा पर दया नही आ रही।

**हास्यरस-** श्रीहर्ष ने हास्य की व्यंजना भी यत्र-तत्र सुन्दरता से की है। उत्तम एवं निम्न प्रकार के सभी हास्य नैषध में मिलते हैं। जहाँ अवसर मिला छीटा कसने में श्रीहर्ष नहीं चूके हैं।

स्वयंवर में पाण्ड्य नरेश का स्तुतिगान चल रहा है दमयन्ती की सखी उसका अभिप्राय समझकर कहती है-

**शशंस दासींगितविद्विद र्भमितो**
**ननु स्वामिनि पश्य कौतुकम्।**
**यदेष सौधाग्रनटे पटांचले**
**चलेऽपि काकस्य पदार्पणग्रहः।।** (नैषध. 12-21)

राजकुमारी! सौध शिखर पर फहराती ध्वज का काकराज अपना चरण विन्यास करना चाह रहे हैं। अप्रस्तुत में हास्य की सुन्दर व्यंजना हुई है।

**रौद्ररस**- नैषध में क्रोध की व्यंजना भी सुन्दर बन पड़ी है। सत्रहवें सर्ग में अग्नि की क्रोध व्यंजना देखिये-

**जज्वाल ज्वलनः क्रोधादाचख्यो चाक्षिपन्नमुम्।**
**किमात्थ रे किमात्थेद मस्मदग्रे निरर्गलम्।। (नैषध17-72)**

अग्नि के क्रोध का उत्तर दण्डधारी यमराज भी उसी रूप में देते हैं।

**बीभत्सरस**- उपवन विहार के अवसर पर आलम्बन के चित्रण में बिभत्स की भी व्यंजना मिलती है। प्रिया के वियोग से व्यथित नल को उपवन की सुन्दर वस्तुओं के प्रति घृणा होती है।

उन्होंने पलाश के पुष्पों को जो काम के अर्द्धचन्द्राकार बाणों के समान थे, वियोगियों के हृदयमांस के टुकड़े के समान देखा-

**स्मारार्धचन्द्रेषुनिभे क्रशीयसां स्फुटं पलाशेऽध्वजुषां पलाशनात्।**
**स वृन्तमालोकत खण्डमन्वितं वियोगिहृत्खण्डिनि कालखण्डजम्।। (नैषध. 1-84)**

इतना ही नहीं कलिकाओं से युक्त अगस्त्य वृक्ष ऐसा लगा कि मानों राहु ने कृष्ण पक्ष में चन्द्रमा की जिन कलाओं का भक्षण किया वही राहु अब उस चन्द्र कला का वमन कर रहा है।

**भयानकरस**- स्वयंवर के अवसर पर वर माला हाथ में लिए

क्रमशः राजपरिचय प्राप्त करती हुई दमयन्ती वासुकी के पास पहुंची। किन्तु वासुकी के स्फुरित फणों को देख कर प्रथम तो दमयन्ती भय से कम्पित हुई फिर रोमांचित हुई। भय की सुन्दर व्यंजना इस पद्य में इस प्रकार हुई है।

**तद्विस्फुरत्फणविलोकनभूतभीतेः कम्पं च वीक्ष्य पुलकं च ततोऽनु तस्याः।**
**संजातसात्त्विकविकारधियः स्वभृत्यान्नृत्यान्न्यषेद्यदुरगाधिपतिर्विवक्षः।। (नैषध 11-21)**

कलिंगराज के प्रताप वर्णन के अवसर पर भी अनेक प्रताप से भयभीत शत्रुओं के भय की सुन्दर व्यंजना हुई है।

**भावरस**- नैषध में सभी रसों एवं भावों की सुन्दर अभिव्यक्ति हुई है।

उपसंहार

**अपारे काव्यसंहारे कविरेकः प्रजापतिः**
**यथास्मै रोचते विश्वं तथोदं परिवर्तते।।**

"अपार काव्य-संसार में कवि ही एक प्रजापति है। उसे जैसा रुचता है, वैसा सब कुछ पलट जाता है।" कवि तो ऋषि भी हो सकता है और वर्णनानिपुण भी होता है। वस्तुतः तो रस कवि में ही विद्यमान होता है।

**रसलक्षणम्- विभावानुभावव्यभिचा-**
**रिभिरभिव्यक्तः स्थायी भावो रसः।**
**रसभेदाः- श्रृङ्गारहास्यकरुणरौद्रवीर-**
**भयानका बीभत्साद्भुतशान्ता नव रसाः।**

**"रसादिध्वनिनिरूपणं विना दोषादिनिरूपणमेव न स्यात्। दोषगुणालङ्काराणां साक्षात् परम्परया वा रसाश्रितत्वात्" एतदर्थम् आचार्यमम्मटेन पूर्वं रसादिध्वनेः निरूपणं चतुर्थोल्लासे कृतम्।**

## रससिद्धान्त

काव्यशास्त्रीय क्षेत्र में जितना समादर रस को मिला, उतना किसी अन्य काव्य-तत्त्व को नहीं। भरत को रस-तत्त्व का प्रवर्त्तक समझा जाता है। उन्होंने इसे नाटक के अनिवार्य धर्म के रूप में स्वीकार किया है।

काव्य की आत्मा के प्रसंग में रस-सिद्धान्त पर प्रकाश डालने से पूर्व यह स्पष्ट कर देना आवश्यक है कि रस शब्द का प्रयोग दो अर्थों में होता है। (1) काव्यानन्द, काव्याह्लाद (2) 'रसादि-ध्वनि' अर्थात् ध्वनि। काव्य की आत्मा के प्रसंग में हमें रस शब्द का केवल पहला अर्थ ही अभीष्ट है।

## संदर्भग्रंथ सूची

1) शृङ्गार रस का शास्त्रीय विवेचन-डॉ. इन्द्रपाल सिंह, चौखम्बा संस्कृत सीरीज ऑफिस, वाराणसी, 1967

2) काव्यात्म-मीमांसा- डॉ. जयमन्त मिश्र, चौखम्बा विद्याभवन, वराणसी, 2005

3) नैषधमहाकाव्यम् - पं. हरगोविन्द शास्त्री, चौखम्बा संस्कृत सीरीज ऑफिस, वाराणसी, 1967

4) भानुदत्त रचित रसतरंगिणी- उर्मिल शर्मा, परिमल पब्लिकेशन्स, दिल्ली, 1988

5) काव्यप्रकाशविमर्श:- डॉ. सुमन कुमार झा, अभिषेक प्रकाशन, दिल्ली, 2007

6) काव्यानुशासनम् श्रीहेमचन्द्रविरचितं- श्री विजयमहोदयसूरि, प्रवचन प्रकाशन, पूना, 2002

7) रसाभिव्यक्ति- डॉ. दशरथ द्विवेदी, विश्वविद्यालय प्रकाशन, वाराणसी, 2001

8) काव्यशास्त्र के परिदृश्य- सत्यदेव चौधरी,

9 ) संस्कृतसाहित्य का इतिहास- डॉ. उमाशङ्कर शर्मा 'ऋषि', चौखम्बा भारती अकादमी, वाराणसी, 2010

10 ) महाकाव्य में नैषधीय चरितम् का मूल्यांकन- डॉ. हरिवीर सिंह बघेला, वाई. के पब्लिशर्स, आगरा, 2000

# नैषधीयचरिते रीतयः

**विवेकानन्दभट्टः**

संस्कृतकाव्येषु गुणालङ्कारछन्दसां सदृशं रीतिरपि प्रमुखतत्त्वरूपेण भवति। का नाम रीतिः ? कति विधा च सा ? इत्यस्मिन् विषये प्रथमं काव्यशास्त्रीयपक्षमुपस्थापयामि। काव्यरचनाकारैः यया पद्धत्याश्रयेण काव्य रचनाभीष्टा भवति सैव संस्कृत-वाङ्मये रीतिरिति कथ्यते। रीङ् गतौ अथवा रीङ् स्रवणे धातोः क्तिन् प्रत्यये सति रीतिः शब्दो निष्पद्यते। '' रियन्ते परम्परया गच्छन्ति अनया '' इति रीतिः। ऋग्वेदे रीतिशब्दस्य प्रयोगोऽनेकेषु स्थलेषु दरीदृश्यते।

**'' महीवरीतिः शवसारसत पृथक्''**[1]
**'' वातेवाजुर्यानद्येवरीतिः''**[2]

अग्निपुराणे वाग्विद्यायाः परिज्ञानार्थे रीति शब्दस्य प्रयोगोऽस्ति।

**'' वाग्विद्या संप्रतिज्ञाने रीतिः सापि चतुर्विधा''**[3]

आचार्यभरतेनापि नाट्यशास्त्रे चतुर्विधा प्रवृत्तिर्निरूपिता उक्तं येन

**चतुर्विधा प्रवृत्तिः च प्रोक्ता नाट्यप्रयोक्तृभिः।**
**आवन्ति दाक्षिणात्या च पाञ्चाली चैव मागधीः।।**[4]

अत्र भरतानुसारेण पृथिव्यां नानादेशवेषभाषाचारवार्ताः ख्यापयतीति प्रवृत्तिः। भामहाचार्यः द्विविधा रीतिर्निरूपयति वैदर्भी गौडी च। विषयेऽस्मिन्

---

1. ऋग्वेदः-1/28/14
2. ऋग्वेदः-2/39/5
3. अग्निपुराण-340/1
4. नाटयशास्त्रम्-13/36

आचार्यदण्डी कथयति शास्त्ररचनायां मार्गद्वयो भवति वैदर्भी गौडी च अर्थात् दाक्षिणात्यपद्धतिः वैदर्भी पौरस्त्यपद्धतिः गौडीयमार्गमिति। असौ सर्वप्रथमं रीतिशब्दस्य कृते मार्गशब्दस्य प्रयोगं करोति। उक्तं तेन काव्यादर्शे-

**अस्त्यनेको गिरां मार्गः सूक्ष्मभेदः परस्परम्।**
**तत्र वैदर्भगौडीयौ वर्ण्येते प्रस्फुटान्तरौ ॥**[5]

वामनाचार्यः काव्यस्यात्मतत्त्वरुपेण रीतिं स्वीकरोति। आनन्दवर्धनाचार्यः सङ्घटना नाम्ना रीतिं स्वीकृत्य तत्स्वरूपञ्च निरूपयति -

**असमासा समासेन मध्यमेन च भूषिता।**
**तथा दीर्घसमासेति त्रिधा सङ्घटनोदिता॥**[6]

आनन्दवर्धनाचार्यानुसारेण सङ्घटना रसादीन् व्यनक्ति गुणानाश्रित्य तिष्ठन्तीति। अनेन प्रकारेण उत्तरवर्तिनः नैके आचार्याः स्वग्रन्थेषु रीतीनां भेदान् निरूपयन्ति तेषु राजशेखर-मम्मट-विश्वनाथ-जगन्नाथादया-प्रमुखाः। इति रीतीनां काव्यशास्त्रीयः पक्षः।

संस्कृतकाव्येषु बृहत्त्रयीति नाम्ना किरातार्जुनीयम्, शिशुपालवध म्, नैषधीयचरितञ्चेति प्रसिद्धा ग्रन्थाः। स्वबृहदाकारैः काव्यकलासौष्ठवैश्च एते बृहत्त्रयीमिति उच्यते। महाकाव्यलक्षणस्यानुसारेण रचितेषु ग्रन्थेषु रसगुणालङ्काराणां यादृशं संयोजनं दरीदृश्यते तादृशं नान्यत्र। काव्यशास्त्रकारैः काव्यानां कृते यद्-यद् लक्षणं प्रदत्तं तत्सर्व एतेषु प्राप्यते। गुणालङ्काराणां सदृशमेव रीतीनां संयोजनमपि विशिष्टरूपेण ग्रन्थकारैः क्रियते। भारविमाघ-श्रीहर्षेषु उत्तरोत्तर वैदुष्यता दृश्यते यथा हि उक्तं केनचित्-

**तावद् भा भारवेर्भाति यावन्माघस्य नोदयः।**
**उदिते नैषधे काव्ये क्व माघः क्व च भारविः॥**

त्रिषु ग्रन्थेषु अन्तिमं नैषधीयचरितमहाकाव्यं काव्येषु सर्वश्रेष्ठ-महाकाव्यरूपेण स्थानं भजति। श्री हर्षेण अस्मिन् महाकाव्ये पाण्डित्यपूर्णरूपेण

---

5. काव्यादर्शः-1/40
6. ध्वन्यालोकः-3/5

सर्वेषां शास्त्राणां नियमानां समायोजनं विशिष्टरूपेण क्रियते। ग्रन्थस्य कथावस्तुः पौराणिकी भूत्वापि नवनवोन्मेशशालिनी, अलौकिकी, मनोहारिणी चास्ति। द्वाविंशतिसर्गेषु विभक्तेऽस्मिन् ग्रन्थे श्रृङ्गाररसस्य प्राधान्यमस्ति। गुणेषु माधुर्य, औज-प्रसादादिगुणानां निरूपणं, रीतिषु वैदर्भीगौडीपाञ्चालीनां प्रयोगः दृश्यते। वैदर्भी तु ग्रन्थे प्रमुखरूपेण विराजते। तद्यथा-

**धन्यासि वैदर्भि! गुणैरुदारैर्यया समाकृष्यत नैषधोऽपि।**
**इतः स्तुतिः कः खलु चद्रिकाया यदब्धिमप्युत्तरलीकरोति॥**[7]

अत्र धन्यासि वैदर्भीरित्यनेनास्मिन्ग्रन्थे ग्रन्थकृता वैदर्भीरीतिरादृतेति ध्वन्यते। मल्लिनाथानुसारेण धन्येति। हे वैदर्भी। भैमि। वैदर्भीरीतिरपि गम्यते।

अपि च -

**नलेन भायाः शशिंना निशेव त्वया स भायान्निशया शशीव।**
**पुनः पुनस्तेद्युगयुग्विधाता योग्यामुपास्ते नु युवां युयुक्षुः॥**[8]

ग्रन्थस्य चतुर्दशसर्गे तु वैदर्भी इतोऽपि मनोहारिणि प्राप्यते।

**गुणानामास्थानीं नृपतिलकनारीति विदितां**
**रसस्फीतामन्तस्तव च तव वृत्ते च कवितुः।**

**भवित्री वैदर्भीमधिकमधिकण्ठं रचयितुं**
**परीरम्भक्रीडाचरणशरणामन्वहमहम्॥**[9]

अत्र प्रसिद्धव्याख्याकारेण नारायणरामेण नारायणीव्याख्या कृता। " हे नृपतिलक राजश्रेष्ठ नलः। अहं वैदर्भी भैमीम् अथ च वैदर्भीसंज्ञां रीतिमल्पपदसमासमसमासा वा रचना विशेषं क्रमेण तव नलस्य तव च वृत्ते त्वत्संबन्धिनि चरित्रे विषये कवितुः काव्यकरणोद्युक्तस्य श्रीहर्षादेश्चधिकण्ठं कण्ठेऽन्वहं सदा परीरम्भस्यालिङ्गनस्य चुम्बनादि विलासस्य यदाचरणं

---

7. नैषधीयचरितम्-3/116
8. नैषधीयचरितम्-3/117
9. नैषधीयचरितम्-14/91

करणं तदेवशरणं जीवनोपायो यस्या एवं भूताम्। परीरम्भक्रीडया वा हेतुभूतया त्वच्चरणशरणमालिङ्गन प्रार्थनार्थं त्वच्चरणयोः पतन्तीम् अथ च परीरम्भस्य श्लेषालङ्कारस्य क्रीडाया वक्रोक्तिविलासस्य आ सामस्त्येन यच्चरणं ज्ञानं तदेव शरणं यस्यामेवं विधाम्। अधिकं यथा तथा नितरां रचयितुं कर्तुं भवित्री भविष्यामि। किं भूताम् ? गुणानां सौन्दर्यपातिव्रत्यादीनाम्। अथ चश्लेषप्रसादादीनाम् आस्थानां सभारुपामवस्थिति भूताम्। तथा- नारी इति स्त्री विदितां नारीचेत् तर्हि भैम्येव नान्येति प्रसिद्धाम्। अथ च रीतिषु पाञ्चाल्यादिषु विदिता, तथा न इत्यरीति विदिता तथा विधापि न इति नारीति विदिता तादृशीम् पाञ्चाल्यादिरीतिषु मध्येऽति प्रसिद्धामिति यावत् तथा तावन्तः हृदये रसेन स्वीयसौभाग्येन नलविषयानुरागेण स्वस्मिन् नलानुरागेण वा स्फीतामतिपुष्टाम्। अथ च अन्तः श्लोकमध्येरसैः श्रृङ्गारादिभिः परिपुष्टाम्। एवंभूताभैमीं त्वत्कण्ठालिङ्गनपरां त्वच्चरणशरणां त्वदेकवश्यां प्रत्यहमहं करिष्यामि। त्वच्चरितवर्णयिश्तुश्च कण्ठे एवं भूतां वैदर्भीरीतिमधिकं च रचयिष्यामि। वैदर्भीमेव रमणीयां रीतिमवलम्ब्य त्वच्चारितवर्णको यथा भवति तथाहं करिष्यामि इति भावः।

ग्रन्थे यत्र-तत्र दीर्घसमासेन युक्ता रचना गौडीशैल्यामपि दृश्यते।

**स्फुरद्धनुर्निस्वनतद्धनाशुगप्रगल्भवृष्टिव्ययितस्य सङ्गरे।**
**निजस्य तेजः शिखिनः परश्शता वितेनुरिङ्गालमिवायशः परे।।**[10]

**अनल्पदग्धारिपुरानलोज्ज्वलैर्निजप्रतापैर्वलयं ज्वलद्भुवः।**
**प्रदक्षिणीकृत्य जयाय सृष्टया रराज नीराजनया स राजघः।।**[11]

युद्धे राजानलस्य शराणां वर्णनं गौडीरीत्यामद्भुतरूपेण दृश्यते। अथ च राजघः स अनल्पदग्धारिपुरानलोज्ज्वलैः निजप्रतापैः जयाय सृष्टया नीराजनया ज्ववलद्भवः वलयं प्रदक्षिणीकृत्य रराज इति।

'' नैषधे पदलालित्यम् इति ग्रन्थे स्पष्टतया दृश्यते। माधुर्यादिगुणैः, पाञ्चालीरीत्यां विप्रलम्भश्रृङ्गारस्य वर्णने अनुप्रासयमकादि अलङ्काराणां

---

10. नैषधीयचरितम्-1/9
11. नैषधीयचरितम्-1/10

प्रयोगः अद्वितीय अनुपमश्च।

**अहो अहोभिर्महिमा हिमागमे**
**ऽप्यभिप्रपेदे प्रति तां स्मरार्दिताम्।**
**तपर्तुपूर्तावपिमेदसां भरा**
**विभावरीभिर्बिभरांबभूविरे।।**[12]

अत्र विशेषोक्तिरलङ्कारस्याऽपि सम्भावना अस्ति। श्रृङ्गाररसे वर्णित-पद्ये अद्वितीयसौन्दर्यमस्ति। एकादशसर्गे तु अयं इतोऽपि परिपुष्टरूपेण दृश्यते।

**तत्रावनीन्द्रचयचन्दनचन्द्रलेप**
**नेपथ्यगन्धवहगन्धवह प्रवाहम्।**
**आलीभिरापतदनङ्ग शरानुसारी**
**संरुध्य सौरभमगाहत भृङ्गवर्गः।।**[13]

अपि च–

**देवी पवित्रित चतुर्भुजवामभागा**
**वागालपत्पुनरिमां गरिमाभिरामाम्।**
**अस्यारिनिष्कृपकृपाणसनाथपाणेः**
**पाणिग्रहादनुगृहाण गणं गुणानाम्।।**[14]

पाञ्चालीरीत्यां रचितयोः श्लोकयोः यमकालङ्कारस्य प्रयोगेन पदलालित्यम् अतीव मनोरमं दृश्यते। अनेन प्रकारेण ग्रन्थे अनेकेषु स्थलेषु रीतीनां समायोजनं ग्रन्थकारैः क्रियते। अत्र तु मया दिङ्मात्रेण उपस्थापितम्। एवमत्राहं नैषधे रीतिसौन्दर्यं संक्षेपेण समुस्थाप्य विरमामीति शम्।

---

12. नैषधीयचरितम्–1/41
13. नैषधीयचरितम्–11/5
14. नैषधीयचरितम्–11/66

# नैषधीयचरितमहाकाव्ये सामाजिकचित्रणम्

राजकुमारपिलवालः

काव्यहेतुषु आचार्यमम्मटेन यत्र शक्तेः कवित्वबीजरूप-संस्कारविशेषस्य प्रथमं स्थानं प्रकटीकृतम् तत्रैव लोकशास्त्राद्यवेक्षणस्य निपुणतापि द्वितीये स्थाने स्थापिता।[1] वस्तुतो यदि कविर्लोकावेक्षणं विना काव्यनिर्माणे प्रवर्तते तदा स चत्वारो मूर्खपण्डिता इव उपहास्यतामेव गच्छति। लोकावेक्षणं तदनुकूलवर्णनमेव कवेः काव्यकौशलं प्रकटयति। कविः स्वकाव्यस्य मूलप्रेरणां स्वसमयस्य सामाजिकस्थित्या एव स्वीकरोति।

अत्र मया महाकवेः श्रीहर्षस्य नैषधीयचरितमहाकाव्यस्य सामाजिकचित्रणं समुपस्थापनीयमस्ति। तत्कालिकस्य समाजस्य साङ्गोपाङ्ग चित्रणं महाकविना कृतमस्त्यत्र महाकाव्ये। तात्कालिकः समाजः हिन्दूध र्मानुवर्ती आसीत्।

**यज्ञप्राधान्यम्-**

यज्ञाः भारतीयसंस्कृतेः प्रधानान्यङ्गानि सन्ति। महाकाव्येऽस्मिन् नलोऽपि अनेकान् यज्ञान् सम्पादितवान्। विवाहानन्तरं नलस्तु प्रभातस्नानं विधाय सन्ध्यावन्दनादिकर्म करोति। तदनन्तरं नलो यज्ञशालायां गत्वा यज्ञादिक्रिया सम्पादयति।

**वर्णव्यवस्था -**

तदा समाजश्चतुर्षु वर्णेषु विभक्तः आसीत्। ब्राह्मणः, क्षत्रियः, वैश्यः, शूद्रश्चेति।

**ब्राह्मणः-** ब्राह्मणानां विशिष्टं स्थानमासीत्। ब्राह्मणो मधुपानं न करोति स्म। गोब्राह्मणदेवानां च समाजे-आदरमासीत् परञ्च

बौद्धचार्वाकमतानुयायिन एतेषां विरोधमपि कुर्वन्ति स्म। ब्राह्मणः शापमपि यच्छति-

**देवैर्द्विजैः कृता ग्रन्थाः पन्था येषां तदादृतौ।**

**गां नतैः किं न तैर्व्यक्तं ततोऽप्यात्माऽधरीकृतः॥**[2]

विद्याया उपयोगश्चतुर्भिः प्रकारैः भवति अध्ययनावबोध ाचरणप्रचारश्चेति। चतुर्दश-अष्टादश वा विद्यानामध्ययनं भवति स्म। शास्त्रमेकं नयनं मन्यते।[3]

**क्षत्रियः**- क्षत्रियः प्रायो राजकार्यं करोति स्म। राजा अष्टानां लोकपालानामंशः मन्यते। राजकुमारः वेदाध्ययनेन सह अस्त्रशास्त्रादीनामपि शिक्षां प्राप्नोति। राजा मृगयायां जीवहिंसामपि करोति।[4]

राजा दानी पराक्रमी च भवति। तस्य यशः दिग्दिगन्तं प्रसरति। राजाप्रतिदिनं ब्राह्मणेभ्यो दानं ददाति। क्षत्रियो वीरो रणे वीरगतिं प्राप्य स्वर्गमेव गच्छति इति मन्यते। रणक्षेत्रात् पलायनम् अकीर्तिकरं भवति।

**वैश्यः**- नैषधे यद्यपि वैश्यवर्णस्योल्लेखो विशिष्टरूपेण नावलोक्यते तथापि महाकविना तत्कालीना राज्य व्यवस्थाया वर्णने वाणिज्यव्यापारस्यापि वर्णनं कृतमस्ति। अत एव वक्तुं शक्यते यद् वैश्य एव समाजे व्यापारं करोति स्म। यथोक्तं कविना-

**बहुकम्बुमणिर्वराटिका गणनाटत्करकर्कटोत्करः।**

**हिमवालुकयाच्छबालुकः पटुदध्वान यदापणार्णवः॥**[5]

**शूद्रः**- शूद्रजना वेदवाक्यश्रवणाधिकारिणो न भवन्ति स्म। चाण्डालश्चतुर्भिर्वर्णैः बहिष्कृतो भवति स्म। धनुर्बाणनिर्माणं तस्य प्रमुखं कार्यं भवति। तस्यावासस्थानं वनमेव भवति। समाजे तस्य निवासो वर्जितो भवति। स मधुपानं करोति। तस्य अङ्गुलिश्छिन्ना भवति।[6]

द्विजस्तु तस्यावलोकनं न करोति। दासप्रथापि प्रचलितासीत्। यथोक्तं कविना-

**तदास्यदास्येऽपि गतोऽधिकारितां न शारदः पार्विकशर्वरीश्वरः।**[7]

**आश्रमव्यवस्थाः-**

ब्रह्मचर्यगृहस्थवानप्रस्थसंन्यासाख्याश्च चत्वार एवाश्रमाः आसन्। चत्वार आश्रमाः स्व-स्व मर्यादानुकूलमेव कर्तव्यपालने निरताः आसन्।[8]

**ब्रह्मचर्याश्रमः**- आश्रमेऽस्मिन् ब्राह्मणबालो गुरुसमीपे विद्याध्ययनं करोति तथा भिक्षाटनेन जीवनयापनं करोति स्म। शिलोञ्छवृत्तिद्वारापि जीविकां नयति इति वृत्तिः पुण्यमयी कथ्यते। यथोक्तं नैषधे-

**त्वया जगत्युच्चितकान्तिसारे**
**यदिन्दुनाशीलि शिलोञ्छवृत्तिः।**
**आरोपि तन्माणवकोऽपि मौलो**
**स यज्वराज्येऽपि महेश्वरेण॥**[9]

ब्राह्मण (ब्रह्मचारी) मौञ्जीमेखलां धारयति स्म। पुस्तकानि हस्तलिखितानि भवन्ति स्म।[10]

**गृहस्थाश्रमः**- अत्र गृहस्थो गृहनिर्माणं विधाय तिष्ठति स्म। सर्वेषु आश्रमेषु गृहस्थाश्रमः श्रेष्ठो मन्यते। गृहस्थोऽपि वेदाध्ययनं करोति तथा तस्य श्रेष्ठं कम अतिथिसत्कारः वर्तते।[11] भारतीयसंस्कृतौ ''अतिथि देवो भव'' इति वाक्यं प्रसिद्धमस्ति।

**वानप्रस्थाश्रमः**- वानप्रस्थाश्रमे अपि अतिथिसत्कारं भवति-

**स्थितैः समादायमहर्षिवार्धकाद्वने तदातिथ्यमशिक्षि शाखिभिः।**[12]

**संन्यासाश्रमः**- संन्यासी दण्डं धारयति स्म। ब्रह्मसाक्षात्काराय योगी कृतप्रयत्नो भवति स्म। यथोक्तं कविना-

**''योगिनां तु तपसाखिलसिद्धिः''**[13]

**पुरुषार्थचतुष्टयम् -**

**धर्मः** - पुरुषार्थचतुष्टये धर्मस्य सर्वोपरि स्थानं विहितम्। महाकाव्येऽस्मिन् धर्मस्यातिशयं महत्त्वं स्पष्टीकृतं कविना। नलः मूर्तिभूतो धर्मः। नलः प्रातःकाले मध्यान्हें, सन्ध्यायां च देवोपासनां करोति स्म। नैषधे देवपूजनस्य विविधविधयः प्रोक्ता कविना। अत्र पुष्पैर्देवार्चनं भवति

स्म। नैवेद्यार्थं दध्यादीनां व्यवस्था आसीत्। नलः सुगन्धितचन्दनैः कुसुमैः ऋतुजैः प्रफुल्लितैः गुरुमाल्यैश्च सुरानपूपुजत्। यथाहि-

**पूतपाणिचरणः शुचिनोच्चैरध्वनानितरपादहतेन।**

**ब्रह्मचारिपरिचारि सुरार्चावेश्म राजऋषिरेष विवेश।।[14]**

तत्र दमयन्ती अपि भगवतीं गौरीं सम्पूज्य अनेकासां देवीनाम् आराधनां करोति।[15] इत्थं तात्कालिके समाजे देवोपासनां पुरुषा नार्यश्चापि निरता आसन्निति महाकाव्येऽस्मिन् सर्वत्रावलोक्यते।

**अर्थ**- नलस्तु चक्रवर्तिसमाड़स्ति महाकाव्येऽस्मिन्। अष्टादशसर्गे नलस्य राजवैभववर्णने अर्थस्य प्राधान्यं वर्णितमस्ति।[16] इत्थमत्र नलराज्यवैभवस्य वर्णनेन तस्य अर्थपुरुषार्थसम्पन्नता दर्शिता।

**कामः**- महाकाव्यस्यास्याष्टादशसर्गादारभ्यः द्वाविंशतितमं सर्गपर्यन्तं नलस्य दैनिकजीवनस्य वर्णनं कृतमस्ति कविना श्रीहर्षेण। अत्र नलस्य जीवनचर्यायाः सरसं चित्रणं प्राप्यते। अष्टादशे सर्गे सम्भोगश्रृङ्गारस्य विस्तरेण निरूपणं कृतमस्ति। अतोऽत्र कामपुरुषार्थः वर्णितः।[17]

**मोक्षः**- पुरुषार्थेषु मोक्ष एव पर पुरुषार्थः। मोक्षस्य कृते ध र्माचरणं परमावश्यकं भवति। अत एव मोक्षपुरुषार्थ वर्णयितुमेव एकविंशतिसर्गस्य कल्पना कृता वर्तते कविना।[18]

नलस्य देवाराधनं तु मया पूर्वमेव वर्णितम्। वृद्धावस्थायां पुत्रायेन्द्रसेनाय राज्यपदं दत्वा वानप्रस्थाश्रमानुसारं नलः दमयन्त्या सह वनं प्रति गतवान्।

**आदर्शप्रतीको विवाहः**-

अत्र कविना विवाहस्य प्रकाराः न कुत्रापि वर्णिताः। केवलं स्वयंवरवर्णनं विहितमस्ति। तदानीं स्वयंवरप्रथा प्रचलिताऽऽसीत्। दमयन्त्याः विवाहः स्वयंवरप्रथायाः उदाहरणमास्ते। कन्यायाः विवाहोचितावस्थामवलोक्य महाराजो भीमः दमयन्त्याः परिणयार्थे स्वयंवरावाहनस्य व्यवस्थां सम्पादितवान्। तत्र सत्कुलोत्पन्नः रूपयौवनसम्पन्नः कुमारः स्वयंवरे आगच्छति।[19] स्वयंवरे युवकाः स्वगोत्रचरित्रादीनां परिचयं ददति। अन्ते कन्या यस्या वरणं करोति

तस्य ग्रीवायां दूर्वाङ्कुरां मधुकमालां समर्पयपति। स्त्रियः मंगलगानं कुर्वन्ति। विविधवाद्ययन्त्राणामपि वादनं भवति। सौभाग्यवत्यः स्त्रियः कन्यां मंगलस्नानं कारयन्ति। वरस्यापि विवाहोचितश्रृङ्गारः भवति। रात्रौ एव वरयात्रा भवति। कन्यापक्षीयः तेषां स्वागतार्थं गच्छति। वरयात्रायां चतुरङ्गिणी सेना भवति। यथोक्तं महाकविना–

**परार्ध्यवेशाभरणैः पुरः सरैः**
**समं जिहाने निषधावनीभुजि।**
**दधे सुनासीरपदाभिधेयतां**
**स रूढ़िमात्राद्यदि वृत्रशात्रवः।।**[20]

विवाहे कन्यायाः पिता उपहारार्थमनेकानि वस्तुनि ददाति। पुत्र्याः विदावेलायां तस्य सम्बन्धिनः किञ्चिद् दूरपर्यन्तं गच्छन्ति।

**मनोविनोदाः–**

उद्यानविहारादि मनोविनोदस्य साधनमासीत्। नृपादयः मनोविनोदाय उद्यानं गच्छन्ति स्म।[21] हासपरिहासमपि मनोविनोदार्थं प्रचलति स्म। यथा नलस्य विवाहावसरे वरयात्रिभिः सह हासपरिहासं कुर्वन्ति वधूपक्षतः स्त्रियः।[22]

भोजनात् परं शुककोकिलवीणावादनेन मनोविनोदं करोति। बालक्रीड़ायां बालः कर्परीखण्डेन जलं दोलायमानं करोति। यथोक्तं कविना–

**बालकेलिषु तदा यदलावीः कर्परीभिरभिहत्य तरङ्गान्।**[23]

बालक्रीडेयं वर्तमानसमाजेऽपि यथावदेवावलोक्यते अस्माभिरिति। मनोविनोदार्थं रचितासु क्रीड़ासु अक्षक्रीड़ा प्रमुखा वर्तते।

**मुहूर्तविचारः–**

महाकाव्येऽस्मिन् पञ्चदशसर्गे स्वयंवरसमापनानन्तरं विदर्भराजः भीमः ज्योतिर्विदामादेशानुसारेण शुभमुहुर्ते विवाहोत्सवस्य समारम्भे दत्तावधाना आसीत्। यथा वर्णितमस्ति–

**ध्रुवावलोकाय तदुन्मुखभ्रुवा निर्दिश्यपत्याभिदधे विदर्भजा।**

**किमस्य न स्यादणिमाक्षिसाक्षिकस्तथापि तथ्यो महिमागमोदितः।।**[24]

षोडशसर्गे विवाहानन्तरं नलं धर्मशास्त्रानुसारं ध्रुवदर्शनं कारयति।[25]

**वस्त्राभूषणानि -**

यद्यपि महाकाव्येऽस्मिन् महाकविना भारतीय संस्कृत्यनुसारं परिधानाभूषणादीनां विशिष्टवर्णनं विहितम्। तथापि स्वाभाविकसौन्दर्यस्य महत्त्वं महाकविना स्वीकृतमस्ति। अत्र विशिष्टोत्सवकाले विशिष्टस्वर्णाभूषणादीनां प्रयोगः विहितोऽस्ति। पुरुषाः अधोवस्त्रं धारयन्ति, स्त्रियः दुकूलधारणं कुर्वन्ति। विशिष्टचन्दनादीनां लेपः प्रचलितः अस्ति स्त्रीणां कुचप्रदेशे अङ्गरागकुङ्कुमादिभिः परमत्स्यादीनां चित्ररचना भवति। रत्नजड़िताभूषणमपि प्रचलितमस्ति। यथोक्तिम्-

**पीतावदातारूणनीलभासां देहोपदेहात्किरणैर्मणीनाम्।**
**गोरोचनाचन्दनकुङ्कुमैणनाभीविलेपान्पुनरुक्तयन्तीम्।।**[26]

केशपाशेषु पुष्पप्रसूनस्य प्रयोगो भवति। नेत्रेषु अञ्जनं कर्णयो रत्नखचितं कण्ठे मुक्ताहारं हस्तयोः च कङ्कणम् विवाहादिप्रसङ्गे ध ारयन्ति। चरणेषु उपानहौ धारयन्ति। महाकविना लिखितं कामिनी-पादयोः यावकं कीदृशं नतमुखं प्रतीयते-

**कृतापराधः सुतनोरनन्तरं विचिन्त्यकान्तेन समं समागमम्।**
**स्फुटं सिषेवे कुसुमेषु पावकः स रागचिहरचरणौ न यावकः।।**[27]

एवमेव नैषधकालीन परिधानम् आभूषणानि च भारतीय मर्यादानुमूलान्येवेति।

**भोजनव्यवस्था -**

महाकाव्येऽस्मिन् सक्तुभोजनादारभ्य उत्तमोत्तमानि भोज्यवस्तूनि वर्णितानि। भोजने अस्पृश्यतायाः महत्त्वं न्यूनातिन्यूनमवलोक्यते। वरयात्रिणः वैश्याभिः प्रदत्तानि भोजनान्यपि कुर्वन्ति-

**धराप्सरोभिर्वरयात्रयागतानभोजयद् भोजकुलाङ्कुरः क्वचित्।**[28]

भोजने मोदक-शष्कुली-पायस-दधि-धृत- तण्डुल-शर्करानिर्मित-बहुविधपदार्थानां दिग्दर्शनं भवति।[29] अनेकेष्ववसरेषु ताम्बुलस्यापि प्रयोगो दृश्यते। भोजने षड्रसाः भवन्ति तैश्च भोज्यपदार्थाः निर्मीयन्ते-

**न षड्विधिः विड्गजनस्य भोजने यथा यथा यौवन-विभ्रमोद्भवः।**[30]

मृगमांसस्यापि भोजनं करोति जनः -

**व्यधुस्तमा ते मृगमांससाधितं रसादशित्वा मृदुतेमनं मनः।**[31]

एवमेव नैषधकालीने समाजे भोजनव्यवस्था अत्युत्तमा आसीदिति ज्ञायते।

**ललितकला -**

श्रीहर्षकालीना भारतीयललितकला उन्नतिं गता प्रतीयते। नैषधीयचरितमहाकाव्ये एतस्याः वर्णनं नैकत्र प्राप्यते। कुशलचित्रकारः पुरुषाणां स्त्रीणां च चित्रं तेषां वास्तविकस्वरूपदर्शनं विनैव लीलागृहभित्तिकायां रचयति स्म।

**प्रियं प्रियां च त्रिजगज्जयिश्रियौ**
**लिखाधिलीलागृहभित्ति कावपि।**
**इति स्म सा कारुवरेण लेखितं**
**नलस्य च स्वस्य च सख्यमीक्षते।।**[32]

चित्रकलाविदपि रसिकः भवति। राजप्रासादे चित्राणां सजीवता तथा तेषां विधानं स्वाभाविकं कौशलयुक्तं चासीत्। यथोक्तम्-

**चित्रतत्तदनुकार्यविभ्रमाधाय्यनेकविधरूपरूपकम्।**

**वीक्ष्य यं बहुधुवञ्शिरो जरात्रातकी विधिरकल्पि शिल्पिराट्।।**[33]

इत्थं नैषधकालीना ललितकला उत्कर्षधायिका वर्तते।

**संगीतकला -**

नैषधीयचरितमहाकाव्यकाले संगीतकलाऽऽपि चर्मोत्कर्ष प्राप्नोत्। राजकुमारीणां कृते संगीतशिक्षायाः अपि व्यवस्था अस्ति। कुण्डिनपुर्य्यां मंगलमृदङ्गध्वनिः सर्वेषां संगीतविशारदां चेतांसि आनन्दयति। तस्य ध्वनेः प्रतिध्वनिः कीदृशः प्रतीयते इति विषये कवेः लेखनी कथयति-

**उत्तुङ्गमङ्गलमृदङ्गनिनादभङ्गीस-**
**र्वानुवादविधिवोधितसाधुमेधाः।**
**सौधस्रजः प्लुतपताकतयाभिनिन्यु-**
**र्मन्ये जनेषु निजताण्डवपण्डितत्वम्।।**[34]

सप्ततारयुक्ता वीणा अत्यधिकप्रचलिताऽऽस्ति।[35]

**निष्कर्षः-**

महाकाव्यस्यास्याध्ययनाद् वयं जानीमः यत् नैषधकालिके समाजे सदाचरणस्य बाहुल्यमासीत्। श्रीहर्षस्य प्रत्येकमपि पात्रं सांस्कृतिकादर्शमुपस्थापयति। यथा नले कर्त्तव्यनिष्ठा, दमयन्त्यम् आदर्शस्त्रीत्वं पातिव्रत्यञ्च प्रस्फुटीभवति। इत्थं नलस्यापि चरितं नितरां प्रशंसीनयमस्ति। नायिकायाः दमयन्त्या अपि चरितं भारतीयसामाजिकमर्यादानुकूलमेव वर्तते। अतः वर्तमानकालेऽपि एतयोः नलदमयन्त्योः चरितं युवकयुवत्योः कृते आदर्शं समुपस्थापयति तथा एतैः युवकैः युवतीभिश्चानुकरणीयमिति मम विचारः।

---

1 शक्तिर्निपुणता लोकशास्त्रकाव्याद्यवेक्षणात्।
....................। का. प्र. 1.3

2 नैषधीयचरितम्-17/67

3 बभारशास्त्राणिदृशंद्वयाधिकां निजत्रिनेत्रावतरत्वबोधिकाम्। (नैघध 1/6)

4 मृगया न विगीयते नृपैरपि धर्मागमर्मपारगैः मृगयाधाय न भूभुजां ध्नताम्। (नैषध 2/9-10)

5 नैषधीयचरितम्-2/88

6 चण्डालस्ते विषमविशिखः स्पृश्यते दृश्यतेन।
ख्यातोऽनङ्गस्त्वयि जयति यः किं नु कृत्ताङ्गलीकः।। (नैषध-9/156)

7 नैषध-1/20

8 वर्णश्रमाचारपथात्प्रजाभिः स्वामीसहैवास्खलते नलाय।
प्रसेदुषो वेद्वशवृत्तभङ्गया द्वित्सैव कीर्तेर्भुवमानयद्वः।। (नैषध-14/45)

9 नैषध-8/42

10 मूर्खान्धकूपपतनादिव पुस्तकानामस्तं गतं वत परोपकृतिव्रतत्वम् (नैषध-7/42)

11 नत्वा शिरोरत्नरूचापिपाद्यं संपाद्यमाचारविदातिथिभ्यः।
प्रियाक्षरालीरसधारयापि वैधी विधेया मधुपर्कतृप्तिः।। (नैषध 8/20)

12 नैषध 13 नैषध 5/3

14 नैषध 21/21

15 भीमात्मजापि कृतदेवतभक्तिपूजा, पत्यौ च भुक्तिवति भुक्तिवति ततोऽनु।
तस्याङ्कमङ्करितततपरिरिप्समध्यमध्यास्त भूषणभरातिभरलसाङ्गी।। (नैषध 21/121)

16 जगज्जयं तेन च कोशमक्षयं प्रणीतवान् शैशवशेषवानयम्।
सखा रतीशस्य ऋतुर्यथा वनं वपुस्थालिङ्गदथास्य यौवनम्।। (नैघध 1/19)

17 प्रागचुम्बदलिके ह्रियानतां तां क्रमाद्दरनतां कपोलयोः।
तेन विश्वसितमानसां झटित्यानने स परिचुम्ब्य सिष्मिये।। (नैषध 18/41)
अर्पितेन मम नाथ! न तापं लोचनेन विधुना विधुनासि।। (नैषध 21/115)

18 भक्तिभाजमनुगृह्य द्वशा मां भास्करेण कुरु वीततमस्कम्।

19 रथैरथायुः कुलजाः कुमाराः शस्त्रेषु शास्त्रेषु च दृष्टपाराः।
स्वयंवरं शम्बरवैरिकायव्यूहश्रियः श्रीजितयक्षराजाः।। (नैषध 10/1)

20 नैषधीयचरितम् 16/3

21 तटान्तविश्रान्ततुरंगमच्छटास्फुटानुबिम्बोदयचुम्बनेन यः।
बभौ चलद्वीचिकशान्तशातनैः सहस्रमुच्चैः श्रवसामिवाश्रयन्।। (नैषध 1/109)
न भास्यदस्तुच्छगलो वदन्नितिन्यधत्त जन्यस्य ततः पराकृषत।। (नैषध 16/51)

23 नैषध 21/79

24 नैषधीयचरितम् 16/38

25 धवेन सादर्शि वधूररून्धतीं सतीमिमां पश्य गतामिवाणुताम्।
कृतस्य पूर्व हृदि भूपतेः कृते तृणीकृतस्वर्गपतेर्जनादिति।। (नैषध 16/39)

26 नैषध 10/18

27 नैषधीयचरितम् 15/47

28 नैषध 16/48

29 अमी लसद्वाष्पमखण्डिताखिलं वियुक्तमन्योन्यकमुक्तमार्दवम्।
रसोन्तरं गौरमपीवरं रसादभुञ्जतामोदनमोदनं जना:।। (नैषध 16/68)

30 नैषध 16/48

31 नैषध 16/76

32 नैषधीयचरितम् 1/38

33 नैषधीय 18/12

34 नैषधीय 11/06

35 नादं निषादमधुरं ततमुज्जगार साभ्यासभागवनिमृत्कुलकुञ्जरस्य।
स्तम्बेरमीव कृतसश्रुतिमूर्धकम्पा वीणा विचित्रकरचापमाभजन्ती।। (नैषध 21/127)

## नैषधीयचरिते अलङ्कारविन्यासः

जीवनकुमारः

इह खलु प्रयुज्यमानासु भाषासु रमणीयतया निसर्गसंस्कृता संस्कृतभारती। तस्याश्च हृदयमिव राराज्यते महाकाव्यम्। संस्कृतसाहित्येऽतीव प्रसिद्धानि वर्तन्ते पञ्चमहाकाव्यानि। पञ्चमहाकाव्येषु महाकविकालिदासस्य कुमारसम्भवम्, रघुवंशम्, मेघदूतम् च लघुत्रय्यां गण्यन्ते। कविभारविप्रणीतं किरातार्जुनीयं, माघप्रणीतं शिशुपालवधं, श्रीहर्षप्रणीतं नैषधीयचरितमहाकाव्यञ्च बृहत्त्रयीग्रन्थकोट्यां परिगण्यन्ते। एतेषु श्रीहर्षविरचितं नैषधीयचरितमन्यतमं स्थानं बिभर्ति। माघस्य शिशुपालवधे काव्यसौन्दर्यं प्रेक्ष्य यथा भारवेर्भा प्रायोऽस्तमेति, तथैव नैषधीयचरिते श्रीहर्षस्य वैदुष्यमवलोक्य भारविमाघौ इति द्वयमपि निष्प्रभतां धत्तेति विपश्चितां मतम्। श्रीहर्षः कविताकामिनिकान्तो भाषाप्रयोगविदग्धो विविधशास्त्रनिष्णातो रससिद्धः कवीश्वरो वर्तते। काव्यमिदं प्रतिपदं तस्य व्याकरणविषयज्ञतां भावगाम्भीर्यं, पदमाधुर्यं, भाषासौष्ठवं रसपरिपाकं च प्रकटयति अस्य महाकाव्ये समुपतिष्ठन्ति रसाः, भावाः,गुणाः, कमनीया पदावली, नैके अलङ्काराश्च।

कारणद्वयेन काव्यस्य सौन्दर्यानुभूतिः चमत्कारात्मकता च भवति, अङ्लङ्कारैः पदसंयोजनया च।

संस्कृतसाहित्ये वैदिककालादेव अलङ्कारशब्दस्य प्रयोगो लभ्यते। अलङ्कारशब्दस्य व्युत्पत्यात्मकोऽर्थः व्याकरणग्रन्थेषु, कोशग्रन्थेषु, उपनिषत्सु च प्राप्यते। तद्यथा- **''अलं करणम् अलङ्कारः, अलंकृतिरलङ्कारः, अलंक्रियते अनेनेति अलङ्कारः, अलम्+कृ+घञ्''**( अ.3/3/18 )। **''अलंकारस्त्वाभरणं परिष्कारो विभूषणम्''** ( 2/6/101 ) **इत्यमरः।** **''वसनेन अलङ्करणेनेति संस्कुर्वन्ति''** ( छा.उप.8/8/5 )।

**"अंजनाभ्यञ्जने प्रयच्छत्येव ह मानुषोऽलङ्कारः"** (श.प.ब्रा.13/8/4)। अलङ्कारवैशिष्ट्येन आचार्यैः काव्यशास्त्रस्याऽपरं नाम अलङ्कारशास्त्रमिति प्रदत्तम्। अलङ्कारसिद्धान्तस्याचार्याः सम्प्रति अलङ्कारं काव्यात्मत्वेन मन्यन्ते। काव्यमीमांसाकारेण तु अलङ्कारशास्त्रं वेदानां सप्तमाङ्गत्वेन स्वीकृतम्। सर्वादौ अलङ्काराणां प्रयोगः ऋग्वेदस्य प्रथममण्डले प्राप्यते। तत्र उपमालङ्कारस्य प्रयोगो यथा-

**"ईयुषीणामुपमा शाश्वतीनां विभातीनां प्रथमोषा"**

**अग्निपुराणेऽपि- "काव्यं स्फुरदलङ्कारं**
**गुणवद्दोषवर्जितम्"** (अ.पु.1/194)

अलङ्काराः रसानां समुत्कर्षकाः। गुणाः रसस्य साक्षादेव व्यञ्जकाः परन्तु अलङ्काराः काव्यशोभावर्धकाः। नाट्यशास्त्रकार आचार्यभरतेनोक्तं यत् काव्ये अङ्गस्थानीयाः अलङ्काराः भवन्ति। उपमा-दीपक-रूपक-यमकादयः चत्वारः अलङ्काराः काव्यशोभां वर्धयन्तीति तस्य मतम्। उक्तं हि-

**उपमा दीपकं चैव रूपकं यमकं तथा।**
**काव्यस्यैते ह्यलङ्काराश्चत्वारः॥** (ना.शा.43/17)

लौकिकजीवने यथा अलङ्कारान् विना स्त्रीणां सौन्दर्यं न विभाति तथैव काव्ये अपि। अलङ्कारं विना काव्ये रमणीयत्वं नागच्छति। यतोहि निगदितं भामहाचार्येण-

**"न कान्तमपिनिर्भूषं विभाति वनिताननम्"**

(का.अ., भामह- 1/13)

अलङ्कारसिद्धान्तस्य प्रतिष्ठापक आचार्यभामहः सर्वेषु अलङ्कारेषु वक्रोक्तिं प्राणत्वेन स्वीकरोति। तेनोक्तं काव्यालङ्कारे-

**सैषा सर्वैव वक्रोक्तिरनयार्थोविभाव्यते।**

**यत्नोऽस्यां कविना कार्यः कोऽलङ्कारोऽनया विना॥**

(का.अ.2/85)

दण्डिनाऽपि काव्यशोभाकराः धर्मा अलङ्कारा इति उद्घोषितम्। यथा हि काव्यादर्शे-

**"काव्यशोभाकरान् धर्मानलङ्कारान् प्रचक्षते"** (का.द 2/1)

वामनाचार्यश्च वक्ति-

**"काव्यं ग्राह्यमलङ्कारात्, काव्यशोभायाः कर्तारोधर्मा गुणाः"**
(का.अ.सू.1/1/1 ,1/1/3)

**"सौन्दर्यमलङ्कारः" (का.अ.सू.2/1/1)। "तदतिशय हेतवस्त्वलङ्काराः" (का.अ.सू.2/1/3) इत्यपि।**

एतेन सिद्धमिदं यदलङ्कारैरेव काव्ये सौन्दर्याधानं भवति इति नास्त्यत्र संशीतिलेषः।

सर्वप्रथममलङ्कारस्य विभागद्वयं स्वीकृतमाचार्यैः शब्दालङ्कारोऽर्थालङ्कारश्चेति। शब्दालङ्काराः अनुप्रासयमकश्लेषादयः, ये शब्दमाध्यमेन चमत्कारं जनयन्ति भावानुभूतितीव्रतां चाप्नुवन्ति। अर्थालङ्कारास्तु उपमा-रूपक-उत्प्रेक्षा-दीपक-अतिशयोक्ति इत्यादयः बहवस्सन्ति, ये अर्थमाध्यमेन सौदर्य जनयन्ति। एते भावप्रधानाः कल्पनाप्रधानाश्चापि भवन्ति।

महाकविना श्रीहर्षेण स्वकीये नैषधीयचरितमहाकाव्ये शब्दालङ्कारार्थालङ्कारयोर्बहुषु स्थलेषु प्रयोगः प्रसङ्गानुसारेण उत्तमरीत्या व्यध ायि। कविना स्वकीयविलक्षणप्रतिभया अलङ्काराणां रमणीया योजना कृता येनास्य वैशिष्ट्यं हृदयावर्जकं संजातम्। महाकाव्येऽस्मिन् शब्दालङ्कारेषु वक्रोक्ति-अनुप्रास-यमक-श्लेषादीनां प्रयोगो दरीदृश्यते। तेषु कानिचन निदर्शनान्यत्र समुपस्थाप्यन्ते-

**वक्रोक्तिः-**

वक्रोक्तिरलङ्कारसन्दर्भे काव्यशास्त्रकारैआचार्यैर्लक्षणं प्रतिपादितम्। तेषां मते श्लेषकारणादेव वक्रोक्तिः सौन्दर्यातिगोचरो भवति। परवर्तिन आचार्यास्तु वक्रोक्तिं शब्दालङ्काररूपेण स्वीकुर्वन्ति तथा च एतस्य निष्पत्तिः श्लेषकाक्वा च प्रतिपादयन्ति। यथा-

**वक्रातदन्ययोक्तं व्याचष्टे चान्यथातदुत्तरदः।**
**वचनं यत् पदभङ्गैर्ज्ञेया सा श्लेषवक्रोक्तिः॥**

**विस्पष्टं क्रियमाणदक्लिष्टा स्वरविशेषतो भवति।**
**अर्थान्तररप्रतीतिर्यत्रासौ काकुवक्रोक्तिः।।** (का.अ.2/14,16)

उक्तं च मम्मटेनाऽपि-

**यदुक्तमन्यथा वाक्यमन्यथाऽन्येन योज्यते।**
**श्लेषेण काक्वा वा ज्ञेया वक्रोक्तिस्तथा द्विधा।।**
(का.प्र.9/103)

नैषधीयचरिते श्रीहर्षेण श्लेषकाकुमाध्यमेन वक्रोक्तिर्योजना कृताऽस्ति। चतुर्थे सर्गे श्लेषकाकूभयवक्रोक्तेः रमणीयमुदाहरणं प्राप्यते। तद्यथा-

श्लेषवक्रोक्तेः-

**अमृतदीधितिरेष विदर्भजे!**
**भजसि तापममुष्य किमंशुभिः।**
**यदि भवन्ति मृताः सखि! चन्द्रिकाः**
**शशभृतः क्व तदा परितप्यते।।** (नैषध.4/104)

अत्र श्लेषवक्रोक्तिर्वर्तते। पद्येऽस्मिन् 'अमृतदीधितिः सखिवचसः श्लेषेण अन्यमेव अर्थ गृह्णाति भैमि। अ+मृत इति जीवितदीधितिरित्यर्थ गृहीत्वैवोत्तरं ददाति। यथा नाराणीटीकायाम्- हे विदर्भजे! एष पूर्वोवर्ती अमृतदीधितिः, न तीक्ष्णदीधितिः। त्वम् अमुष्यां शुभिः सुधामयैः किरणैसतापं दाहं किं भजसि? इति सखीवचः। छलेनोत्तरमाह- हे सखि! शशभृतः कलङ्कितः चन्द्रिका यदि मृता भवन्ति कृष्णपक्षवत्तदा क्व हेतोः परितप्यते संतप्येत कारणन्तरावात्संतापो न भवेदिति भैमीवचः। 'इत्यत्र अमृतेति सुध ाविवक्षया प्रयुक्तस्य मृतेतरार्थत्वेन योजनाद्वक्रोक्तिलरङ्कारः। **''अन्यथोक्तस्य वाक्स्य काक्वा श्लेषेण वा भवेत्। अन्यथा योजनं यत्र सा वक्रोक्तिर्निगद्यते'' इति मल्लिनाथः (नैषध.4/104,जीवातुटीका)।**
काक्वा यथा-

**अयि! शपे हृदयाय तवैव**
**तद्यदि विधोर्न रुचेरसि गोचरः।**

**रुचिफलं सखि! दृश्यत एव**
**तज्ज्वलयति त्वचमुल्लतयत्यसून्।।** (नैषध.4/106)

अत्र सखि शपथपूर्वकं कथयति यदयं चन्द्र एवास्य रुचिरेवात्र प्रमाणं परं दमयन्त्यै चन्द्रिका शान्तिं न प्रददाति एतस्मात् कारणात् सा काक्वाश्रयेण प्रत्युत्तरं ददाति। अस्मिन् पद्ये भैम्या उपमालम्भपूर्वकेण वचसा काक्वा वा अन्यार्थस्य प्राप्तिर्भवति।

सप्तदशे सर्गे तु श्लेषकाकूभयवक्रोक्तेरेकत्रैव सौन्दर्यं प्राप्यते। इन्द्रकलिसंवादप्रसङ्गे यद्यपि इन्द्रेण कलिं प्रति यत् प्रोक्तं तत्सर्वं श्लेषवक्रोक्त्या काकुवक्रोक्त्या च इन्द्रपक्षेऽपि गच्छति। तद्यथा-

**तवाऽगमनमेवार्हं वैरसेनौ तया वृते।**
**उद्वेगेन विमानेन किमनेनापि धावता।।** (नैषध.17/154)

अत्र तवागमनम् इत्यस्य पदस्य तव+अगमनम्, तव+आगमनम् इत्यर्थद्वयं क्रमशः इन्द्रपक्षे च संगच्छते। एवमेव 'अपि धावता' इत्यस्य अपि+धावता, अपिधावता च तथा उद्वेगेन- उद्वेगयुक्तचञ्चलचित्तेन उत्कृष्टजवेन चेति विमानेन आकाशगामिना रथेन मानहीनेन चेत्यादिभिरर्थैः इन्द्र-कलेः संवादो भवति। सहैव काकुप्रयोगेनापि अर्थवैशिष्ट्यं लभ्यते। अनेनात्रोभयवक्रोक्तिरलङ्कार स्पष्टो भवति।

**अनुप्रासः-** शब्दालङ्कारेषु अनुप्रासः नैषधीयचरितकारस्य श्रीहर्षस्य सर्वाधिकप्रियोऽलङ्कारो वर्तते, अतएव तेनास्यालङ्कारस्य प्रभूतः प्रयोगो विहितो महाकाव्येऽस्मिन्। काव्यप्रकाशकारेण मम्मटाचार्येण अनुप्रासस्य लक्षणमित्थं प्रतिपादितम्- **''वर्णसाम्यमनुप्रासः'' (का.प्र.9/104)।** आचार्यविश्वनाथेनाऽपि साहितयदर्पणे अनुप्रासलक्षणविषये प्रोक्तम्- **''अनुप्रासः शब्दसाम्यं वैषम्येऽपि स्वरस्य यत्'' (सा.द.10/03)** अर्थात् शब्दस्य साम्यं स्वरस्य वैषम्येऽपि भवेत्, कुत्रचित् स्वरस्यापि समानता भवितुं शक्यते। व्यञ्जनस्य तु पौनपुन्येन शब्दे वाक्ये चावृत्तिरनुप्रासः। रसानुकूलवर्णानां चमत्कारपूर्णं नियोजनमनुप्रासालङ्कार उच्यते।

नैषधीयचरिते कवेरनुप्रासालङ्कारेऽपि अन्तिमवर्णस्य साम्यमधिकं प्रियं वर्तते। यतोहि- महाकविहर्षोऽनुप्रासविषये स्वयमेव वक्ति-

**इतरनलतुलाभागेष शेषः सुधाभिः**
**स्नपयति मम चेतो नैषधः कस्य हेतो।**
**प्रथमचरमयोर्वा शब्दयोर्वर्णसख्ये विलसति**
**चरमेऽनुप्रासभासां विलासः॥** (नैषध.1/54)

एतस्मात् पद्यात् ज्ञातुं शक्यते यदनुप्रासस्य शोभा प्रायोऽन्ते एव सौन्दर्यं जनयति। अत्र पञ्चेषु पञ्चमो नल एव वास्तविको नल, यत एतं नलं वीक्ष्य दमयन्तीम् आनन्दातिरेको जायते। पद्येऽस्मिन् अन्तिमपादे 'स' वर्णेन वृत्यनुप्रासः परिलक्ष्यते। नैषधे कविना न केवलं वृत्यनुप्रासो वर्णितोऽपितु अनुप्रासस्य सर्वाङ्गानां प्रकाशनं मनोहररूपेण कृतं वर्तते। कानिचन उदाहरणानि यथा-

**जवाज्जातेन वातेन बलाकृष्टबलाहकैः।**
**श्वसनात्स्वस्य शीघ्रत्वं रथैरेषामिवकवि॥** (नैषध.17/4)

**''ब्रुवते हि फलेन साधवो न तु कण्ठेन निजोपयोगिताम्''** (नैषध.2/48)

**''कुलं सुधांशोर्बहलं बहन्बहु''** (नैषध.1/110)

**''पुण्येन न मन्ये पुनरन्यजन्म''** (नैषध.8/33)

**छेकानुप्रासः-**

**अस्यां मुनीनामपि मोहमूहे भृगुर्महान्यत्कुचशैलशीली।**
**नानारदाह्लादि मुखं श्रितेरुव्यासो महाभारतसर्गयोग्यः॥**
(नैषध.7/96)

**कल्याणि! कल्यानि तवाङ्गकानि**
**कच्चित्तमां चित्तमनाबिलं ते।**
**अलं विलम्बेन गिरं मदीयामा-**
**कर्णयाकर्णतटायताक्षि॥** (नैषध.8/87)

उभयोः पद्ययोः प्रथमद्वितीयचरणयोर्मशत्ययोर्वर्णयोऽनुप्रासः प्रथमदृष्ट्यवलोक्यते। एवमेव तत्रैव श-ष, य-ज, व-ब, न-ण एतेषामपि वर्णानुप्रासः हृदयावर्जक एव प्रतीयते।

**यमकम्-: ''अर्थे सत्यर्थभिन्नानां वर्णानां सा पुनः श्रुतिः'' (का.प्र.9/116)** इति यमकमुच्यते। काव्यप्रकाशकारस्य मम्मटस्य उपर्युक्तलक्षणमनुसृत्य महाकविश्रीहर्षेण नैषधीयचरिते यमकालङ्कारस्य रमणीयः प्रयोगः कृतः। यमकालङ्कारस्य संदंश-युग्म-महा-सन्दष्ट-आद्यन्तिककादयोऽनेकभेदाः सन्ति परं नैषधे कविना प्रायशः सन्दष्टयमकस्य प्रयोगो बहुधा कृतः। सन्दष्टयमके पद्यस्य द्वितीयचतुर्थयोः पादयोरेव यमकालङ्कारस्य समाविशो भवति। यथोदाह्रियते-

**अवलम्ब्य दिदृक्षयाम्बरे क्षणमाश्चर्यरसालसं गतम्।**
**स विलास वनेऽवनीभृतः फलमैक्षिष्ट रसालसंगतम्।।**

(नैषध.2/66)

पद्येऽस्मिन् 'रसालं गतम्' तथा 'रसालसंगतमिति' उभयोः पदयोरर्थभिन्नत्वात् यमकस्य सौन्दर्य वर्तते। अपरं सुन्दरमुदाहरणम्-

**नभ्रसः कलभैरुपासितं जलदैर्भूरितक्षुपन्नगम्।**
**स ददर्श पतंगपुंगवो विटपच्छन्नतरक्षुपन्नगम्।।**

(नैषध.2/67)

इत्यस्मिन् पादान्ते एव 'तरं क्षुपं नगम्' तथा 'तरक्षु पन्नगम्' इति पदेषु भिन्नभिन्नार्थत्वात् यमकस्य छटा परिलक्ष्यते। अपि च-

**तारा रदानां वदनस्य चन्द्रं रुचा**
**कचानां च नभो जयन्तीम्।**
**आकण्ठमक्ष्णोद्वितयं मधूनि**
**महीभुजः कस्य न भोजयन्तीम्।।** (नैषध.10/106)

**''ज्ञातस्पर्शान्तरा मौनमानशे मानसेविनी''** (नैषध.20/13)

एवमेवान्यत्रापि बोध्यम्।

**श्लेषः-** महाकविश्रीहर्षस्य श्लेषालङ्कारछटा तु नैषधीयचरिते सर्वत्रैव अवलोक्यते। श्लेषवर्णवर्णननिपुणो कविरयं श्लिष्टमर्मज्ञो चासीत्। श्लेषालङ्कारविषये आचार्येणोक्तं यत् **''श्लिष्टैः पदैरनेकार्थाभिधाने श्लेष इष्यते''**। अर्थात् अनेकार्थवाचकपदैः अनेकार्थकथनाद् श्लेषालङ्करो भवति।

स तु द्विधा विभज्यते शब्दश्लेषः अर्थश्लेषयचेति। उक्तं हि-

**'श्लेषोऽर्थस्यापि सोन्यस्तु' (का.अ.रुद्रट.2/13)**

यत्र कश्चित्शब्दविशेषहेतो अनेकार्थः प्रतीयते तथा तत् शब्दस्थाने अन्यशब्दस्थापनात् तदेवार्थो न जायते स तु शब्दश्लेषालङ्कारः। येषु शब्दः वाच्यार्थभिन्नत्वात् भिन्नस्वरूपं गोपयति-

**वाच्यभेदेनेभिन्ना यत् युगपद् भाषणस्पृशः।**
**शिलष्यन्ति शब्दाः श्लेषोऽसौ (का.प्र.9/119)**

अपरोऽर्थश्लेषः यत्रैकस्मिन्नेव वाक्ये अनेकार्थः सम्भवन्ति तत्रार्थश्लेषः। यथा मम्मटेनोक्तम्-

**'श्लेषः स वाक्य एकस्मिन् यत्रानेकार्थता भवेत्'**
(का.प्र.9/147)

शिलष्टपदानां प्रयोगेण कविना अभीष्टोऽर्थः प्रयुज्यते अत एव आचार्यैं 'इष्टार्थ' इत्युक्तम्। तेषामनेकार्थत्वं कदाचित् तस्मादेव पदात् कदाचिच्च तेषामेव पदानां सम्भवति। यतोहि शब्दश्लेषस्य भेदद्वयं क्रियते भिन्नत्वेन- **"शिलष्टमनेकार्थमेकरूपान्वितं वचः" (का.द.2/310)।** नैषीयचरितमहाकाव्ये कविना श्लेषालङ्कारस्य शिलष्टप्रयोगो रमणीयत्वेन बहुधा प्रकाशितोऽस्ति। श्रीहर्षस्य अभङ्गश्लेषस्योदाहरणानि पदे-पदे परिलक्ष्यन्ते। तेषु कतिपयानि उदाहरणानि प्रदर्श्यन्ते अत्र यथा-

**स्थितिशालिसमस्तवर्णतां न कथं चित्रमयी बिभर्तु या।**
**स्वरभेदमुपैतु या कथं कलितानल्पमुखारवा न वा।।**
(नैषध.2/98)

पद्येऽस्मिन् कविना श्रीहर्षेण कुण्डिनपुरीवर्णनप्रसङ्गे अभङ्गश्लेषमाध्यमेन विवेचनं कृतं वर्तते। तत्र चित्रमयी आश्चर्यरूपा, अन्यत्र ब्राह्मणादिवर्णानां संकरात्। तत्र च तदभावादाश्चर्यरूपत्वम्, ब्राह्मणादयोऽत्रासंकीर्णास्तिष्ठन्तीत्यर्थः। यद्वा स्थितयो वर्णानामष्टौ स्थानानि ताभिः शालिनः समस्ता वर्णा अक्षराणि यस्यां, ब्राह्मणाः सलक्षणं वेदं यत्र पठन्तीत्यर्थः इति नारायणी टीकायाम्। इत्यत्र स्थिति, वर्ण, चित्रम्, स्वरभेदम्,

अनल्पमुखादिषु शब्देषु अभङ्गश्लेषो वर्तते।

यथा वा-

**बिभर्ति वंशः कतमस्तमोपहं भवादृशं नायकरत्नमीदृशम्।**
**तमन्यसामान्यधियावमानितं त्वया महान्तं बहु मन्तुमुत्सहे।।**

(नैषध.9/6)

अस्मिन् पद्ये वंशस्यार्थः कुलं तथा वंशपदार्थविशेषः तमोपहस्य शोकनाशक अन्धकारनाशकश्च नायकरत्नस्य श्रेष्ठपुरुषः हारमध्यरत्नञ्चेति अतोऽत्र अभङ्गश्लेषो वर्तते। अभङ्गापेक्षया सभङ्गश्लेषोऽधिकः चमत्कारजनको भवति। सभङ्गश्लेषस्य रचना अतीव दुष्करं भवति परन्तु कविना श्रीहर्षेण नैषधे सभङ्गश्लेषस्यापि नियोजनं उत्तमरीत्या स्वसिद्धहस्तेन कृतं वर्तते। यत्र हंसदमयन्त्योः संवादप्रसङ्गे प्रोक्तं कविना-

**''का नाम बाला द्विजराजपाणिग्रहाभिलाषं कथयेदलज्जा''**

(नैषध. 3/59)

इत्यत्र भैमी हंसं प्रति स्वस्य अभिलाषं प्रकटयति। तया आह- 'नाम सम्भावनायाम्, लज्जा निर्लज्जा साध्यमसाध्यमित्यजानाना सती का बाला द्विजराजस्य चन्द्रस्य पाणिना ग्रहाभिलाषं कथयेत्, अपितु हस्तेन चन्द्रं ग्रहीतुं मम वाञ्छेति कापि न कथयति। हस्तेन चन्द्रप्राप्तिर्यथाऽशक्या तथा मन्मनोरथप्राप्तिरिति भावः। 'द्विज' इति संबुद्धिः। राज्ञश्चन्द्रस्येति वा। अथ च स्वाभिलाषं कथयति द्विजानां राजा सम्राट् नलस्तद्विवाहेच्छां का कथयेत्? अपि तु न कापि नलविवाहेच्छा ममेति कथं कथयेयमिति भावः। अथ च सलज्जत्वद्वक्तुं न शक्यत इत्याह- हे द्विजराज। अत्र 'द्विजराजपाणिग्रह' इति पदस्य अनेकार्थत्वेन सभङ्गश्लेषो वर्तते। अग्रे अपि कविना नैकानि सुन्दरमुदाहरणानि प्रकाशितानि सन्ति। हंसेन साकं दमयन्त्या उक्तिर्यथा-

**इतीरिता पत्ररथेन तेन ह्रीणा हृष्टा च बभाण भैमी।**
**चेतो नलङ्कामयते मदीयं नान्यत्र कुत्रापि च साभिलाषम्।**

(नैषध.3/67)

अस्मिन् पद्ये श्रीहर्षस्य आस्वाद्यमानश्श्लेषचमत्कार: दरीदृश्यते। अत्र श्लेषपरा: त्रयोऽर्था: शब्दशक्तिमहिम्ना वेद्यन्ते। प्रथमत:- 'चेत: नलं कामयते', द्वितीय:- 'चेत: न लङ्काम् अयते', तृतीयश्च- 'चेत: अनलं कामयते'। इत्यत्र दमयन्ती **"लङ्कापुरीमप्यभिलाषि चित्तम्" (नैषध. 3/66)** इति हंसकृतवचनं निशाम्य सुष्ठु स्त्रीसुलभलज्जाकारणात्स्ववैदुष्यबलाच्च साक्षात् नलनामसङ्कीर्त्य स्वमनोभावं प्रकटयति श्लेषमाध्यमेन। अर्थात् हे चक्रङ्ग मे चेत: न अयते प्रत्युत चेत: नलं कामयते अथवा चेत: अनलं कामयते इत्थमुभयथापि विजय: दमयन्तीकरे एव सुरक्षित:। भैमीमनोभावमवगच्छन् कथयेत् यत् तव चेत: नलं कामयते तर्हि भैमी उत्तर्तुं शक्नुयात् यन्नहि भो, मम चेतो नलं कामयते इति न प्रत्युत चेत: लङ्काम् अयते इति। तत्रापि भैमीस्वयम्बरावसरे पञ्चनलीवर्णनप्रसङ्गे कविना यादृशी श्लिष्टानियोजना प्रकाशिता तादृशी त्वन्यत्र दुर्लभा एव मन्ये, नास्त्यत्र शंसीति। त्रयोदशसर्गस्य पद्यमिदं दृष्टिमानन्दयति-

**देव: पतिर्विदुषि! नैषधराजगत्या**
**निर्णीयते न किमु न व्रियते भवत्या।**
**नायं नल: खलु तवातिमहानलाभो**
**यद्येनमुज्झसि वर: कतर: परस्ते॥** (नैषध.13/34)

कविना एतस्य पद्यस्य पञ्चनलानां पक्षे पञ्च अर्था: प्रकाशिता:, तेषामर्थाणां समासरूपेण अन्वयात्र यथाक्रमं प्रस्तूयन्ते-

**इन्द्रपक्षे यथा**- हे विदुषि! एष देव: धराजगत्या: पति: न, भवत्या किमु न निर्णीयते, न व्रियते। अयं खलु नलो न, (अयम्) तव नलाभ: (यत:) अतिमहा: यदि एनम् (अ विष्णु: इनं ज्येष्ठभ्रातरम्) उज्झसि, ते पर: कतर: वर:।

**अग्निपक्षे**- हे विदुषि! धराजगत्या: पति: एष देव: भवत्या न निर्णीयते (इति) न (तर्हि) किमु न व्रियते अयं खलु तव नलो न (अपितु) अति महानलाभ: यदि एनम् उज्झसि ते पर: कतर: वर:।

**यमपक्षे**- हे विदुषि! एष धरा जगत्या पतिः देवः न निर्णीयते (इति) न (परं किमु न व्रियते)। अयं खलु न यदि एनम् उज्झसि (तदा) तव अति महानलाभः ते परः वरः कतरः।

**वरुणपक्षे**- हे विदुषि! एष धराजगत्या पतिर्नदेवः भवत्या किमु न निर्णीयते, न व्रियते, अतिमहानलाभः अयं खलु नलो न। यदि एनम् उज्झसि (तदा) ते वरः कः परः।

**नलपक्षे**- हे विदुषि!, अयं नैषधराजगत्या पतिः देवः ना किमु न निर्णीयते (किमु वा) न व्रियते। खलु तव अति महानलाभः, यदि एनम् उज्झसि(तर्हि) ते कतरः वरः परः (अधिकः)। इत्यनेन अत्र श्लेषालङ्कारस्य चमत्कारो वर्तते।

**अर्थालङ्काराः**- यत्र तु शब्दपरिवर्तनसहत्वे अलङ्कारत्वेन काऽपि क्षतिः तत्र अर्थालङ्काराः। अर्थालङ्काराः भावपक्षतः सम्बद्धा भवन्ति। इमे काव्यस्य कलात्मकसौन्दर्यस्य वर्धनं कुर्वन्ति। उपमोत्प्रेक्षासन्देहरूपकसमासोक्त्यादयो अर्थालङ्काराः गणनापराः सन्ति परञ्च प्रमुखरूपेण रुद्रटाचार्यः काव्यालङ्कारे एतस्य चत्वारो भेदान् स्वीकरोति। यथा-

**अर्थस्यालङ्काराः वास्तवौपम्यतिशेषश्लेषाः।**
**एषातेव विशेषा अन्ये तु भवन्ति निःशेषा॥**

अत्र संक्षेपेण केचन प्रमुखार्थालङ्काराः समुपस्थाप्यन्ते येषां प्रयोगो महाकविना श्रीहर्षेण नैषधीयचरिते बहुषु स्थलेषु व्यधायि।

**उपमा**- अर्थालङ्कारेषु उपमालङ्कारः प्रमुखो वर्तते। एतस्य विषये अप्पयदीक्षितस्येयमुक्तिः अवलोकनीया-

**उपमैका सम्प्राप्ता चित्रभूमिकाभेदात्।**
**रंजयति काव्यरंगे नृत्यन्ति तद्विदां चेतः॥**

यथा ब्रह्मज्ञानेन समस्तचराचरस्य ज्ञानं भवति तथैव उपमाज्ञानेन सर्वेषां चित्रकाव्यानां ज्ञानं भवितुमर्हति। उपमालङ्कारस्य लक्षणविषये काव्यप्रकाशकारेण मम्मटाचार्येणोक्तम्- **"साधर्म्यमुपमा भेदे" (का.प्र.**

**10/125 )** अर्थात् यत्रोपमानोपमेय साधारणधर्मः, वाचकशब्दश्च चत्वार एव भवन्ति तत्रोपमालङ्कारः। नैषधीयचरिते नैकेषु स्थलेषु उपमायाः सौन्दर्य परिलक्ष्यते। तत्र प्रथमे सर्गे कुचपक्वबिल्वफलयोसाम्यं वर्णयति कवि-

**मरुल्ललत्पल्लवकण्टकैः क्षतं समुच्छलच्चन्दनसारसौरभम्।**
**स वारनारीकुचसंचितोपमं ददर्श मालूरफलं पचेलिमम्।।**
(नैषध.1/94)

स नलः मरुल्ललत्पल्लव कण्टकैः क्षते समच्छल चन्दनसौरभम् वारनारीकुच सञ्चितोपमं पचेलिमं मालूरफलं ददर्श। अत्र मालूरफलम् उपमेयोऽस्ति, वारनारीकुचोपमानमस्ति सञ्चितायमुपमावाचकः शब्दः मरुल्ललत्पल्लव कण्टकैः क्षतम् एवं समुच्छलच्चन्दनसारसौरभं सामान्यध र्मः वर्वते। यथा हि-

**पतत्रिणा तद्रुचिरेण वञ्चितं श्रितः**
**प्रयान्त्याः प्रविहाय पल्वलम्।**

**चलत्पदाम्भोरुहनूपुरोपमा चुकूज**
**कूले कलहंसमण्डली।।** (नैषध.1/127)

एवमेव एकादशे सर्गे दमयन्तीस्वयम्बरवर्णनप्रसङ्गेऽपि कविना प्रयुक्तोपमालङ्कारः मनोरञ्जक वर्तते-

**आलिङ्गितः कमलवत्करकस्त्वयाऽयं**
**श्यामः सुमेरुशिखयेव नवः पयोदः।**
**कन्दर्पमूर्धरुहमण्डनचम्पकस्रग्दामत्वद-**
**ङ्गरुचिकञ्चुकितश्चकास्तु।।** (नैषध.11/98)

अर्थात् नवपयोदसमः सर्वाङ्गचम्पकासमादयन्तीं प्राप्य तथैव चकास्तु यथा नवघनः सुमेरूशिखयेव सुशोभते अत्र "चम्पक स्रग्दाम इव त्वदङ्गरुचि" इत्यनेन वाचकलुप्ता, धर्मलुप्ता चोपमा वर्तते। यथा हि पञ्चदशसेर्गेऽपि-

**विभूषणैः कञ्चुकिता बभु प्रजा**
**विचित्रचित्रैः स्नपितत्विषो गृहाः।**

**बभूष तस्मिन्मणिकुट्टिमैः पुरे वपुः**
**स्वमुर्व्या परिवर्तितोपमम्॥** (नैषध.15/15)

**उत्प्रेक्षा**- महाकविना श्रीहर्षेण नैषधीयचरिते उत्प्रेक्षालङ्कारस्यापि योजना सम्यक्तया कृता। उत्प्रेक्षायाः लक्षणं मम्मटाचार्येण काव्यप्रकाशे यथा कृतम्- **''सम्भावनामथोत्प्रेक्षा प्रकृतस्य समेन यत्'' ( का.प्र. 10/137 )**। अर्थात् प्रकृतस्य उपमेयस्य समेन उपमानेन यत् सम्भावनं तदेवोत्प्रेक्षालङ्कारः। नैषधीयचरिते नैकेषु स्थलेषु उत्प्रेक्षा परिलक्ष्यते। यथा-

**सपीतेः सम्प्रीतेरजनि राजनीशः परिषदा**
**परीतस्ताराणां दिनमणिमणिग्रावमणिकः।**
**प्रिये! पश्योत्प्रेक्षाकविभिधानाय सुशकः**
**सुधामभ्युद्धर्तुं धृतशशकनीलाश्मचषकः॥** (नैषध.22/144)

पद्येऽस्मिन् नलस्य चरणानाम् उर्ध्वरेखाप्रति श्रीहर्षस्य उत्प्रेक्षा अवलोकनीया वर्तते। पद्यस्य उत्तरपादे कविः लिखति यत् हे प्रिये! पश्य चन्द्रोपरि शशकनीलमणिना विरचितः चषकः स्थापित विद्यते इति मन्ये। अत्रोत्प्रेक्षासिद्धहस्तो कविरयमिति कथ्यते बुधैः। राज्ञः नलस्य चरणयो ऊर्ध्वरेखाङ्कितपदः सर्वोत्कर्ष भजेत् इति प्रतिपादयन् कवेरुत्प्रेक्षा-

**अधोविधानात्कमलप्रवालयोः**
**शिरःसु दानादखिलक्ष्माभुजाम्।**
**पुरेदमूर्ध्वं भवतीति वेधसा**
**पदं किमस्याङ्कितमूर्ध्वरेखया॥** (नैषध.1/18)

अत्र 'वेधसा कर्त्रा ऊर्ध्वरेखाङ्कितम्। सौन्दर्य-शौर्याभ्यां सर्वोत्तरं भवतीति ज्ञापनार्थ चिह्नितं किमित्युत्प्रेक्षा। ऊर्ध्वरेखाङ्कितपादः सर्वोत्तमो भवतीति सामुद्रिकाः इति टीकाकारः मल्लिनाथः।

अपि च-

**जलजे रविसेवयेव ये पदमेतत्पदतमवापतुः।**
**ध्रुवमेत्य रुतः सहंसकीकुरुतस्ते विधिपत्रदम्पती॥**
(नैषध.2/38)

पद्येऽस्मिन् कविः भैम्या चरणस्य सौन्दर्यं वर्णयति। द्वे कमले सूर्यसेवया इव दमयन्ती चरणरूपां प्रतिष्ठां प्रापतुः। अर्थात् ये कमले मन्ये रविसेवया दमयन्त्याः चरणतामवापतुः ते विधिपत्रदम्पती ध्रुवमेत्य रूतः सहंसीकुरुतः। अत्र रविसेवयेवेत्यत्र क्रियायाः वाच्योत्प्रेक्षा तथा ध्रुवं सहंसीकुरुतः इत्यत्र श्लेषोत्थापिता वाच्योत्प्रेक्षा तर्वते। अनेनैव अन्यत्रापि बोध्यम्।

**रूपकम्**- उपमानोपमेययोरभेदवर्णनमेव रूपकालङ्कारो भवति। यथोक्तमाचार्यमम्मटेन- **''तद्रूपकमभेदो य उपमानोपमेययोः'' ( का.प्र. 10/139 )।**

नैषधीयचरिते दमयन्तीस्वयम्बरवर्णनप्रसङ्गे कविना रूपकाङ्कारस्य सुन्दरम् उदाहरणं प्रकाशितम्। तत् पद्यम्-

**चतुः समुद्रीपरिखे नृपाणामन्तःपुरे वासितकीर्तिदारे।**
**दानं दया सूनृतमातियेयी चतुष्टयीरक्षणसौविदला॥**

(नैषध.10/28)

पद्येऽस्मिन् अभेदद्वारा समुद्रपरिखेऽन्तःपुरे कीर्तिद्वारा तथा दयादानोदारतादयो सौविदल्लाः वर्णिताः। अतएवात्ररूपकालङ्कारः परिलक्ष्यते। द्वादशसर्गेऽपि देव्याः सरस्वत्याः वचने रूपकसौन्दर्यं द्रष्टुं शक्यते। तद्यथा-

**भुवि भ्रमित्वाऽनवलम्बमम्बरे विहर्तुमभ्यासपरम्परापरा।**
**अहो महावंशममुं समाश्रिता सकौतुकं नृत्यति कीर्तिनर्तकी॥**

(नैषध.12/16)

कीर्तिरूपा नर्तकी सकौतुकं यथा तथा धनाभिलाषराहित्येन नृत्यतीति। अत्र अभेदद्वारा राज्ञवंशं, कीर्ति नर्तकी च उक्तमस्ति। अनेनात्र रूपकालङ्कारो वर्तते।

**दृष्टान्तालङ्कारः**- दृष्टान्तालङ्कारस्य लक्षणविषये काव्यप्रकाशे आचार्यमम्मटो वक्ति यत्-

**''दृष्टान्तः पुनरेतेषां सर्वेषां प्रतिविम्बनम् '' ( का.प्र.10/155 )।**
अर्थात् यत्र एकस्मिन् वाक्ये उपमेयस्य चोपमानस्य कथनं बिम्बप्रतिबिम्बत्वेन

भवति उभयोरपि च वाक्ययोः उपमानोपमेय साधारणधर्मादीनां परस्परं प्रतिबिम्बनं प्रतीयते तत्र दृष्टान्तालङ्कारो भवति। नैषधीयचरितमहाकाव्ये यथा-

**इष्टेन पूर्तेन नलस्य वश्याः स्वर्भोगमत्रापि सृजन्त्यमर्त्याः।**
**महीरुहा दोहदसेकशक्तेराकालिकं कोरकमुद्गिरन्ति॥**

(नैषध. 3/21)

**उपसंहारः-** इत्थं नैषधीयचरिते अलङ्काराणां नियोजनम् अपूर्वमेव अस्ति। विदूषां मते अलङ्काराणामलङ्कारणत्वं तदैव सम्भवति यदा तु रसं पोषयन्ति। नैषधकारस्य वैशिष्ट्यमिदं यत् नैषधीरयचरिते प्रयुक्ताः शब्दालङ्काराः अर्थालङ्काराश्च तत्तत् रषपोषणाय नितरां सक्षमास्सन्ति। यद्यपि केषूचित् स्थलेषु प्रयुक्तेन श्लेषेण काव्यमिदं दुर्बोधं जातं परं तत्रापि नैषधकारस्य वैशिष्ट्यमेव प्रतिभाषते। यतोहि काव्यस्य अन्ते तेन स्वमेव उल्लिखितम्-

**ग्रन्थग्रन्थिरिह क्वचित्क्वचिदपि न्यासि प्रयत्नान्मया**
**प्राज्ञंमन्यमना हठेन पठिती मास्मिन्खलः खेलतु।**
**श्रद्धाराद्धगुरुश्लथीकृतदृढग्रन्थिः समासादय-**
**त्वेतत्काव्यरसोर्मिमज्जनसुखव्यासज्जनं सज्जनः॥**

(नैषध. 22/152)

**।इति शम्॥**

# लेखकसङ्केतवीथी

1. **प्रो. रहसविहारी द्विवेदी** लब्धावसर आचार्यः, रानीदुर्गावती वि. वि.जबलपुरम्
3. **डॉ. भागीरथिनन्दः** साहित्यविभागः, श्री. ला. बा. शा. रा. सं. विद्यापीठम्, नवदेहली
4. **डॉ. सच्चिदानन्द तिवारी** उपनिदेशकः मुक्तस्वाध्यायपीठम्, रा. सं. संस्थानम्, नवदेहली
5. **डॉ. श्रीकान्त पण्डा** नवदेहली
6. **हरिओम शर्मा** नवदेहली
7. **प्रो. अगमकुलश्रेष्ठ** संस्कृतविभागः, दयालबाग इन्स्टीच्यूट, आगरा
8. **प्रो. सुन्दरी सिद्धार्थ** चेन्नई
9. **डॉ. धर्मेन्द्रकुमारसिंहदेवः** साहित्यविभागः, भोपालपरिसरः, रा. सं. संस्थानम्
10. **डॉ. कल्पना जैन** प्राकृत विभाग, श्री. ला. बा. शा. रा. सं. विद्यापीठ, नई दिल्ली
11. **डॉ. राजेश बत्रा** नई दिल्ली
12. **शमशेरसिंहः** नवदेहली
13. **गोपाल कुमार झा** परियोजनासहायकः, श्री. ला. बा. शा. रा. सं. विद्यापीठम्, नवदेहली
14. **डॉ. सत्येन्द्रपाण्डेयः** नवदेहली

15. **डॉ. नीवनजसोला** साहित्यविभागः श्री. ला. बा. शा. रा. सं. विद्यापीठम्, नवदेहली

16. **प्रो. रमेशचन्द्रचतुर्वेदी** लब्धावसर आचार्यः, श्री. ला. बा. शा. रा. सं. विद्यापीठम्, नवदेहली

17. **प्रो. रमेशकुमारपाण्डेयः** शोधप्रकाशनविभागाध्यक्षः, श्री. ला. बा. शा. रा. सं. विद्यापीठम्, नवदेहली

18. **डॉ. सूर्यमणिरथः** साहित्यविभागः, श्रीसदाशिवपरिसरः, रा. सं. संस्थानम्, पुरी

20. **डॉ. व्रजसुन्दरमिश्रः** एस्. जी. महाविद्यालयः, कनिकापडा, जाजपुरम्

21. **डॉ. अरविन्द कुमार** साहित्य विभाग, श्री. ला. बा. शा. रा. सं. विद्यापीठ, नई दिल्ली

22. **अनिलकुमारः** नवदेहली

23. **सतीशकुमारः** नवदेहली

24. **प्रेमप्रकाशनैनवालः** नवदेहली

25. **डॉ. रामकुमारशर्मा** साहित्यविभागः, जयपुरपरिसरः, रा. सं. संस्थानम्

26. **प्रो. प्रभुनाथद्विवेदी** लब्धावसर आचार्यः, महात्मागान्धीकाशी-विद्यापीठम्, वाराणसी

27. **प्रो. अमिता शर्मा** साहित्यविभागः, श्री. ला. बा. शा. रा. सं. विद्यापीठम्, नवदेहली

28. **डॉ. राजकुमारमिश्रः** हरियाणासंस्कृतविद्यापीठम्, बघौला

29. **प्रो. व्रजकिशोरनायकः** स्नातकोत्तरसाहित्यविभागः, श्रीजगन्नाथ-संस्कृतविश्वविद्यालयः, पुरी

30. **डॉ. भारतभूषणरथः** साहित्यविभागः, रा. सं. विद्यापीठम्, तिरुपतिः

31. **डॉ. सत्यनारायण आचार्यः** साहित्यविभागः, रा. सं. विद्यापीठम्, तिरुपतिः

32. **डॉ. सुमनकुमार झा** साहित्यविभागः, श्री. ला. बा. शा. रा. सं. विद्यापीठम्, नवदेहली

33. **डॉ. जयकुमार उपाध्ये** प्राकृतविभागः, श्री. ला. बा. शा. रा. सं. विद्यापीठम्, वदेहली

34. **विवेकानन्दभट्टः** नवदेहली

35. **राजकुमारपीलवालः** नवदेहली

36. **जीवनकुमारः** परियोजना सहायकः, श्री. ला. बा. शा. रा. सं. विद्यापीठम्, नवदेहली

